| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९९९ | २९ | ण | णी |
| १०२६ | १७ | स्याक्रमे | स्यातिक्रमे |
| १०२९ | ५ | लिङ्गानि | लिङ्गानि चिन्हानि |
| १०४४ | ७ | गुणो | गुण |
| १०५० | १२ | प्रवंचो | प्रचौ |
| १०६८ | ११ | आ | अ |
| १०७० | २२ | महा | एवंनानिउप |
| १०८९ | १२ | र्य | र्या |
| १११६ | २१ | न्द्रा | न्द्रादि |
| | | अध्यायः ९ | |
| ११५० | १९ | रय | रथ |
| " | २० | हि | त्रि |
| ११५६ | १६ | न्कं | क्रं |
| ११६० | २७ | शं | र्शा |
| १२०० | १५ | स्थां | कथां |
| " | " | कथां | कथां |
| १२०८ | २६ | तृ | तृ |
| १२१५ | १५ | स्यान्द | स्यांद |
| १२२० | २७ | पर्क | मधु पर्क |
| १२४५ | ६ | ह | हा |
| १२४८ | २७ | प्रणिहिताः | मूलप्रणिहिताः |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | अध्यायः १० | |
| १२५२ | १ | ला | ली |
| १२७९ | २८ | व | क |
| १२९० | २० | श्लो | झल्लमल्लश्चेति श्लो |
| १२९१ | २३ | संकी | ० |
| | | अध्यायः ११ | |
| १३४८ | ९ | येन | यो |
| १३६१ | २५ | वीरह | वीर |
| १३७८ | २६ | प | व |
| १४०० | ८ | व | प |
| १४०४ | १९ | य | र्यं |
| १४०७ | २ | : | यः |
| " | १६ | त्कं | क्तं |
| १४६३ | २१ | ति | न्ति |
| १४६८ | २८ | आ | अ |
| | | अध्यायः १२ | |
| १५०४ | ७ | क्ता | क्त्या |
| १५२१ | ४ | जगत | ततम |
| " | " | स | त |
| १५२५ | १३ | देवता | वेदा |
| १५३३ | २३ | वानप्रस्थं | वानप्रस्थ्यं |
| १५४१ | १५ | न्या | न्न्या |

# रामचन्द्रटीकाशुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | **अध्यायः १** | |
| २२ | २७ | नाविरकरोत् | नाविष्करोत् |
| २६ | ८ | इन्द्रियांणि | इन्द्रियाणि |
| ३८ | २० | बाहुरुपादतः | बाहूरुपादतः |
| ६३ | १३ | शिक्षया | इच्छया |
| ६४ | २० | कीदशः | कोदशः |
| ६४ | २२ | एवा | एषा |
| | | **अध्यायः २** | |
| १०३ | १ | उक्त | उक्तः |
| ११९ | ४ | शगीरस्य | शरीर |
| १५५ | २८ | सह्त्य | संहृत्य |
| १६९ | १२ | सग्यक् | सम्यक् |
| २१७ | २० | आवमानस्य | अवमानस्य |
| २१८ | ७ | तिरस्कारंकर्त्ता | तिरस्कारकर्ता |
| २२७ | ५ | अस्ये | अस्य |
| २२७ | १८ | इमान | इमान् |
| २४२ | १८ | तिष्ठति | तिष्ठत |
| २४२ | ३० | शिष्यस्यं | शिष्यस्य |
| २४५ | १६ | संश्रवे. निकटे | असंश्रवे, अनिकटे |
| २६७ | २३ | गुर्वर्थे | गुर्वर्थं |
| | | **अध्यायः ३** | |
| २७४ | २५ | व्रतेन्तर्भवति | व्रतेऽन्तर्भवति |
| २८२ | १८ | कनकंवर्णा: | कपिलवर्णाः |
| ३०९ | २० | स्वदारान्निरतः | स्वदारानिरतः |
| ३११ | ११ | गच्छेतः | गच्छतः |
| ३१६ | २३ | वर्द्धते | वर्धते |
| ३२० | २६ | वैवाहिकेऽग्ने | वैवाहिकेऽग्नौ |
| ३४० | २६ | गाह्यं | गृह्यं |
| ३४५ | ३ | पुनर्बालिंहरेत् | पुनर्नबलिंहरेत् |
| ३४६ | १८ | गृह | गृहं |
| ३४७ | २६ | आगतान्सख्यादीन् | आगतान्सख्यादीन् |
| ३७० | २४ | यमातामहादयः | मातामहादयः |
| | | **अध्यायः ४** | |
| ४५० | ३ | चतुर्भागं | चतर्थभागं |
| ४५९ | ११ | दुःखमूल | दुःखमूलम |
| ४६९ | १८ | नादिष्टति | नानिष्टेति |
| ४७६ | २१ | मृदङ्गादीनि | मृदङ्गामादीनि |
| ४८० | ३० | योयथा | योयथा |
| ५५८ | ८ | कदयंस्य | कदर्यस्य |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५७० | १३ | पिष्टप | विष्टपम् |
| ५७८ | २७ | निर्नुदेत | निर्णदेत् |
| ५७९ | १२ | भृत्यंश्च | भृत्यांश्च |
| | | **अध्यायः ५** | |
| ६२३ | ५ | घ | च |
| ६२९ | १२ | सबन्धः | संबन्धः |
| ६३८ | २० | दर्वीगूर्ध्वं | दर्वागूर्ध्वं |
| ६४७ | ४ | एतवद्वत्सरा | एतद्वत्सरा |
| ६४८ | २६ | वृथाजाता | वृथाजाताः |
| ६८४ | १८ | विरक्त | विरिक्तः |
| | | **अध्यायः ६** | |
| ७०३ | ६ | उत्तरायणम् | तुरायणम् |
| ७३१ | १३ | अवेक्षेत् | अवेक्षेत |
| ७३९ | ६ | इद्रियाणा | इन्द्रियाणा |
| | | **अध्यायः ७** | |
| ७६३ | २१ | केपि | केऽपि |
| ७६७ | २ | कोपनत्वात् | कोपमत्वात् |
| ७८७ | २७ | आयतः | अयत्तः |
| ८१० | २६ | कर्थयति | कर्षयति |
| ८३१ | २० | क्रंन्द | क्रन्द |
| ८४६ | ५ | शनैर्यायात | शनैर्यायात् |
| ८५३ | १४ | भेदकत्कृतं | भेदकक्तं |
| | | **अध्यायः ८** | |
| ८७८ | १४ | समै | सभ्यै |
| ८८२ | ७ | संर्व | सर्व |
| ८८६ | ९ | अथादिहीनौ | अर्थादहीनौ |
| ८९१ | २५ | सङ्ख्या | सङ्ख्या |
| ९२२ | १४ | रस्थितत्वात् | रस्थितत्वात् |
| ९२३ | १७ | सान्ववयन् | सान्त्वयन् |
| ९२७ | २८ | ब्रुवतस्युः | ब्रुवतःस्युः |
| ९६८ | २३ | बाह्ये | वाह्ये |
| ९७४ | १६ | वृत्थि | वृद्धि |
| ९९३ | ६ | उभो | उभौ |
| १०१३ | ७ | रदेत्तं | वेदेत्तं |
| १०२२ | ७ | पालभवेत् | पालेभवेत् |
| १०२८ | २७ | स्नामितानि | स्नावितानि |
| १०२९ | ७ | वक्ष्य | वीक्ष्य |
| १०२९ | २४ | सीमाया | सीमायां |
| १०५८ | १ | अधागेतिः | अधोगतिः |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०६५ | ६ | धरधट | धरिर्धटः |
| ११०७ | २६ | तत | तत् |
| | | **अध्यायः ९** | |
| ११२२ | १७ | औपसनाग्नि | औपासनाग्नि |
| ११९७ | ७ | द्व | द |
| १२१५ | १९ | यलब्धच | यल्लब्धंच |
| १२३० | २५ | क्रिया | क्रियया |
| १२३३ | १२ | लिखन | लेखन |
| १२५० | २४ | मर्शने | दर्शने |
| | | **अध्यायः १०** | |
| १३०४ | १ | क्षेत्र | क्षत्र. |
| १३२२ | २५ | क्षौमाविकारि | क्षौमाविकानि |
| | | **अध्यायः ११** | |
| १३५३ | ५ | देवचं | देवस्वं |
| १३६६ | २६ | सं र्ग | संसर्ग |
| १३६९ | १७ | अनिकृतैनसः | अनिष्कृतैनसः |
| १३९५ | ९ | पक्षान्तर | पक्षान्तरे |
| १४७३ | ६ | अधमर्षणं | अघमर्षणं |
| | | **अध्यायः १२** | |
| १४९२ | २७ | स्यितः | स्थितः |

श्री

मानवधर्मशास्त्रटीका

# भट्टगोविन्दराजीया

भागद्वयात्मकस्यटीकापद्धोपेतस्यमानवधर्मशास्त्रस्यपूरणरूपेणकल्पिता

मामदार रावसाहेब तथा कंपेनियन आफ धि स्टार आफ इण्डिया इत्युपपदधारिणा, भारतवर्षीयगव्हर्नर-
जनरलकौन्सलाभिधनीतिशास्त्रव्यवस्थाप्रणेतृमण्डलान्तःपातिना, रायलएशियेटिकसोसायटी रायल-
जिओग्राफिकल सोसायटी स्टॅटिस्टिकल सोसायटीत्यभिधानां विद्वत्पर्षदां सभासदा
ऽऽद्यपर्षदो मुंबापुरस्थशाखायाउपाध्यक्षेण,

मुंबापुरगतयुनिव्हर्सिटीनामकसर्वविद्योपचय विचारमुख्यस्थानस्थव्यवस्थापकानां सिण्डिकेटनामकमण्डलान्तर्गतेन,

मुंबापुरस्थहायकोर्टाभिधन्यायाधिष्ठानगतगव्हर्मेण्टवकीलसंज्ञकेन,

मण्डलिकोपाह्वेन

## नारायणसूनुनाविश्वनाथेन




शोधिता

---

मुम्बापुर्यां

गणपतकृष्णाजीनामकमुद्रायन्त्रालयेतदध्यक्षेणआत्मारामकान्होबाभिख्येनमुद्रिता

प्रकाशिताच



शालिवाहनशाके १८०८ — इसवीसन १८८६

# उपोद्घातः

पुरा गतवत्सरान्ते मानवधर्मशास्त्रं टीकाषट्कोपेतं ईशसत्तयाप्रसिद्धिमगमत् । तत्प्रस्तावनायामनुपलब्धं टीकाषट्कं निर्दिष्टं तदन्तर्गतैवेयं भट्टगोविन्दराजकृता मन्वाशयानुसारिणीनाम्नी मानवधर्मशास्त्रटीका सुदैवात्प्राप्ता । सेयं पूर्वग्रन्थस्यैवपूरणरूपेणाधुनादीयते ।

एतट्टीकायाएकंपुस्तकं औरंगाबादनिवासिनां वेदशास्त्रसंपन्नानां ज्योतिर्विद्वरिकृष्णव्यंकटरामशर्मणां सकाशाल्लब्धम् । तस्यैवप्रतिलेखनं कृत्वा तस्मादेतन्मुद्रणमकारि । परन्तु तस्यात्यन्तकीटधृतत्वाद्ग्रन्थमुद्रणं कर्तुमशक्यमासीत् ।

अत्रान्तरे जबलपुरनिवासिभिर्गाडगिळेत्युपनामकभार्गवरावशर्मभिर्नागपुराधिपतिपुस्तकालयादेकंपुस्तकमानीयप्रेषितम् । तथाच पुण्यपत्तनस्थदक्षिणपाठशालापुस्तकालयाच्छर्मण्यदेशस्थजालिसाहिबहस्तगतं विद्याप्रदानाधिकारिभिः चाट्फिल्डसाहिबनामभिरानीय प्रापितम् तस्मात्तेषांमहान्तमुपकारंस्मरामि । एतत्पुस्तकद्वयेन मुद्रणे महत्साहाय्यमभूत् । अस्मिन्पुस्तकद्वये नागपुरपुस्तकालयस्थं प्रायोऽशुद्धंवर्ततेऽतोस्यशोधनं नाभूदित्यनुमीयते । तत्तुपुण्यपत्तनस्थपुस्तकादेवप्रतिलिखितमितिभाति । पुण्यपत्तनस्थंतुप्रायःशुद्धमेव तत्तुकेनापिविदुषाशोधितमिति तत्रस्थाः क्वचित्क्वचित्स्थले लिखितालेखाएवज्ञापयन्ति ।

अस्याः प्रथमद्वितीयाध्यायौ इण्डियाआफिसनाम्नःपुस्तकालयस्थात्कोलब्रूकनाम्नःपुस्तकसंग्रहाल्लब्धेन डाक्टररास्टैः प्रेषितेन पुस्तकेन डाक्टरजालिभिः बिब्लिओथिकाइण्डिकानाम्नि संग्रहे मुद्रितेन मनुटीकासंग्रहनाम्नापुस्तकेनच तुलितौ ।

उपरिनिर्दिष्टेषुतिसृषु पुस्तकेषु नवमाध्याये द्विसप्ततितमश्लोकादारभ्याध्यायसमाप्तिपर्यन्तं टीकाग्रन्थोभ्रष्टस्तस्मादेकादेव पुस्तकात्सर्वाणि प्रतिलिखितानीति ज्ञायते । तथापि तत्प्राप्त्यर्थं यत्नश्चलितएव ।

अस्मिन्ग्रन्थे मूलश्लोकाः प्रतीकरूपेणैव दत्तास्तत्रापि यत्र यत्र मूले पाठभेदोदृष्टस्तत्र तत्र विशेषदर्शनार्थं सतु रक्षितएव । श्लोकानुक्रमंतुपूर्वग्रन्थस्यैवाकरवम् ।

उपलब्धपुस्तकेषु ये मूलेतरश्लोकास्ते क्षेपकरूपेण [ ] इति विशेषचिन्हयुक्तालिखिताः ।

अस्मिन्ग्रन्थे लब्धपुस्तकानां संज्ञायथा ।

गो॰ १ = औरङ्गाबाद पत्तनाल्लब्धपुस्तकात्प्रतिलेखितम् ।

गो॰ २ = नागपुरपत्तनाल्लब्धम् ।

गो॰ ३ = इण्डियाआफिसपुस्तकालयाल्लब्धम् ।

गो॰ ४ = बिब्लिओथिकानाम्नि संग्रहे मुद्रितम् ।

गो॰ ५ = पुण्यपत्तनस्थदक्षिणपाठशालायाः प्राप्तम् ।

एतानि पुस्तकानि समवलोक्य टीकागतान्पाठभेदानिश्चिताः टिप्पनीरूपेण प्रदर्शिताश्च । इत्यलं विस्तरेण । अनेन कर्मणा श्रीलक्ष्मीकेशवौ प्रीयेताम् ।

विश्वनाथशर्मा

भाद्रपदशुक्ल १५ शालिवाहन शाके १८०८.

# श्रीलक्ष्मीकेशवौ जयतः।



**ॐनमोविघ्नराजाय** । संसाराध्वगतागतक्लमतृषापीयूषमीशंशनैर्ध्यात्वामर्गलसंप्रदायगुरुतःप्रामेमनोः शासने ॥ दृष्ट्वाग्रन्थकृदाशयाननुसृतिंव्याख्यान्तराणामिमांटीकांशास्त्रकृदाशयानुसरिणींगोविन्दराजोव्यधात् ॥ ॥ इहभृगुशिष्यःकश्चिदविच्छिन्नपारंपर्यतः स्मृत्यर्थप्रबन्धमिदमाह ॥

**[ॐस्वयंभुवे नमस्कृत्य ब्रह्मणेऽमिततेजसे ॥ मनुप्रणीतान्विविधान्धर्मान्वक्ष्यामिशाश्वतान् ॥ १ ॥]**

स्वेच्छागृहीतशरीराय प्रजापतयेऽपरिमिततेजसे प्रणम्य मन्वभिहितान्नानाप्रकारान्धर्मानदृष्टार्थकर्तव्यतारूपानिष्टानिष्टप्राप्तिपरिहारप्रयोजनस्यवेदमूलत्वस्यैषामिष्यमाणत्वान्नित्यान्कथयिष्यामि । अधर्माणांवक्ष्यमाणानां अपीहपृथगप्रतिज्ञाननिन्दितकर्माभ्यासेन पातित्ये सति धर्मानुष्ठानानधिकारापत्तेर्धर्मप्रतिज्ञायामेवान्तर्भावात्मनुर्नाममहर्षिरशेषवेदार्थादिज्ञानेन प्राप्तमनुसंज्ञआगमपरंपरया सकलविद्वज्जनकर्णगोचरीभूतसर्गस्थितिप्रलयकरणाधिकृतः । स्वयंभुवइति क्रियाग्रहणमपिकर्तव्यमितिसंप्रदानत्वेचतुर्थी ॥ वेदार्थोपनिबंधकत्वेनछन्दस्तुल्यत्वात्स्मृतीनांनदुष्टा क्वचिदत्र छान्दसी रूपसिद्धिः ॥ [ १ ] **मनुमिति** । तंमनुंएकाग्रमासीनं अविक्षिप्तचित्तंस्थितंआभिमुख्येनादरतोगत्वा महर्षयोऽणिमादिगुणयोगान् महान्तऋग्यजुःसामदर्शनान्महर्षयोयथान्यायंशास्त्रोक्तमर्यादानतिक्रमेण प्रकर्षेण पूजयित्वेदंसमनन्तरवक्ष्यमाणंवाक्यमुक्तवन्तः ॥ १ ॥ **भगवन्निति** । सहि सर्वैश्वर्यैर्युतः सर्वेषांवर्णानांब्राह्मणादीनांशूद्रपर्यन्तानांनोस्माकं एव द्विजातीनांतथा ब्राह्मणक्षत्रियादिसंकरजातानां अनुलोमप्रतिलोमानांयावत्कृत्स्नंकृत्वा आनुपूर्व्यान्निषेकादिक्रमेण धर्मानस्माकंवक्तुंयोग्योभवसि ॥ २ ॥ **त्वमेक इति** । यस्मात्त्वमेवैकोस्य सर्वस्य शास्त्रस्य अकृतकस्येदंकर्तव्यमिदंनेत्येवंविधस्य यत्त्विदंशास्त्रंतत्कृत्वासाविति तत्र ग्रन्थविषयमतिगहनत्वादेवंरूपमेतदिति चिन्तयितुमशक्यस्यातिमहत्त्वादि यदेतदिति प्रमातुमशक्यस्य कार्यरूपानुष्ठेयरूपोयःपारमार्थिकोऽर्थस्तंवेत्सि सर्वशक्ते ॥ ३ ॥ **सइति** । समनुरपरिमिततेजामहर्षिभिर्महात्मभिःपरार्थकारिभिः । अतएव तेषांमहर्षीणामपि सतांधर्मप्रश्नांस्तेन प्रकारेण अभिगमनपूर्वकंसम्यक्पूजापूर्वकंच पृष्टः अभ्यर्चयित्वा तान्प्रत्येवमुक्तवान् श्रूयतामिति ॥ ४ ॥ **आसीदिति** । जगदुत्पत्तिस्थितिप्रलयानांधर्माधर्मनिमित्तकत्वात् तत्प्रतिपादनार्थत्वेनेदंशास्त्रंमहाप्रयोजनतया यत्नतोधिगन्तव्यमित्येतदर्थंजगदुत्पादकंप्रकरणमारभ्यते । तत्र प्राग्भाविनींतावदवस्थामनेन श्लोकेनाह इदंजगत्सृष्टेःप्राक् तमइवाभूत् । यतः कार्यात्मना सर्वस्य तदानींविनष्टत्वात्प्रत्यक्षेण न ज्ञातमलक्षणमविद्यमानलिङ्गतयाननुमेयंप्रत्यक्षपूर्वकत्वात् अनुमानादीनां तदसंभवे तेषामप्यभावात् । अप्रतर्क्यमनौपम्यतयापि गौरिव गवयइतिच तर्कयितुमशक्यमविज्ञेयमर्थापत्त्यापि जीवतोदेवदत्तस्य गृहादर्शनेन बहिर्भाववदेवं तत्सद्भावएव प्राप्त इत्यतआह । प्रसुप्तमिवेत्यागमादेवंरूपतास्य ज्ञायतइति यथासुषुप्तावस्थायामुपरतेन्द्रियमनोव्यापारः आत्मा भवत्येवंसकलकार्यप्रत्यस्तमये तदानींसमन्तात् जगदासीदिति स्वप्नदर्शनरहिता हि निद्रावस्थासुषुप्तिः ॥५॥ **ततइति** पूर्वोक्तावस्थानन्तरंस्वेच्छाचिकीर्षितशरीरपरिग्रहआत्माव्यक्तः प्रत्यक्षाद्यगोचरोध्यानैकगम्यत्वादुत्पादयन्नन्महाभूतानि पृथिव्यादीनि आदिग्रहणात् अन्यान्यपि महदादीनि तत्त्वानि वृत्तंप्राप्तमोजः सृष्टिसामर्थ्यंयेनासौप्रकाशोबभूव शरीरग्रहणंकृतवान् । तमोनुदः प्रलयस्य ध्वंसकः ॥ ६ ॥ **योसाविति** । योसावात्मातीन्द्रियेण मनसा ग्रहीतुमशक्यः ।

सूक्ष्मः सूक्ष्मबुद्धिग्राह्यत्वात् । सनातनोनित्यः । सर्वभूतमयः सर्वस्यतत्प्रभवत्वात् अचिन्त्योविलक्षणशक्तित्वात् । सएव स्वयंशरीरंजग्राह ॥ ७ ॥ सइति । सआत्मा नानाप्रकाराः प्रजाः स्रष्टुमिच्छन्नात्मगृहीतशरीरात् ध्यानमात्रेणैवापएव सृष्टेः प्राक् सृष्टवान् । तासु च वीर्यंस्वशक्तिं निषिक्तवान् ॥ ८ ॥ तदिति । तद्वीर्यंकाञ्चनमण्डंसंपन्नमतएवादित्यसमदीप्ति । तस्मिंश्च जातवानात्मेच्छया हिरण्यगर्भः । सर्वलोकोत्पादयिता पितामहइति वा संज्ञा तस्य ॥ ९ ॥ आपइति । आपोनाराशब्देन कथितायस्मात्तास्तस्य पुरुषस्यात्माख्यस्योक्तेन प्रकारेणापत्यानिता आपोयस्मादात्मनःपूर्वमयनमाद्यआश्रयः एत्यस्मिन्नित्ययनमिति कृत्वा तेनासौ नारायणःस्मृतः । इत्येवंपूर्वोक्तदार्ढ्यार्थैतत्त्वन्नामनिर्वचनम् । नरायणएवनारायणइत्यन्येषामपि दृश्यतइतिदीर्घेण ॥ १० ॥ यदिति । यत्तदात्माख्यमुक्तंवक्ष्यमाण नीत्या सर्वस्य कारणंवेदान्तोक्तयुक्त्यागमगम्यत्वात्सत्स्वभावंप्रत्यक्षाद्यगोचरत्वादसत्स्वभावमिव तेनोत्पादितः सपुरुषस्तत्रतत्र ब्रह्मशब्देन संकीर्त्यते॥११॥तस्मिन्निति।पूर्वोक्ते अण्डे सब्रह्मा यदृच्छया संवत्सरमासित्वात्मनआत्मगतेन ध्यानेनैव तदण्डंद्विखण्डंकृतवान् ॥ १२ ॥ ताभ्यामिति । ताभ्यामण्डकपालाभ्यांसब्रह्मैकेन दिवं अपरेण च भूमिं निर्मितवान् । तयोश्च मध्ये आकाशंदिशश्चान्तरालदिग्भिः सहाष्टावपांस्थानंच स्थिरंसमुद्राख्यंनिर्ममे । एतच्च तत्त्वैर्महदादिभिर्निर्मितवान् ॥१३॥ तत्त्वेवमेवेत्येतद्दर्शयितुमाह उद्बबर्हेति।प्रजापतिशरीरादेवतत्त्वसृष्टिरिति वेदान्तदर्शनमतोनेहाप्रस्तुता । शब्दार्थीभूतंप्रधानमात्मशब्देनोच्यते ।तथाच॥एतस्माज्जायते प्राणोमनःसर्वेन्द्रियाणि च ।खंवायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी॥ इत्येवमादिनोपनिषत्सु परिकल्पितभेदावस्थानादात्मनइदंसर्वंकल्पितरूपंजायतइत्युक्तम् सब्रह्मोद्धृतवानात्मनएव शरीरात्मनो नित्यानुमेयत्वादसदात्मकमिव युगपज्ज्ञानानुत्पत्तिलिङ्गेन तत्सत्तावगतेःसदसदात्मकंमनसः पूर्वं अहंकाराख्यंतत्त्वमभिमन्तारमहमिति अभिमानाख्यंतत्कार्ययुक्तंस्वकार्यकरणसमर्थमुद्धृतवान् ॥ १४ ॥ महान्तमिति । अहंकारात्पूर्वंमहदाख्यंतत्त्वमात्मनउत्पन्नत्वादुद्धृतवान् यान्युक्तानि तानि च सत्त्वरजस्तमआख्यगुणत्रययुक्तानि तथाशब्दस्पर्शरसरूपगन्धानांविज्ञानजनकानि शनैर्वेदान्तोक्तक्रमेण श्रोत्रत्वक्चक्षुर्जिह्वानासिकाख्यानि बुद्धीन्द्रियाणि च शब्दात्पायूपस्थहस्तपादवागाख्यानि च कर्मेन्द्रियाणि इन्द्रियत्वाद्विषयाणांग्रहीतॄणि इत्युक्ते विषयसृष्टिरप्यर्थादुक्तैव ॥ १५ ॥ तेषामिति । तेषांषण्णांपूर्वप्रयुक्तानांमहतः शब्दादितन्मात्राणांचामितौजसामनंतकार्यनिर्वर्तनेनातिवीर्यवतां ये सूक्ष्माअवयवास्तानात्ममात्रास्वधिकारभागेषु योजयित्वा सर्वाणि भूतानि मनुष्यादीनि निर्मितवान् ॥१६॥ यन्मूर्त्यवयवाइति।यस्मान्मूर्तिसंपादकाः आकारनिवर्तकाःसूक्ष्मास्तन्मात्राहंकाराख्याअवयवास्तस्यात्मनोविकल्पन्ते।यस्य संबन्धेन इमानि वक्ष्यमाणानि भूतान्याश्रयन्ति कार्यत्वेन । तस्मात्तस्यात्मनोयामूर्तिः स्वभावस्तामेवपरिणतांशरीरमिति लौकिकान्नुबन्तीत्येवंशरीरनिर्वचनमुक्तक्रमोत्पत्तिदार्ढ्यार्थं ॥ १७ ॥ तदिति । तद्ब्रह्मतन्मात्राअहंकारावस्थमनन्तरंमहाभूतान्याकाशादीनि आविशन्ति । तन्मात्रेभ्यउत्पद्यन्ते सहकर्मभिः । यथाक्रमधारणसंग्रहपाकचरणात्सावकाशदानाख्यैस्तत्कार्यैर्मनश्चावयवैः शुभाशुभसंकल्पैः सूक्ष्मैर्बहिर्दृश्यत्वाभावात् । सर्वभूतकृच्छुभाशुभसङ्कल्पप्रभवकर्मनिमित्तत्वात् जगतः अव्ययमविनाश्याविशन्त्यत्यहंकारात्तस्योत्पत्तेः ॥ १८ ॥ तेषामिति । पुरुषप्रकृतत्वात्तन्मात्राहंकाराणांपूर्वतरपूर्वतरप्रस्तुतत्वाच्च महतएवंतेषांसमानांपुरुषोत्पन्नत्वात्पुरुषाणांसूक्ष्माभ्योमूर्तिमात्राभ्यः शरीरसंपादकेभ्योभागेभ्यः इदंजगन्नश्वरंसंभवत्यव्ययादनश्वरायद्यत्कार्यंतत्तदस्थिरं । यद्यदुत्पत्तिकारणंतत्तत्कार्यापेक्षयास्थिरमित्येतत्प्रतिपादनार्थः शेषोऽनुवादः ॥ १९ ॥ आद्याद्यस्येति । एषांपूर्वतरश्लोकप्रस्तुतानांभूतानामध्यादाद्यस्याद्यस्याकाशादेः संबन्धिनंशब्दादिकंपरःपरोप्राप्वादिर्गृह्णा

(१) च=महान् (गो० ३)

तिआकाशादिगुणत्वंशब्दादीनांवक्ष्यते। तथा आकाशादिश्च क्रमशएवमाकाशादिवर्जं अन्येषांद्वैगुण्यमाभावाह । योयइति। एषांयोयोयावतिथः योयावतांपूरणोद्वितीयादिः सतावद्गुणोद्विगुणस्त्रिगुणइत्येवमादिर्मन्वादिभिः स्मृतः ॥२०॥ **सर्वेषामिति**। सब्रह्मा सर्वेषांनामानि ब्राह्मणइत्येवमादीनि कर्माणि चाध्ययनादीनि पृथक्पृथक् यस्य यान्येवपूर्वकल्पेऽभूवंस्तानिसुप्तप्रबुद्धवत्प्राक्कल्पाधीतप्रतिभातवेदशब्देभ्यएव सृष्ट्यादौ निर्मितवान् लौकिकीश्च व्यवस्थाःपृथगिति॥२१॥**कर्मात्मनामिति**। कर्माङ्गभूतानांदेवानां प्राणवतामिन्द्रादीनां यतोऽप्राणाअपि यक्षादयोदेवाःसन्ति। साध्यानांदेवगणानांदेवविशेषाणांसमूहं ज्योतिष्टोमादिकंच कल्पान्तरेप्यनुष्ठानान्नित्यंसृष्टवान्। साध्यगणस्य सूक्ष्मत्वात् पृथङ्निर्देशः ॥२२॥ **अग्निवायुरविभ्यइति**। ऋग्यजुःसामाख्यंब्रह्मत्रयंसनातनंनित्यमपि सूक्ष्मादौ दैव्या शक्त्याग्निवायुरविभ्यआकृष्टवान्। यज्ञसिद्ध्यर्थं आगमकत्वाच्च नातिशक्यमेतत्। तथाच ऋग्वेदएवाग्नेरजायतेत्यादिब्राह्मणम् ॥२३॥ **कालमिति**। आदित्यादिगतिप्रतिबन्धप्रवृत्तिमान् कालः। कालविभक्तयोमासाद्याः नक्षत्राणि अश्वयुक् प्रभृतीनि। ग्रहाअर्कादयः। नदीसमुद्रपर्वतसमविषमस्थानानिच। अत्रससर्जेतिवक्ष्यमाणक्रिया॥२४॥**तपइति** रतिश्चेतोनिवृत्तिः। इमा वक्ष्यमाणादेवादिकाः प्रजाउत्पादयितुमिच्छंन्निमामेतत्श्लोकोक्तांपूर्वपठितांचसृष्टिंकृतवान्॥२५॥**कर्मणामिति**। अयंधर्मोऽतस्तत्साधकंदानादिकर्तव्यं। अयंपुनरधर्मोऽतस्तत्संपादकंचौर्यादि नकार्यमिति। एवंदानचौर्यादिकर्मणांविभागाय धर्माधर्मौ पृथक्पृथक् कृतवान्। धर्माधर्मफलभूतैश्च द्वन्द्वैः परस्परविरुद्धैः पुत्रोत्पत्तिविनाशादिभिःसुखदुःखैरादिशब्दात्क्षुत्सौहित्यादिभिश्चेमाः प्रजायोजितवान्॥२६॥ **अण्व्यइति**। पञ्चानां तन्मात्राणांयाः सूक्ष्ममात्रा भागाविनाशिन्योविपरिणामित्वात्ताभिः सहोक्तवक्ष्यमाणमिदमुत्पद्यते। क्रमेण सर्वत्र तासामनुस्मृतत्वात्। तत्त्वैर्विनैव समनन्तरोक्तवक्ष्यमाणासृष्टिरित्येतद्भ्रांतिनिराकरणाय पुनस्तत्त्वोद्भवत्वंसृष्टिमध्ये स्मारयति ॥ २७ ॥ **यमिति**। यंजातिविशेषंसिंहादिकं यस्मिन्कर्मणि द्विरदमारणादौ प्रजापतिः सृष्ट्यादौ नियुक्तवान्। सजातिविशेषः प्रथमसृष्ट्युत्तरकालमपि स्वार्जितकर्मवशेन यदायदा सृज्यमानोभवति तदातदा तदेव द्विरदमारणादि स्वयमेव भजते। नभूयः प्रजापतिनियोगमपेक्षते। जातिधर्मत्वेन प्रजापतिना तस्य कृतत्वात् ॥२८॥ एतत्प्रपंचार्थमाह **हिंस्राहिंस्रेइति**। हिंस्रंकर्मव्याघ्रादेः। अहिंस्रंरुरुप्रभृतेः। मृदु दयोपेतंब्राह्मणादेः। क्रूरं क्षत्रियादेः। धर्मोयथाकाकादेः परापत्यपोषणादिः यद्यपिनततस्तस्यधर्मोभवति परोपकारत्वाद्धर्मत्वमुपचर्यते। अधर्मोयथाबकादेः। एतदपिपूर्ववदुपचारतोवञ्चनापरत्वादुच्यते। ऋतंदेवानामनृतंमनुष्याणां। तदुक्तं सत्यावाचोदेवाअनृतंवैमनुष्याइति। यद्यपि धर्माधर्मग्रहणेन एतत्सर्वंगतंतथापि स्वरूपभेदावलंबनंपृथक्पृथक्द्वंद्वतोभिधानम्। तेषामन्यद्यदेवकर्म यस्य प्रजापतिरददात् दत्तवान् सृष्ट्यादौ तत्तदेव सृष्ट्युत्तरकालेप्यसौ जायमानःस्वयमेव भजते। यथा कर्मसृष्टंस्थावरजंगममिति वक्ष्यत्यतः प्राक्कल्पार्जितकर्मवशेन यद्यस्य सोऽददादिति द्रष्टव्यम् ॥ २९ ॥ तत्रैवदृष्टान्तमाह **यथेति**। यथा वसन्तादयः स्वावसरे स्वयमेव स्वानि कर्माणि चिन्हभूतानि कुर्वन्ति तद्वत्कर्माणि हिंस्रादीनि प्राणिनः ॥ ३० ॥ **लोकानामिति**। अग्नौप्रास्तेतिवक्ष्यमाणन्यायेन पृथिव्यादिलोकबाहुल्यार्थंमुखादिभ्योयथाक्रमं ब्राह्मणाद्यान् दैव्या शक्त्या निर्मितवान्। तथाच ब्राह्मणोस्यमुखमासीदित्यादिलिङ्गम्॥३१॥**द्विधेति**। सब्रह्मा शरीरंद्विभागंकृत्वा एकेनार्धेन पुमान्संपन्नोऽपरेण स्त्री सतस्यामैथुनधर्मेण विराजाख्यंपुरुषंसृष्टवान् ॥ ३२ ॥ **तपइति**। सोनन्तरोक्तोविराट् तपः कृत्वा यंस्वयंसृष्टवांस्तंमांजानीत एतस्यसर्वस्योत्पादयितारं हे द्विजश्रेष्ठतमाः ॥ ३३ ॥ **अहमिति**। अहंप्रजाः स्रष्टुमिच्छंस्तपः सुदुश्चरंकृत्वा प्रजापतीन् महर्षीन्दश प्रथमतः सृष्टवान् ॥ ३४ ॥ आह तांश्च **मरीचिमिति** ॥ ३५ ॥ **एतइति**। एतेदशबहुतेजस्काःसमान्यान्मनून्

(१) दानादि–कर्म (गो०२)

सृष्टवन्तः । तथा देवान्देवनिकायान् महर्षींश्चापरिमिततेजस्कांस्तेषांसर्वेषांमनूनांमन्वन्तरे एकैकस्य सर्गाद्यधिकारः ॥ ॥ ३६ ॥ **यक्षरक्षःपिशाचांश्चेति** । यक्षावैश्रवणामात्याः । रक्षांसि रावणादीनि । पिशाचामरुभूम्यादिवासिनः प्राणिविशेषाः । गन्धर्वाश्चित्रसेनादयः । अप्सरसोमेनकाद्याः । असुराविरोचनादयः । नागास्तक्षकाद्याः । सर्पाअहयः । सुपर्णागरुत्मन्तः । पितृणांसोमपादीनां स्वस्थानसमूहानसृजत् इतिवर्तते एवमुत्तरत्रापि ॥ ३७ ॥ **विद्युतइति** । रोहितंशक्रोत्पातइतिप्रसिद्धम् । नानावर्णंधनूरूपमिन्द्रधनुः । उल्का रेखाकारमन्तरिक्षात्पतज्ज्योतिः कदाचिद्रात्रौदृश्यते । निर्घातःक्षित्यन्तर्गतउत्पातध्वनिः । केतवोदण्डाद्याकाराणिज्योतींषि । अन्यान्यपि ज्योतींषि उत्कृष्टापकृष्टानि ॥ ३८ ॥ **किन्नरानिति** । किन्नराःकिंचिन्नरशरीराअश्वमुखाः अन्ये तुविपरीताः । विहंगमाःपक्षिणः । पशवोगवाद्याः । मनुष्याणांपशुत्वेपि प्राधान्यात् पृथक्ग्रहणं । व्यालाः सिंहाद्याउत्तराधरदन्तयुक्ताः ॥ ३९ ॥ **कृमिकीटपतङ्गानिति** । कृमयोभूमिशरणाः । कीटाः कृमिभ्यः किंचित्स्थूलाः । पतङ्गाः शलभाः । स्थावरंवृक्षवनस्पत्यादिभेदेन नानाप्रकारम् ॥ ४० ॥ **एवमिति** । अनेनप्रकारेणतैर्मुनिभिर्मदाज्ञया सृज्यमानप्राणिगतकर्मानुरूपेणेदंतपोबलात्सृष्टम् ॥ ४१ ॥ **येषामिति** । येषांभूतानांयथारूपंकर्म तत्तथैव इह शास्त्रे कीर्तितमेव । युष्माकंयतोनामनिर्देशादेवदेवताद्योतनात् द्युतिस्थानाद्वांदेवताः यक्षणाद्यक्षाइत्येवमादिकर्मप्रतिपत्तिः । इदानींयेन कर्मसंबन्धेन जायन्तेतंवक्ष्यामीतिकेचित् । अथवा येषांयादृशंकर्मेहसंसारेऽस्मिन्पूर्वैरपि कथितं यथौषध्यःफलपाकान्ता इत्येवमादि तत्तथाभिधास्यामि यथाक्रमयोगंचेति ॥ ४२ ॥ **पशवइति** । जरायुर्गर्भसंपातस्तत्रादौसंभवन्ति । ततस्तन्मुक्ताजायन्ते ॥ ४३ ॥ **अण्डजाइति** । अण्डआदौ संभवन्ति ततोजायन्ते । नक्रः शिशुमाराख्यःप्राणी । कच्छपः कूर्मः । स्थलजानि कृकलासादीनि । औदकानि च शङ्खादीनि ॥ ४४ ॥ **स्वेदजामिति** । स्वेदः पार्थिवद्रव्याणांतापेनान्तःक्लेदः । अन्यदपि च यद्दंशमशकादिसदृशंपिपीलिकादि तत् यूकामत्कुणाःस्वेदादेवजायन्ते ॥ ४५ ॥ **उद्भिज्जास्तरवइति** । ऊर्ध्वंभुवंभित्वा वृक्षाजायन्ते तेतुकेचिद्बीजादेव जायन्ते । अन्येतु बीजात्काण्डाच्च शाखैर्बहिर्भूमौरोपिताद्वृक्षीभवन्ति । अधुना येषांतु यादृशंकर्मेति यदुक्तं तद्दर्शयति । औषध्यइति । ओषधीनांव्रीह्यादिकानांफलपाकेनैवान्तस्तेनताः शुष्यन्ति । बहुपुष्पफलंउपगच्छन्ति । बहुना संयुक्ताभवन्ति ॥ ४६ ॥ **अपुष्पाइति** । वनस्पतीनांपुष्पमन्तरेणैव फलानि भवन्ति । वृक्षाः पुनः पुष्पफलेनोभयेनापि युक्ताः भवन्ति ॥ ४७ ॥ **गुच्छगुल्ममिति** । मूलतएव येषांलतावृंदंभवति । नतु प्रकाण्डानि ते गुच्छाः मल्लिकाद्याः गुल्मास्त्वस्पष्टह्रस्वप्रायलतात्मकाः अप्रकाण्डाः पुष्पकाद्याः । तृणजातयोदूर्वाद्याः प्रतानास्तन्तुरूपाः । त्रपुसालाबुप्रभृतयः वल्योव्रतत्योगुडूच्याद्याः ॥ ४८ ॥ **तमसेति** । सत्वरजस्तमआख्यागुणाः तत्रैते वृक्षादयः पदार्थाविविधदुःखोत्पादनरूपेण प्राग्जन्मार्जितदुष्टकर्महेतुना तमसा व्याप्ताभवन्ति । यद्यपि सर्वएव कश्चिदन्तरेव चेतयन्ते तथाप्येते संज्ञाकार्यस्याव्यवहारादेर्बहिरभावादन्तःसंज्ञाउच्यन्ते । सत्त्वरजोलेशस्यापिसद्भावात्सुखदुःखान्विताः अपि भवन्ति ॥ ४९ ॥ **एतदन्ताइति** । स्थावरावसानाः ब्रह्मप्रधानाः संसारोत्पत्तयोनित्यंघोरेभीषणेऽस्मिन् भूतानांक्षेत्रज्ञानांसंसारे बहुशः शरीरादानत्यागलक्षणाः सर्वदा नश्वराउक्ताः ॥ ५० ॥ एवंसृष्टिंप्रदर्श्य इदानींप्रलयंदर्शयितुमाह **सर्वमेवमिति** । अनेन प्रकारेणेदंमांच सृष्ट्वा सप्रजापतिः अचिन्त्यशक्तिः पुनः आत्मन्येवान्तर्धानंकृतवान् । शरीरत्यागेन सृष्टिकालं प्रलयकालेन विनाशयन् प्राणिनांकर्मवशात्स्वेच्छयाच पुनःपुनः सर्गसंहारौ करोतीत्यर्थः ॥ ५१ ॥ यदा सदे-

( १ ) यतो=यावतो (गो० ३,५).

( २ ) यूकामत्कुणाःस्वेदादेवजायन्ते=ऊष्मणःस्वदोदेवजायते ( गो० २,५ )

वइति ।१यदा सप्रजापतिरिच्छति तदेदंजगदुत्पत्यवस्थितीकरोति । यदा तु नेच्छति शान्तात्मोपसंहृतव्यापारमनाःतदेदंप्रलीयते अन्तरालप्रलयस्तदाभवति । यथा शरीरे यदा क्षेत्रज्ञोजागर्ति तदा पशुपक्षिसरीसृपात्मकंजगत् चष्टते चेष्टायुक्तंभवति । यदा स्वपिति तदा निश्चेष्टमिति जाग्रत्स्वप्नसुषुप्त्याख्याआत्मवृत्तयोत्रप्रजापतिकृतानां जाग्रत्स्वप्नसुषुप्तवृत्तीनांस्थित्यन्तरालप्रलयमाह प्रलयकारणभूतानांदृष्टान्तत्त्वेनोपपत्तेः ॥ ५२ ॥ पूर्वोक्तमेवस्पष्टयितुमाह तस्मिन्स्वपतितुस्वस्थइति । तस्मिन्निवृत्तिस्थे स्वस्थउपसंहृतव्यापारमनस्के कर्माक्षिप्तशरीराः शरीरिणः क्षेत्रज्ञाःस्वकर्मभ्यः शरीरग्रहणादिभ्योनिवर्तन्ते । मनश्च सर्वेन्द्रियरहितंनिर्व्यापारंभवति ॥ ५३ ॥ इदानींमहाप्रलयमाह युगपदिति । तुल्यकालमेव पुनर्यस्मिन्काले तस्मिन्परमेश्वरे सर्वभूतानि प्रलीयन्ते तस्मिन्नेव काले अयंसर्वसर्वभूतात्मभूतोनिर्वृत्तोनिवृत्तजाग्रत्स्वप्नसुषुप्तिव्यापारः सुखंस्वपिति सुषुप्तिमनुभवति । तत्रसुषुप्तावस्था महाप्रलयश्च युगपदेवभवतइत्यर्थः ॥ ५४ ॥ प्रलयप्रसङ्गेन च क्षेत्रज्ञोत्क्रमणमाह तमोयदेति । सआत्मा अत्यन्तव्यामोहव्याप्तः सन् यदा सेन्द्रियोप्यनल्पंकालमास्ते इन्द्रियाणांशरीरविनाशेप्यविनाशनेच श्वासप्रश्वासादिकंकर्म कुरुते तदा शरीरंजहाति ॥५५॥ किंशरीरान्तर निरपेक्षएव मूर्तिपरित्यजतीत्याह यदेति । यदा सूक्ष्मप्रमाणः सन् स्थावरबीजंजङ्गमबीजंवान्यदधितिष्ठति तदेदंशरीरं त्यजति । संसृष्टःप्राणादिसंयुक्तोयथोक्तंबृहदारण्यके ॥ तमुत्क्रामन्तंप्राणोऽनूत्क्रामतिप्राणमनूत्क्रामन्तंसर्वेप्राणाअनूत्क्रामन्तीति ॥ ५६ ॥ एवमिति । सत्रह्मानेनप्रकारेणात्मीयाभ्यांजाग्रत्स्वप्नाभ्यांजङ्गमस्थावरमजस्रमनवरतंजीवयति मारयतिचानश्वरः ॥ ५७ ॥ इदमिति । सब्रह्मेदंशास्त्रमिमंग्रन्थंकृत्वा शास्त्रस्येदंकर्तव्यमिदंनेत्येवं स्वरूपनित्यत्वान्मामेवात्मनादौ यत्नतोध्यापितवान् । ततोमरीच्यादीन् मुनीनहमध्यापितवान् ॥ ५८ ॥ एतदिति । अयंभृगुरेतच्छास्त्रंयुष्माकमशेषंश्रावयिष्यति । यस्मादेतत्सर्वमत्सकाशादेषोखिलंकृत्वाधिगतवान् ॥ ५९ ॥ ततइति । सभृगुर्मनुना तथोक्तोयंश्रावयिष्यतीत्यनेन प्रकारेणार्थादुक्तोनतुत्वंश्रावयेति । ततोनन्तरंसगुरुःसंभावनया प्रीतात्मा तानृषीन्श्रूयतामित्युवाच ॥६०॥ स्वायंभुवस्येति । अस्योक्तप्रकारेण स्वयंभूनप्तुर्मनोः षडन्येमनवः कालेकाले सृष्ट्यादावधिकृतावंश्यास्तत्कुलोद्भूतास्तदेककार्याः स्वाःस्वाः प्रजाउत्पादितवन्तः ॥ ६१ ॥ तेच स्वारोचिषइति ॥ ६२॥ स्वायंभुवाद्याइति । अनन्तरोक्ताःषट् स्वायंभुवश्चैवंसप्त एते स्वायंभुवप्रमुखाःमनवोबहुतेजसः। आत्मीयात्मीयाधिकारकालइदंजङ्गमस्थावरमुत्पाद्य आयुःप्रजाःपालितवन्तः ॥६३॥ कियान्पुनः कालः प्रत्येकंमनूनामधिकारइत्यतआह निमेषाइति। निमेषोक्षिपक्ष्मणोः स्वाभाविकःकम्पः उन्मेषसहचारी तेष्टादशकाष्ठात्रिंशत्यःकाष्ठाः कलानामकालः त्रिंशत्कलामुहूर्तसंज्ञोहोरात्रं तु तावतःत्रिंशत् मुहूर्तास्तावंतइतिद्वितीयानिर्देशाद्विद्यादित्यध्याहार्यम् ॥ ६४ ॥ अहोरात्रेइति । देवमानुषसंबन्धिनी अहोरात्रे सूर्योविभजत आदित्योविभागीकरोति । ततश्चभूतानांरात्रिःस्वापार्थंभवति । कर्मोद्यमार्थंत्वहः ॥ ६५ ॥ पित्र्येइति । मानुष्योमासः पितृणांमहोरात्रं । तत्रच पक्षाभ्यांविभागःकृष्णःपक्षोहःकर्मोद्यमार्थं शुक्लः पक्षःपुनःस्वापार्थंरात्रिः ॥ ६६ ॥ दैवेइति । मानुष्यंवर्षं देवानामहोरात्रं । तत्रचोत्तरायणमहोदक्षिणायनंरात्रिरितिविभागः ॥ ६७ ॥ ब्राह्मस्येति । प्राजापत्यस्याहोरात्रस्य यत्प्रमाणंयुगानांच प्रत्येकंतत्क्रमेण संक्षेपतःशृणुत ॥ ६८ ॥ चत्वारीति । दैविकानामन्तरप्रस्तुतत्वात् । पुराणेच दिव्येनैव प्रमाणेन युगसंख्याप्रकीर्तितेतिदर्शनात् । दैविकानि चत्वारिवर्षसहस्राणिकृतयुगंनामकालमाहुर्मन्वादयः । तस्यच तावन्त्येव वर्षशतानि संध्यातीतागामियुगधर्मानुवर्तिनंसंध्यांशोतीतयुगधर्माणां ईषदनुवृत्तिरागामियुगधर्मबाहुल्यंचत्वार्येव शतानि च ॥६९॥ इतरेष्विति । त्रेतादिषु पुनस्त्रिषु युगेषु संध्यासंध्यांशसहितेष्वेकैकहान्यासहस्राणि शतानिच भवन्ति । त्रेतात्री-

---

(१) ततश्चान्तयोश्च ( गो० २, ४ )

णि सहस्राणि तत्संध्यासंध्यांशैश्च त्रीणि त्रीणि शतानि एवंद्वापरकलियुगयोः संध्यासंध्यांशसहितयोः पूर्वस्मात्पूर्वस्मादेकै-कसहस्रशतापायोद्रष्टव्यः ॥ ७० ॥ यदिति । यदेतत्परिगणितमादावस्मात्श्लोकात्प्राक् चतुर्युगमेतत् । द्वादशसहस्रगुणंदेवयुग-नामकालः ॥ ७१ ॥ दैविकानामिति । एषांदेवयुगानांसहस्रंब्राह्ममहर्विज्ञेयम् । सहस्रमेवरात्रिसंख्ययेत्यनुवादः ॥ ७२ ॥ तदिति । युगसहस्रेणान्तोयस्य तत्प्राजापत्यमहः तद्वेदनस्य पुण्यहेतुत्वात्पुण्यंरात्रिंचतत् परिमाणतोयेविजानन्ति ते अहोरात्रज्ञानिनः । नतु मनुष्याद्यहोरात्रवेदनेनेति ब्रह्माहर्विज्ञानप्रशंसा तद्वेदनाप्ररोचनार्थं ॥ ७३ ॥ तस्येति । सब्रह्मा तस्याहोरात्रस्यान्ते सुप्तः सन्प्रतिबुध्यते । ततोमनआत्मीयंसृजति । लोकपिण्डसृष्ट्यर्थंनियुङ्क्ते नतूत्पादयति । अस्मिन्नन्त-रालप्रलयापगमे तस्य महाप्रलयानन्तरंउत्पन्नत्वात् । तथाच ॥ मनःसिसृक्षया युक्तः सर्गाय निदधे पुनः इतिपुराणउक्तं ॥७४॥ मनइति । तन्मनःप्रजापतिसंबन्धितदैव स्रष्टुमिच्छया मेर्यमाणं सृष्टिंकुरुते ॥७५॥ कथमित्यतआह आकाशमिति । तस्मा-द्ब्रह्मणआकाशंजायते । तस्यचशब्दोगुणआश्रितः । आकाशस्तस्याश्रयइति मन्वादयोमन्यन्ते । तथाच कठवल्लीषु तस्माद्वाएतस्मादात्मनः आकाशःसंभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यःपृथिवी पृथिव्याओषधयः ओष-धीभ्योऽन्नं अन्नात्पुरुषःसंभूतइत्युक्तम् ॥ ७५ ॥ आकाशात्विति । आकाशात्सविकारजननोन्मुखीभूताद्वायुः सुरभ्यसुर-भिगन्धवहः शुचिः पवित्रोबलवांश्च जायते । सच स्पर्शाख्यगुणयुक्तःऋषीणांमतः ॥ ७६ ॥ वायोरिति । वायोः पूर्ववत्ते-जोविरोचिष्णुपराप्रकाशकंतमोनाशनंभास्वत्प्रकाशकं उत्पद्यते । तच्च स्वरूपाख्यगुणयुक्तं कथ्यते ॥७७॥ ज्योतिषइति । तेजसःपूर्ववदापोरसाख्यगुणयुक्ताजायन्तइति स्मृताः मन्वादिभिरद्भ्यःश्च गन्धाख्यगुणयुक्ता भूमिर्जायते । इत्येषान्तराल-प्रलयानन्तरंप्रथमतःसृष्टिः ॥७८॥ यदिति । यदेतच्चतुर्युगंद्वापरपरिमाणंदैवयुगमुक्तं तदेकसप्ततिगुणमन्वन्तराख्यः कालः इह-शास्त्रउच्यते । एतावान्कालएकस्य मनोः सर्गाद्यधिकारः ॥७९॥ मन्वन्तराणीति । यद्यपि पुराणे चतुर्दशमन्वन्तराणिसंख्या-यन्ते तथाप्यावृत्त्या असंख्यानि यदाभवन्ति तदा सृष्टिसंहारौ भवतः । एतच्च सृष्टेः संहाराख्यं वस्तुपरमेऽनावृत्तिलक्षणेस्थाने स्थितत्वात् परमेष्ठी प्रजापतिः क्रीडन्निवैतत्पुनःपुनःकुरुते नकेवलंतदिच्छैवात्रकारणं यावत्प्राणिकर्माण्यपीत्यतएवशब्दः ॥ ॥८०॥ चतुष्पादिति । योयंचतुष्पादाश्रयोधर्मःसकलएव तथा सत्यंच कृतयुगे आसीत् सत्यस्य प्राधान्यात्पृथक्ग्रहणं । एवंच शास्त्रातिक्रमेण विद्यायाःधनस्यवाऽगमःकश्चिन्मनुष्यान्प्रतिनवर्तते ॥८१॥ इतरेष्विति । त्रेतादिषु पुनरागमाच्छास्त्राद्धर्मोया-गाद्यनुष्ठानंयथाक्रमं प्रतियुगं पादंपादमवरोपितंहीनीकृतं चौर्यासत्यच्छद्मभिः । नाद्ययुगैर्यथासंख्यंचौर्यादीनांसर्वेषांसर्वयुगेषु दर्शनात् । एवंच पादशोनुष्ठानापगमात् तत्साध्योप्यभ्युदयहेतुः मुख्योधर्मः पादशोऽप्यपगच्छति ॥८२॥ अरोगाइति । अरो-गारोगनिमित्तस्याधर्मस्याभावात्सर्वसिद्धार्थाः सिद्धसकलकाम्यफलाः प्रतिबन्धकस्याधर्मस्याभावात् चतुर्वर्षशतायुषःपुरा-णदृष्यातदाह । स्वाभाविकमेतदायुरतआयुःप्रापककर्मकरणेनाधिकायुषोपि भवन्ति । तेन दशवर्षसहस्राणि रामोराज्यमका-रयत् इत्यविरोधः । शतायुर्वैपुरुषइत्यादिश्रुतौच शतशब्दोबह्वर्थः । शतशब्दसहस्रयोः बहुनामस्वाम्नातत्वात् एवंविधामनु-ष्याःकृते भवन्ति । त्रेतादिषु पुनरेषांपादंपादंवयोल्पीभवति॥८३॥ वेदोक्तमिति । शतायुर्वैपुरुषइति एवंयदिवेदोक्तमायुःकर्मणां-काम्यानांप्रधानानांप्रभावश्च मृष्यति । शतयोगीमनुष्याणांयुगानुरूपेणफलति ॥८४॥ अन्यइति । कृतादिषु युगेषु युगानुरूपेण

(१) तदैव=तदीयतयैव (गो० २)=तदीययैव (गो० ३, ४, ५)

(२) संहाराख्यं = सर्गसंहाराख्यं (गो० २, ४)

(३) वा = चा (गो० १)

धर्मवैलक्षण्यंमनुष्याणांभवति ॥८५॥ तथाच **तपइति**। तपः कृच्छ्रचान्द्रायणादि कृतयुगे परंप्रधानतोऽनुष्ठीयते। मनुष्यैर्यत्ना भाव्यादात्मज्ञानयागमादानानुषंगतः। एवंत्रेतायांज्ञानं परं तपःप्रभृतीनि त्वानुषङ्गिकानि। एवंद्वापरे यज्ञमाहुः। दानंकलाविति ॥ ८६ ॥ **सर्वस्येति**। समहादीभिर्ब्रह्मास्य सर्गस्य जगतः अग्नौ प्रास्ताहुतिरित्यादिन्यायेन रक्षार्थंमुखादिजातानांब्राह्मणादीनांपृथक्पृथक्कर्माणि अदृष्टार्थानिवृत्त्यर्थानि च कल्पितवान्। एतानि सृष्टिशेषत्वेनेहाभिधीयन्ते तथाच सर्वस्यास्य तुसर्गस्य गुप्त्यर्थं इत्युक्तंविधिस्त्वैषामस्यार्थवादः। प्रकरणत्वादुत्तरत्रभविष्यति ॥८७॥ तत्र **अध्यापनमिति**। अध्ययनाध्यापने साङ्गवेदस्मृतीनांपठनप्रवचने। यजनयाजने यागार्त्विज्ये। अन्नोदकानि यथाशक्त्याप्राणिनामार्त्यपहरणंदानम्। साधुतः प्रतिग्रहंब्राह्मणानांकल्पितवान्॥८८॥**प्रजानामिति**।इज्या यागः विषयेषु स्त्र्यादिगतरूपादिष्वत्यन्तमेवप रिहारः। समासतः संक्षेपेण॥८९॥**पशूनामिति**। वणिक्पथस्थलपथवारिपथादिना वाणिज्यायै गमनं। कुसीदंवृध्यर्थंधनप्रयोगः ॥९०॥ **एकमिति**। सप्रभुरनिन्दया ब्राह्मणादिपरिचरणं कर्मादिष्टवान् ॥९१॥ इदानींब्राह्मणादिकर्मविवेकार्थत्वमुखेनशास्त्रस्य स्तुतिमध्ययनश्रवणानुष्टानफलांकर्तुंब्राह्मणस्तुतिमाह **ऊर्ध्वमिति**। पुंसः सर्वतोपि सिद्धत्वे सति नाभेरूर्ध्वंमेध्यतरत्वं ततोपिमुखस्य मेध्यतमत्वंस्वयंभुवोक्तम्॥९२॥ततःकिंअतआह **उत्तमाङ्गोद्भवादिति**। मूर्धोद्भवत्वात्पूर्वोत्पन्नत्वात्प्रवचनादियुक्तत्वात्सातिशयवेद धारणात्सर्वस्य जगतोधर्मानुशासने ब्राह्मणः प्रभुः॥९३॥कस्य पुनरयमुत्तमाङ्गादुद्भूतइत्यत आह **तमिति**। तंब्राह्मणंस्वयंभूः आत्ममुखात्तपः कृत्वादेवपित्रन्नवहनार्थंजगद्रक्षार्थंच प्रथमसृष्टौ सृष्टवान् ॥ ९४ ॥ एवंच **यस्येति**। यस्य ब्राह्मणाख्यस्य महात्मनोमुखेन महाप्रभावास्त्रिदिवौकसः स्वर्गवासिनोदेवाः हव्यानि अनवरतमश्नन्ति पितरश्च कव्यानि ततोऽप्यत्प्रकृष्टंकिंभूतंस्यात् ॥ ९५ ॥ अधुनाविद्वत्तादिगुणयोगेन ब्राह्मणंस्तोतुमाह **भूतानामिति**। **ब्राह्मणेष्विति**। भूतानांस्थावरजङ्गमानांमध्यात् प्राणिनांसर्वेषांगुणवत्त्वेपि येतूद्रिक्तचैतन्यावृश्चिकादयः। ते स्थावरेभ्यः तदुत्तरमुखानुभावात् श्रेष्ठास्तेभ्योपि श्वादयोबुद्धिजीविनोनिरन्नसान्नदेशगमागमकरणात् तेभ्योपि मनुष्याविशिष्टविज्ञानात् तेभ्योपि ब्राह्मणाअपवर्गाधिकारयोग्यत्वात्तेभ्योपि विद्वांसोमहाफलकर्माधिकारात् तेभ्योपि कृतबुद्धयः शास्त्रार्थांनुष्ठानेषूत्पन्नसंकल्पाः तेभ्योप्यनुष्ठातारः इष्टानिष्टप्राप्तिपरिहारयुक्तत्वात् तेभ्योपि ज्ञानात्मानः अपवर्गफलात् ॥ ९६ ॥ ९७ ॥ किंच **उत्पत्तिरिति**। जन्ममात्रमेव ब्राह्मणस्याविनश्वरंधर्मस्य शरीरं यस्मादसौ धर्मार्थमुत्पन्नउपनीतः सन्नात्मज्ञानेन ब्रह्मत्वाय संपद्यते ॥ ९८ ॥ **ब्राह्मणइति**। यस्माद्ब्राह्मणउत्पद्यमानोधर्मसंचयरक्षणार्थंसर्वभूतानामीश्वरः प्रभुः सन् पृथिव्यांअधिकः एकः श्रेष्ठः शुक्लैः गुणैः जायते तस्मादसौ मूर्तिर्धर्मस्य शाश्वती पूर्वोक्तहेतुरयं कोशोधनसंचयो न इहोपचारात् कोशशब्दः। तद्गोप्तृत्वंच ब्राह्मणोपदेशकत्वात् सर्वसाधारणः ॥ ९९ ॥ **सर्वस्वमिति**। वक्ष्यमाणस्तेयादिशास्त्रविरोधादस्य च श्रुतिप्रधानत्वात्। सर्वंजगद्गतंद्रव्यजातंब्राह्मणस्वमिव स्तुत्योच्यते तत्र स्वयमेवं यस्मात् श्रेष्ठेनाभिजनेन मुखोद्भवत्वेन सर्वंब्राह्मणोयोग्योभवति स्वीकर्तुंतस्मात्तस्येदंसर्वंस्वमेव ॥ १०० ॥ **एवंच स्वमिति**। यत्परकीयस्यापि भोजनाच्छादनदानादि असौ करोति तत्तस्य स्वमेवेति पूर्ववत्स्तुतिः। एवंचानृशंस्यात्सद्गतकारुण्यादन्ये जनाभोजनाच्छादनादि कुर्वते ॥ १०१ ॥ अधुनोक्तब्राह्मणस्तुतेः फलमाह **तस्येति**। इदंगेतत्परच्छास्त्रं यदुक्तलक्षणस्य ब्राह्मणस्यप्रधानतः कार्याकार्यविवेकार्थंशेषाणांक्षत्रियादिसङ्करपर्यन्तानामनुषङ्गस्तद्विवे-

---

(१) गुणवत्त्वे=प्राणवत्त्वे (गो० ३,५).

(१) साधारणः=धर्माणाम् (गो० २,४).

कार्थं एतत्प्रजापतिनमा प्रशास्त्रबुद्धिमान् मनुः कल्पितवान् ॥ १०२ ॥ विदुषेति । हिताहितानीच्छताब्राह्मणेनेदंशास्त्रंप्रयत्नेन अध्येतव्यमिति । ब्राह्मणस्य प्रयत्नाध्ययनार्थोयमारंभः प्रयत्नग्रहणात्क्षत्रियवैश्ययोरप्यत्राध्ययनाधिकारस्तथा च निषेकादिश्मशानान्तइत्यादि वक्ष्यति । न तु ब्राह्मणवचनातिशयः न च तेनैतत् ब्राह्मणस्यापि सिध्यति तत्र ब्राह्मणविशेषस्य प्रयत्नशब्दस्यानुपादानान्न च क्षत्रियवैश्ययोरप्यनेनैव सिध्यति निषेकादीन् एतदनारंभे प्रयत्नशब्दस्यैवंविधविशेषप्रतिपादनासामर्थ्यात् नहीह क्षत्रियवैश्यग्रहणमस्ति सति निषेकादिशास्त्रेस्मिश्चैतल्लभ्यते द्विजातिमात्राध्ययनाधिकारोब्राह्मणस्य तु प्रयत्नवान् । इति शिष्येभ्यश्च ब्राह्मणेनैतत् प्रवक्तव्यंनक्षत्रियादिनेति । ब्राह्मणस्यैतच्छास्त्राध्यापनाधिकारार्थोयमारंभोऽन्यस्याध्यापननिषेधार्थश्च । यथार्थवादार्थत्वमस्य श्लोकस्य कैश्चिदुक्तंतदसिद्धयर्थप्रतीतेः । अर्थस्य चार्थवादत्वे सति प्रयत्नकृतोविशेषोनभवति । तस्मानामास्त्राभूत् ब्राह्मणस्यैतच्छास्त्राध्यापनाधिकारोऽन्यस्य निषेधइत्ययंपुनर्विशेषोऽस्यार्थवादत्वे सति दुर्लभः । यत्त्वधीयीरंस्त्रयोवर्णाइत्यादि सवेदविषयोऽनुवादइतिव्याख्यास्यामः ॥ १०३ ॥ इदमिति । इदंशास्त्रंपठन् ब्राह्मणएतदर्थावबोधेन शंसितव्रतोऽविकल[1]त्वमनियमः सन् मनोवाक्कायजैः विहिताकरणप्रतिषिद्धसेवनजनितैः पापैर्नसंबध्यते ॥ १०४ ॥ किंच पुनातीति । भोजनादानपंक्तिसंबंधादपवित्रीभूतांपंक्तिंशास्त्रस्थत्वात् पङ्क्तिपावनत्वे सति पवित्रीकरोति तथैवान्वयान्सप्त परानतीतान्पित्रादीन् सप्तावरानागामिनः पुनाति समग्रांचेमांपृथिवींप्रतिग्रहीतुमर्हति विदुषः प्रतिग्रहदोषापाकरणसामर्थ्यात् ॥ १०५ ॥ इदानींशास्त्रंसाक्षात्स्तौति इदमिति । इदमन्यस्मात् स्वस्त्ययनकर्मणः श्रेष्ठमतिशयेन प्रशस्यंस्वस्त्ययनमविनाशप्रापकंविनाशोपशमकर्मावबोधेन बुद्धिविवर्धनंच शास्त्रार्थपरिगणनात् बुद्धिविकाशेन यशोनिमित्तंच सततसर्वकालंख्यातिकरत्वात् परंप्रकृष्टंनिःश्रेयसंनिःश्रेयसस्य मोक्षस्य साधकत्वात् ॥ १०६ ॥ अस्मिन्निति । अस्मिन्स्मार्तोधर्मः कार्त्स्न्येनोक्तः कर्मणांच विहितप्रतिषिद्धानांगुणदोषाविष्टानिष्टफले वर्णानामाचारः पुरुषधर्माख्यः साधारणप्राधान्यख्यापनार्थंचास्य पृथग्ग्रहणं । एवंचैवतत्संनिधौ धर्मशब्दोऽसाधारणः सन्ध्योपासनादिप्रतिवचनः ॥ १०७ ॥ आचारइति । यः श्रुत्युक्तः आचारः पुरुषसाधारणप्राधान्यख्यापनार्थंच धर्माख्यः यश्च स्मार्तः सपरमप्रकृष्टोधर्मोपरमोज्योतिष्टोमाष्टकादिभ्यः श्रौतस्मार्तधर्मेभ्यः यतः तस्मात् योनित्यंप्रशस्तात्मा आचारे सर्वकाले युक्तोयत्नवान् स्यात् ॥ १०८ ॥ आचारादिति । आचाराद्विच्युतः श्रौतस्मार्ताधिकारात् भ्रष्टाचारोब्राह्मणोन वैदिकंकर्मफलंलभते । आचारवान् पुनः समग्रफलभाग्भवति ॥ १०९ ॥ एवमिति । एवमाचाराद्धर्मस्य प्राप्तिंपश्यन्तोबुद्ध्वाकृच्छ्रचान्द्रायणादेस्तपसः सफलात्परंप्रकृष्टंमूलंकारणं तस्मिन्सति तपसा साफल्यादाचारमनुष्ठेयत्वेन गृहीतवन्तइति । एवमिहाचारस्तुतिशास्त्रस्तुत्यर्था उत्तरत्रत्वाचारानुष्ठानार्थम् ॥ ११० ॥ इदानीं शास्त्रस्य महावृत्तान्तोपेतत्वप्रदर्शनार्थमनुक्रमणीमाह जगतइति । दाराधिगमनमिति । वृत्तीनामिति । स्त्रीधर्मयोगमिति । साक्षिप्रश्नविधानमिति । वैश्यशूद्रोपचारमिति । संसारगमनमिति । देशधर्मानिति । जगदुत्पत्तिर्यथोक्ता ब्रह्मणस्तुत्यादिश्च शास्त्रधर्मस्तुत्यर्थत्वेनैकार्थत्वादत्रैवान्तर्भावः । संस्काराणांजातकर्मादीनांविधिरनुष्ठानम् । व्रतचर्या व्रतचरणं. व्रतंब्रह्मचारिणः । उपचारोगुर्वादीनां अभिवादनाद्यनुवृत्तिः व्रतचर्योपचारमिति द्वंद्वैकवद्भावः । स्नानंगुरुकुलान्निवर्तमानस्य संस्कारविशेषस्तस्य परोविधिः प्रकृष्टंविधानंदाराधिगमनंविवाहः । विवाहादीनां ब्राह्मादीनांचलक्षणं । महायज्ञाश्च वैश्वदेवादयः श्राद्धकल्पःश्राद्धविधिः । शाश्वतोऽनादिप्रवाहप्रवृत्त्यानित्यःवृत्तीनां-

---

( १ ) तानीच्छता=तत्नेन ( गो०२, ३, ४ )

( १ ) विकल=अविशिष्ट ( गो० २, ३, ५ )=विशिष्ट ( गो० ४ )

जीवनोपायानांमृतादीनांलक्षणं । स्नातकस्य गृहस्थस्य व्रतानि नियमाः। भक्ष्यंदध्यादि अभक्ष्यंलशुनादि ॥ शौचंजननादौ दशाहादिना । द्रव्याणांतैजसादीनांक्षारादीनांशुद्धिः । स्त्रियाधर्मयोगोधर्मानुष्ठानं । तापस्यंतापसस्य वानप्रस्थस्य कर्म । भिक्षोः संसारहेतुत्वान्मोक्षः सन्यासश्च भिक्षुधर्मप्रकारएव । [राज्ञोभिषि] क्तस्य धर्मः कार्याणांव्यवहाराणां-अर्थिप्रत्यर्थिसमर्पितानांनिश्चयः । साक्षिप्र [ अक्षराणि ७ ] च । स्त्रीपुंसयोर्दंपत्योः धर्मःपरस्परवर्तनं । पैतृकऋक्थ-विभागधर्मः । द्यूतमक्षादिस्तद्व्यवस्था ॥ कण्टकानांचौरादीनांशोधनमुद्धरणं । वैश्यशूद्रयोरुपचारोवार्ता शुश्रूषाद्यनुष्ठानं-संकीर्णानामनुलोमप्रतिलोमानामुत्पत्तिः । आपदि जीविकोपदेशआपद्धर्मः । विहिताकरणादिना प्रायश्चित्तानुष्ठानं । उत्तममध्यमाधमभेदेनत्रिविधा कर्महेतुना संसारउत्पत्तिर्यस्मात्परमन्यच्छ्रेयोनास्ति तन्निःश्रेयसमात्मज्ञानंनैःश्रेयसहेतुत्वात् । कर्मणांच विहितप्रतिषिद्धानांगुणदोषपरीक्षणं । प्रतिनियतदेशजातिकुलाश्रिताधर्मावाह्यदर्शनसमाश्रणलिङ्गधारणंपाखण्ड । वणिक्कार्वादीनांगणः सङ्घः ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥ **यथेति** । पूर्वंमया मनुः पृष्टोयथैवेदमुक्तवान् तथैवाविभ्रष्टागमं मत्सकाशात् यूयंश्रृणुतेत्युत्तरशास्त्रार्थापत्तेनैतत्सिद्धं ॥ ११९ ॥ इतिश्री-भट्टमाधवात्मजगोविन्दराजविरचितायां मन्वाशयानुसारिण्यांप्रथमोध्यायःसमाप्तः ॥ १ ॥

---

## ॥ अथद्वितीयोऽध्यायः ॥



ॐनमःसरस्वत्यै । एवमध्ययनश्रवणार्थं महाप्रयोजनतांशास्त्रस्य प्रतिपाद्याधुना प्रकृताभिधानार्थं उपक्रमते । तत्र तावदभिधास्यमानं धर्मसामान्यलक्षणं सकलशास्त्रव्यापकत्वेन परिभाषार्थमाह **विद्वद्भिरिति** । धर्मस्यानन्यप्रमाणत्वाद्विद्वद्भिर्वेदार्थज्ञैः सद्भिर्धार्मिकैः सर्वदारागद्वेषशून्यैः आचरितोदृदयेनाप्यनुज्ञातोन्तःकरणविचिकित्साशून्योयोधर्मोऽदृष्टार्थकर्तव्यरूपस्तंशृणुत ॥ १ ॥ परिभाषान्तरमाह **कामात्मतेति** । कामात्मता नप्रशस्ताफलाभिलाषशीलत्वमयुक्तम् । यतःशास्त्रचोदितकर्माणिफलाभिलाषत्यागेनाचर्यमाणान्यात्मज्ञानसाचिव्येन मोक्षाय कल्पन्ते । फलेच्छया त्वनुष्ठाने तेषांसंसारहेतुत्वात् । अस्तु कामात्मता नप्रशस्तेत्य नेनेच्छानिषिद्धेतन्मत्वा आह नचैवेति इच्छामन्तरेण नेहशास्त्रे प्रवृत्तिरस्ति । यस्माद्वेदस्वीकरणंवैदिककर्मसंबन्धश्चाभिलषणीयएव ॥ २ ॥ अत्रैवोपपत्तिमाह **सङ्कल्पमूलइति** । अनेन वस्तुनेयमर्थक्रियासाध्यतदृत्येवंविधोमनोव्यापारःसंकल्पः । सच मूलंकामस्य तदनन्तरंहितदृस्तुसंपादनेच्छोपजायते । तदनुचाध्यवसायोभौतिकव्यापारेणकरणोद्योगोभवति । एवंचयाज्ञादयःसंकल्पप्रभवास्तेषांच संकल्पोद्भवत्वे सति अवश्यंअन्तरिच्छयाभवितव्यम् । संकल्पाभिमानाध्यवसायेभ्यःक्रियाप्रवृत्तिः अतःस्वेच्छानिषेधात्तान्यपि न घटतइत्यभिप्रायः । व्रतान्यनुष्ठेयरूपाणि यमधर्माः प्रतिषेधात्मकाः ॥ ३ ॥ अत्रैवलौकिकंदृष्टान्तमाह **अकामस्येति** । बुद्धिपूर्वकारिभाव्या वा काचित् क्रिया दृष्टार्था साऽनिच्छातोन कदाचित् दृश्यते । तस्माद्यत्किंचित्कुरुते कर्म तत्सर्वंकामस्य चेष्टितमिच्छाकार्यम् ॥ ४ ॥ अत्रपरिहारमाह **तेष्विति** । नात्रेच्छा निषिध्यते । अपितु यथाश्रुतंतत्तथैवानुष्ठेयमितीयंसम्यग्वृत्तिस्तत्र तेषु कर्मसु फलाभिलाषत्यागेन प्रवर्तमानोबन्धात्मकत्वाभावात् अमरलोकताममर धर्मित्वंमोक्षंप्राप्नोति । इहसंसारआत्मज्ञानाभ्यासेनाष्टगुणैश्वर्ययोगात् यथाभिलषितान्सर्वान्अर्थान्समश्नुते ॥ ५ ॥ इदानींधर्मप्रमाण परिगणनार्थमाह **वेदइति** । वेदः ऋग्यजुःसामलक्षणोऽखिलः समग्रोऽर्थवादादीनामपि विध्येकवाक्यत्वेनश्रवणाद्धर्मस्य मूलं प्रमाणं मिथ्याज्ञानसंशयाभावात् निसर्गप्रामाण्याचैतन्यायसिद्धम् । एतदस्यानूद्यते स्मृत्यादीनांतन्मूलत्वेन प्रामाण्यप्रतिपादनाय । तथाच मानवादिशास्त्रोपनिबन्धनं वेदविदांकर्तव्याकर्तव्यस्मरणम् । शीलंच रागद्वेषपरित्यागात्मकम् । आचारश्च विवाहादौ कङ्कणबन्धनाद्याचरणरूपः । साधूनांधार्मिकाणां आत्मनस्तुष्टिश्चादृष्टार्थाचर्यमाणपदार्थचेतःपरितोषरूपा वैकल्पिकपदार्थविषया च धर्मंप्रति प्रमाणम् एषांसर्वेषांवेदमूलत्वात् ॥ ६ ॥ तथाच वेदमूलत्वमेषांदर्शयति **यइति** । यःकश्चिच्छ्रुतिशीलाचारात्मतुष्टिप्रमाणकोधर्मः कस्यचिद्ब्राह्मणादेर्मनुना कथितःसर्सर्ववेदैरुक्तः उच्छिन्नविप्रकीर्णमन्त्रार्थवादलिङ्गमूलत्वात्तत्स्मरणस्यातीन्द्रियार्थप्रतिपादने हि वेदविदामगृह्यमाणकारणानांवेदस्यैवमूलत्वे संभवात् । यस्मात्सर्वदृष्टार्थज्ञानहेतुत्वात्सर्वज्ञानमयः सर्वज्ञानारब्धइववेदः । अत्रचाष्टका-

---

( १ ) अस्तु=परस्तु ( गी० २, ३ )　( २ ) मत्वा=मन्वानः ( गी० २ )

( ३ ) यएव=यावेतौ ( गी० २, ३, ४ )　( ४ ) बुद्धिपूर्वकारिभाव्या=बुद्धिपूर्वकतया साध्या ( गी० २, ३, ४ )

दीनांमहाप्रत्यवायादीनांमन्थेनोपनिबन्धः। शीलाचारात्मतुष्टीनांपुनरल्पप्रत्यवायत्वात् उपनिबन्धः ॥ ७ ॥ सर्वमिति। यावत्किंचिच्छास्त्रजातंतत्सर्वंविज्ञानाख्येन चक्षुषा निखिलंनिःशेषंकृत्वा पर्यालोच्य वेदप्रामाण्येनैव शास्त्रज्ञः स्वधर्मेऽवतिष्ठेत। वेदस्यैव धर्मप्रतिप्रामाण्यात् नवेदबाह्यशास्त्रप्रामाण्येनज्ञानंचक्षुरिवप्रमेयपरिच्छेदात् ॥ ८ ॥ श्रुतिस्मृत्युदितमिति। श्रुतिस्मृत्युक्तंधर्ममाचरन् पुरुषः इहलोके ख्यातिं परलोके चोत्कृष्टंसुखंप्राप्नोतीति सद्भूतगुणाख्यानेनानुष्ठानस्तुतिः प्ररोचनार्था। नह्यकस्मान्निष्प्रयोजना स्तुतिः प्रवर्ततइत्येवंसर्वत्रेहश्रुतिषु विज्ञेयम् ॥ ९ ॥ श्रुतिरिति। मन्दबुद्धिव्युत्पादनार्थंमीमांसाप्रतिषेधादिव्यवहारफलंलोकसिद्धपदार्थकथनम्। श्रुतिर्वेदोधर्मशास्त्रंस्मृतिरिति। स्मृतिग्रहणंशीलादेरपि स्मरणप्रभेदकत्वात्प्रदर्शनार्थम्। ते श्रुतिस्मृती सर्वार्थेषु [आ]शुनरकफलसुरापानाद्यात्मकेषु कुतर्कविकल्पैर्नविचारयितव्ये कथमेतत्स्यादिति। यतः प्रमाणान्तरागोचरोधर्मस्ताभ्यामेवनिर्बभौ प्रकाशतांगतः ॥१०॥ एवंकर्तुः बहिःकरणमाह। योवमन्येतेतेतूभेइति। यःश्रुतिस्मृतिभ्यामेवोपात्तद्विजभावः संस्ततएवासत्तर्कशास्त्रावलंबनेन निन्देन्नास्ति परलोकादिरित्येवंस्थितप्रज्ञोवेदनिन्दकोद्विजः संपाद्यात्कर्मणोऽध्ययनादेः शिष्टैः परिहार्यः ॥ ११ ॥ इदानींस्मृतिशीलाचारात्मतुष्ट्यात्मकप्रकारभेदस्यातंत्रतांदर्शयितुंशीलापातेन चतुर्धा धर्मलक्षणमाह वेदःस्मृतीति। श्रुत्यादीनांप्रकारमात्रभेदोनतु वस्तुतः सर्वेषांशिष्टानुस्मरणरूपत्वाच्च तथाच ॥ श्रुतिस्तुवेदोविज्ञेयोधर्मशास्त्रंतुवैस्मृतिरिति स्वयमेवावोचत्। सदाचारः साध्वाचारः स्वात्मनश्चाप्रियमात्मतुष्टिः ॥१२॥ अर्थकामेष्विति। अर्थकामाख्यदृष्टपुरुषार्थेष्वसक्तानांतल्लिप्साशून्यानांतत्त्वावबोधनंशास्त्रेण विधीयते। तल्लिप्सया लोकव्यक्त्यर्थंधर्मानुष्ठाने सत्यदृष्टफलाभावात् किंधर्मज्ञानेनेत्यभिप्रायः। तथाचश्रुतिस्मृत्यादिविरोधे सति तत्त्वंज्ञातुमिच्छतांश्रुत्यादीनांमध्यात् श्रुतिः प्रकृष्टंप्रमाणम्। अतश्च श्रुतिविरोधे स्मृत्यवबाधः। प्रत्यक्षविरोधे अनुमानस्य दुर्बलत्वात् ॥१३॥ श्रुतिद्वैधमिति। यत्र पुनः श्रुत्योरेव द्वैविध्यंपरस्परंविरुद्धाभिधानंतत्र तत्प्रतिपाद्यौ द्वावपि विकल्पानुष्ठेयत्वेन मन्वादिभिः पूर्वतरैरपि विद्वद्भिर्द्वावपि तौ धर्मौ सम्यक् समीचीनावित्युक्तम्। नात्र कस्यचिदपि हानंयुज्यते तुल्यप्रमाणशिष्टत्वात्। एवंच समानन्यायत्वात् स्मृत्योरपि विरोधे एतदेव विज्ञेयमिति प्रकृतोपयोगः ॥ १४ ॥ अत्रोदाहरणमाह उदितइति। उदिते होतव्यमनुदिते होतव्यंसमयाध्युषिते रात्रिविवासकाले होतव्यमिति इतरेतरविरुद्धहोमकालश्रवणेपि सर्वथासर्वप्राप्नोति। अन्यस्मिन्नपिकाले होमे कृते संपाद्यते होमोन हि कालाख्याङ्गानुरोधेन होमाख्यंप्रधानमावर्तयितुंयुक्तमित्येवमिदं उदितहोतव्यमित्येवमादिकंवैदिकंवाक्यमिति ॥ १५ ॥ निषेकादीति। गर्भाधानाद्यन्त्येष्टिपर्यन्तोयस्य मन्त्रैर्युक्तोऽनुष्ठानकल्पः उक्तः सच द्विजातिरुक्तोऽतस्तस्य अस्मिन् स्मृतिशास्त्रेऽध्ययनश्रवणाधिकारोबोद्धव्योनतु शूद्रादेः। अर्थानुष्ठानंपुनः प्रतिलोमपर्यन्तान्प्रत्यपिचोदितत्वान्नानेन निषिध्यते। प्रवचनंचात्र ब्राह्मणस्येत्युक्तंविदुषेत्यत्र धर्मप्रमाणानि परिभाषाश्चोक्ताः ॥ १६ ॥ अधुना सदाचारनिरूपणार्थंधर्मानुष्ठानयोग्यस्थानकथनार्थंच देशानाह सरस्वतीदृषद्वत्योरिति। सरस्वतीदृषद्वत्याख्यनदीमध्यंब्रह्मावर्ताख्यंदेशमाहुः। देवनदीत्वनिर्मितशब्दौ देशस्तुत्यर्थौ ॥ १७ ॥ तस्मिन्निति। तस्मिन् देशे प्रायेण सदाचारस्य संभवाद्योब्राह्मणादी-

---

( १ ) श्रुतिषु=स्तुतिषु ( गो० २, ३ )
( २ ) श्रुत्यादीनां=स्मृत्यादीनां ( गो० २, ३, ४ )
( ३ ) लिप्सा=चिन्ता (गो० २, ३, ४,).
( ४ ) श्रुत्यादीनां=स्मृत्यादीनां ( गो० २, ३, ४).

मामन्तरप्रभवानांपारंपर्यक्रमागतः । प्रबन्धतोऽविच्छेदेनागतोन सांप्रतिकोयआचारः ससदाचारउच्यते ॥ १८ ॥ **कुरुक्षेत्रमिति** । मत्स्यादिविराटदेशाः । पांचालाः कन्यकुब्जाहिछत्राः शूरसेनजाः माथुराएषब्रह्मर्षिदेशाख्योदेशोब्र-ह्मावर्तादीषदूनः ॥ १९ ॥ **एतद्देशप्रसूतइति** । कुरुक्षेत्रादिदेशजातस्य ब्राह्मणस्य सकाशात् स्वंस्वमाचारंपृथिव्यांसर्वे-मनुष्याः शिक्ष्येरन् ॥ २० ॥ **हिमवद्विन्ध्ययोरिति** । हिमवद्विन्ध्याख्योत्तरदक्षिणदिगवस्थितपर्वतयोर्मध्यंविनशनाच्च सरस्वत्यन्तर्धानदेशात् प्रत्यगुदिग्वर्तिनः प्राक् पूर्वदिङ्मार्गे प्रयागाच्च गंगायमुनासंगमात् प्रत्यक् पश्चिमदिङ्मार्गे समध्यदेशाख्योदेशः कथितः ॥ २१॥ **आसमुद्रादिति** । पूर्वपश्चिमसमुद्रयोः पुनरर्वाग्वर्तियन्मध्यंतयोश्च हिमवद्विन्ध्ययो-श्चोत्तरदक्षिणादिगवलंबिनोः पर्वतयोर्यन्मध्यंतं आर्यावर्ताख्यंदेशंविद्वांसोमन्यन्ते ॥ २२ ॥ **कृष्णसारइति** । कृष्णःशबलो-मृगोयस्मिन्देशे स्वभावतोनिवसति स्वेच्छन्दंविह [रति] नहठादानीतः । सयागार्हेदेशो विज्ञेयोऽतोऽन्योऽनधिकृतआन्ध्रादि-म्लेच्छदेशोन यागार्हः । अध्ययनएतदेव ॥ २३ ॥ अतः **एतानिति** । साध्वाचारयागार्हत्वसंभवाददृष्टार्थत्वाच्चैतानेवदेशा-न्देशान्तरोद्भूताअपिद्विजातयोयत्नतः आश्रयेरन् । शूद्रः पुनर्यदाजीविकाभावपीडितोभवति तदैतद्व्यतिरिक्तदेशेपिनिवसेत् ॥ २४ ॥ **एषेति** । एषा धर्मस्य योनिः कारणं योविद्वद्भिः सेवितः तस्यआफलदानावस्थायिनः कारणमितिसंक्षे-पतोयुष्माकमुक्ता । इहधर्मशब्दोऽपूर्वाख्यात्मसंस्कारे वर्तते विद्वद्भिः सेवितइत्यत्र तु तत्कारणेषु कदाचिदित्युभयत्रापि चायंदृष्टः प्रयोगः । संभवश्चोत्पत्तिर्जगतउक्ता सांप्रतंवर्णैर्ब्राह्मणादिभिर्येऽनुष्ठेयाधर्मावर्णधर्माआश्रमधर्मावर्णाश्रमधर्म-गुणधर्मानैमित्तिकाख्याः पञ्चप्रकाराः तान् शृणुत । वर्णधर्मायथा ब्राह्मणस्य मद्यपानप्रतिषेधः । आश्रम धर्मायथा ब्रह्मचारिणोभैक्षचरणम् । ब्राह्मणोबैल्वदण्डधारणम् । वर्णाश्रमधर्मोयथा पालाशदण्डोब्राह्मणस्येति । गुणधर्मायथाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनम् । नैमित्तिकायथा प्रायश्चित्तमिति ॥ २५ ॥ **वैदिकैरिति** । वैदिकमन्त्रसाध्यत्वात् वेदमूलसाध्यत्वाच्च वैदिकैः स्मार्तैः कर्मभिः विष्णुर्योनिंकल्पयत्वित्येवमादिमन्त्रप्रयोगादिभिः पुण्यैः पारंपर्येण धर्महेतुभिः गर्भाधानादिद्विजातीनांशरीरसंस्कारः कर्तव्यः । पावनःपवित्रीकारकः । प्रेत्य पर-लोके संस्कृतस्य यागादिकर्मफलसंबन्धादिह लोके च संस्कृतस्याध्ययनाद्यधिकारान्निषेकगुणात् पितुरधिकारः । निषेकव-र्जिते तु कदाचित् तत्स्थानापन्नस्य तत्प्रयुक्तस्य वाऽन्यस्यापि न स्यात् ॥२६॥ कुतः पुनरेषां अशुचित्वंयेन पावनंक्रियते इति अतआह **गार्भैरिति** । गर्भनिमित्तंये क्रियन्ते ते गार्भाः होमग्रहणंयथासंभवेगार्भविशेषणं । गर्भाधानादेरहोमकत्वात् सीमन्तोन्नयनादेश्च सहोमकत्वात्, जातस्य यत् क्रियते तज्जातकर्म एते सर्वे गृह्याभिधेयस्वरूपाः इहैव तेषांसामा-न्यमात्राभिधानात् सामान्येस्मृतित्वादस्य । चौलं चूडाकर्म मौञ्जीनिबन्धनं उपनयनं एतैर्बैजिकंप्रतिषिद्धमैथुनसं-कल्पात् पितृरेतसोदुष्टत्वंगार्भिकंगर्भवासनिवासित्वाद्दुष्टत्वंद्विजानामपनुद्यते ॥ २७ ॥ **स्वाध्यायेनेति** । वेदाध्ययनेन

---

(१) नहठानीतः (गो० २, ३, ५,)=नत्वन्येनानीतः (गो० ४)

(२) कारणं=करणं (गो० ३, ४)

(३) आश्रमधर्मा······ब्राह्मणस्येति=आश्रमधर्मा यथा ब्रह्मचारिणो भैक्षचरणम् । वर्णाश्रमधर्मायथा ब्राह्मण-स्य ब्रह्मचारिणो बैल्वदण्डधारणम् । (गो० २, ५)

व्रतैः सावित्र्यादिभिः । होमैः सायंप्रातरग्निकार्यैः । त्रैविद्याख्येनव्रतेन प्राधान्यात् पृथगुपदिष्टेनेज्यया ब्रह्मचर्या-
वस्थायां देवर्षिपितृतर्पणरूपया पुत्रैर्महायज्ञैःवैश्वदेवादिभिःयज्ञैरग्निष्टोमादिभिर्ब्रह्मप्राप्तियोग्यातनुः तत्स्थआत्मा क्रियते
ज्ञानकर्मसमुच्चयान्मोक्षावाप्तेः ॥ २८ ॥ प्राङ्नाभिरिति । नाभिच्छेदनात्पूर्वंपुंसोजातकर्माख्यः संस्कारोविधीयते ।
अस्य च शिशोस्तदानींमतिददामिमधुनोघृतस्येत्येवमादिमन्त्रयुक्तंहिरण्यमाक्षिकं घृतानांप्राशनंकार्यम् । पुंसोग्रहणंनपुं-
सकव्यावृत्त्यर्थम् । यद्यर्थिता तु दारैः स्यात्क्लीबादीनामिति नपुंसकस्य दारदर्शनात् । ये स्तेनाः पतिताः क्लीबाइति
च श्रोत्रियत्वे सति श्राद्धभोजनप्राप्तेः प्रतिषेधदर्शनात् रूयर्थत्वे तस्य प्रमाणंनास्ति । तथा चामन्त्रिकात्विति स्त्रीणाम-
प्राप्तिंवक्ष्यति ॥२९॥ नामधेयमिति । जातकर्मेति प्रसुतत्वात् जन्मप्रभृति दशमेऽहनि द्वादशे वा प्रशस्ते वान्यस्मिन् नव-
म्यादिरिक्ताहोवर्जिते मुहूर्तेऽभिजिदादौ लग्ने पुण्यनक्षत्रे च ज्योतिःशास्त्रगुणयुक्तेऽस्यशिशोर्नामकारयेदसामर्थ्ये । सति
शक्तौ त्वात्मनैव कुर्यात्पिता नाम करोति इति गृह्यश्रवणात् पूर्वकालासंभवे उत्तरोत्तरकालाश्रयणं कर्तव्यमिति क्रमप्रयो-
जनाभावात् । एवमुत्तरत्रापि कालविकल्पेषु विज्ञेयम् ॥३०॥ तच्च माङ्गल्यंब्राह्मणस्येति । मङ्गलबलधननिन्दाप्रतिपादकान्ये-
षांयथाक्रमंभद्रशक्तिधनदीनकादीनि नामानि स्युः ॥ ३१ ॥ उपपदनियमार्थमाह शर्मवद्ब्राह्मणस्येति । शर्मरक्षापुष्टि
प्रेष्यवाचकान्येषांयथाक्रमंशर्मपालपुष्टिदासान्युपपदानि स्युः । उदाहरणानि भद्रशर्मा शक्तिपालोधनपुष्टोदीनदासइति ॥३२॥
स्त्रीणामिति । सुखसुखोच्चारणमक्रूरार्थवाचि विस्पष्टार्थमनःप्रीतिकरंमङ्गलवाचि दीर्घाक्षरान्तमाशीर्वाचकेनाभिधानेन शब्देन
संसक्तंनाम स्त्रीणांकार्यम् । यथा अमरदेवी इति ॥३३॥ चतुर्थ इति । चतुर्थे मासि बालस्य गृहान्नीष्क्रमणंकर्तव्यम् । षष्ठेचान्न-
प्राशनंयथाकुलधर्मत्वेन मङ्गलमिष्टंयथा नाम्ना स्वाम्याद्युपपदपरिग्रहः तथा कर्तव्यंपूर्वोक्तंच ॥३४॥ चूडाकर्मेति । द्विजाती-
नांप्रथमे वर्षे तृतीये वा चूडाकरणंधर्मतोधर्मेणादृष्टार्थंकार्यम् । ॐयत्रबाणाःसंपतन्तिकुमाराविशिखाइवेति श्रुतिलिङ्गात् । अने-
नैतद्दर्शयति यदेवंप्रायः वेदलिङ्गमूलाः स्मृतयइति ॥३५॥ गर्भाष्टमइति । गर्भग्रहणसंवत्सरादष्टमे संवत्सरे ब्राह्मणस्योपनयनमे-
वोपनायनंमौञ्जीबन्धनंकर्तव्यम् । एवंगर्भैकादशे क्षत्रियस्य गर्भद्वादशे वैश्यस्य ॥३६॥ ब्रह्मवर्चसकामस्येति । अध्ययनविज्ञा-
नाप्तितशयकृतंतेजोब्रह्मवर्चसं बालस्य विशेषविज्ञानाभावात्तद्युक्तः पुत्रोमे भवेदित्येवंविधपितृकामनाफलास्पदत्वात्पुत्रोऽप्युप-
दिश्यते ब्रह्मवर्चसकामइतितस्य ब्राह्मणस्य गर्भपञ्चमेऽब्दे उपनयनंकार्यम् । एवंक्षत्रियस्य हस्त्यश्वबाहुवीर्यादिबाह्याभ्यन्तर-
बलार्थिनोगर्भषष्ठे वैश्यस्य बहुकृष्यादिचेष्टार्थिनोगर्भाष्टमे गर्भसवत्सराणामेवप्रकृतत्वात् ॥३७॥ अनुकल्पमाह आषोडशा-
दिति । छन्दःसुपादाक्षरस्तदब्दसमवाये उपनयनमितिहारीतस्मरणात् । आङोऽभिव्याप्त्यर्थत्वेन षोडशवर्षंयावद्ब्राह्मणस्य सा-
वित्र्यनुवचनसाधनमुपनयनंनातिक्रान्तकालंभवति । द्वाविंशंयावत्क्षत्रियजातीयस्य । चतुर्विंशंयावद्वैश्यस्य उपनयनंच पुरुष-
स्य संस्कारः कार्यः । शरीरसंस्कारइतिआम्नानान्नतु तदनन्तरंवेदाध्ययनदर्शनात् ब्रह्मसंस्कारस्य भ्रान्तिः कार्या तत्रानुमा-
निकत्वात् ॥३८॥ अतऊर्ध्वमिति । एते यथाकालंयोयस्योपनयनकालस्तत्रोपकल्पितेऽप्यसंस्कृताः सन्तोऽस्मात्कालात् ऊ-
र्ध्वंसावित्रीपतिताउपनयनभ्रष्टाः शिष्टविगर्हिताःसन्तोव्रात्यसंज्ञाभवन्ति । संज्ञाविधानंव्रात्यानांयाजनंकृत्वेत्येवमादिव्यवहारा-
र्थम् ॥३९॥ यावद्विधिवद्यथाशास्त्रमेते अपूताः कृतप्रायश्चित्तानभवन्ति तावदेतैः सहापद्यपि कदाचित् अध्ययनकन्यादानादीन्
संबन्धान् ब्राह्मणोनाचरेत् ॥४०॥ कार्ष्णरौरवबस्तानीति । कार्ष्णइतिसामान्याभिधानेपि रुर्वाख्यमृगसाहचर्यात् कृ-
ष्णमृगरुरुच्छागचर्माणि ब्रह्मचारिणः उत्तरीयाणि वसीरन् चर्माणि उत्तरीयाणीतिगृह्यवचनाच्च शणक्षुमोर्णामया-
न्यथोत्परिधानीयानि वासांसि वसीरन् । आनुपूर्वग्रहणंक्रमार्थंशाणंक्षौमंचाब्राह्मणस्येतिगृह्यदर्शनादेतयोर्ब्राह्मणगतत्वा-

आम्या विषमसङ्ख्यत्वे सति यथाक्रमसंबन्धात् ॥४१॥ **मौञ्जीति** । मुञ्जाख्या श्लक्ष्णमयी त्रिगुणा समगुणा अपरुषा ब्राह्मणस्य मेखला कार्या । क्षत्रियस्यतु मूर्वामयी ज्या धनुर्गुणो मेखला कार्या । अत्र च ज्यात्वविनाशापत्तेस्त्रिवृत्त्वंनास्ति पूर्वासांगांधिषु तथा प्रसिद्धे वैश्यस्य शणसूत्रमयी । अत्रच त्रैगुण्यं अनुवर्तते गुणानामपेक्षणात् गृह्यस्मृतौ च गुणाम्नानात्॥४२॥**मुञ्जालाभइति** । त्रयाणांब्रह्मचारिणांप्रकृतत्वादभावस्य तुल्यत्वात् कौशादीनां बह्वीनां उपादानंमुञ्जालाभे मुञ्जाद्यलाभइति व्याचक्षते । मुञ्जाद्यभावे कुशादिभिर्यथाक्रमंब्राह्मणादिभिः कर्तव्याः कुशादयस्तृणविशेषाः एताश्च त्रिगुणेन ग्रन्थिनैकेन त्रिभिर्वापञ्चभिर्वा कार्याः । वाशब्दात् ग्रन्थीनांविमादिभिः क्रमसंबन्धाभावः ग्रन्थिभेदश्चायंमुख्यास्वपि भवति वित्तस्य समोसि दैर्घ्योग्रन्थिरसि माविश्रंसइतिग्रंथिंकृत्वेति लौगाक्षिणा मुख्यासु ग्रन्थ्याम्नानात् ग्रन्थिसङ्ख्याभेदंच त्रैविद्यविदःस्मरन्ति ॥ ४३ ॥ **कार्पासमिति** । भाविन्युपवीतसंज्ञा यस्य विशिष्टन्यासस्य तद्विप्रादीनांकार्पासशणोर्णामयंयथाक्रमंकार्यंत्रिवृत् त्रिगुणंसत् ऊर्ध्ववृत्तं दक्षिणावर्तचलितम् ॥ ४४ ॥ **ब्राह्मणाइति** । ब्राह्मणस्य बैल्वःपालाशो वा दण्डइत्यादिवसिष्ठस्मरणात् । प्रतिगृह्येप्सितंदण्ड इति चेहैव दर्शनात् विकल्पेन द्वौ द्वौ दण्डौ बैल्वपलाशवटखदिरपीलूदुंबराख्यवृक्षाणांब्राह्मणादयोऽर्हन्ति ॥ ४५ ॥ **केशान्तिकइति** । केशललाटनासिकासमीपप्रमाणायथाक्रमंब्राह्मणादीनांदण्डाः कार्याः ॥ ४६ ॥ **ऋजवइति** । तेदण्डामृष्टनिश्छिद्राभीषणीयाकाररहिताः सत्वचः अग्निदोषशून्याः स्युः । नचतैः किंचिद्भूतजातं उद्वेजनीयम् ॥ ४७ ॥ **प्रतिगृह्येति** । आमुमिष्टंसंस्तृतंदण्डंगृहीत्वादित्यंचाभिध्यायाग्निमदक्षिणीकृत्य भैक्ष्यंयथाशास्त्रंचरेत् ॥ ४८ ॥ कथमित्याह **भवत्पूर्वमिति** । भवति देहीत्येवंभवच्छब्दपूर्वंभिक्षाप्रार्थनावाक्यंब्राह्मणउच्चारयेत् । एवं भिक्षांभवति देहीति भवन्मध्यंक्षत्रियः । भिक्षांदेही भवतीति भवदुत्तरंवैश्यः ॥ ४९ ॥ **मातरमिति** । मातुर्भगिनी मातृष्वसा प्रथममुपनयनाङ्गभूतंभैक्षमेतांयाचेन्नाम्यांया च प्रत्याख्यानेन ब्रह्मचारिणंनावमानयेत् । निजा सोदरा ॥ ५० ॥ **समाहृत्येति** । तद्भैक्ष्यंयावदर्थंतृप्तिपरिमाणममायया कदन्नपरिहारेण बहुभ्यआहृत्य गुरवे निवेद्य तेनानुगृहीतंसदाचम्य शुचिः सन् प्राङ्मुखोऽश्नीयादिति दिङ्नियमः । आचम्य उपस्पृश्यद्विजोनित्यमिति वक्ष्यमाणविध्यनुवादस्तत्रखानिचेत्यादिनास्यसविशेषस्यचोदिष्यमाणत्वात् ॥ ५१ ॥ काम्यमिदानीमाह **आयुष्यमिति** । आयुषे हितमन्नंप्राङ्मुखोभुङ्क्ते इतिलिङ्गर्थोयंद्रष्टव्यः । अन्यथानर्थक्यादेवंचायुष्कामः प्राङ्मुखोभुङ्क्ते उक्तंभवत्येवंयशसे हितंदक्षिणामुखः श्रियमिच्छन् प्रत्यङ्मुखः ऋतं सत्यंतत्फलहेतुत्वादन्नमपृतंउदङ्मुखोभुङ्क्ते ॥ ५२ ॥

[सायंप्रातर्द्विजातीनामशनंश्रुतिनोदितं ॥ नान्तराभोजनंकुर्यादग्निहोत्रसमोविधिः ॥ १ ॥]

**उपस्पृश्येति** । सर्वदा ब्रह्मचर्यांदूर्ध्वमपि द्विजआचम्यान्नंसमाहितोऽनन्यमनाभुञ्जीत । भुक्त्वा च यथाशास्त्रमुपस्पृशेत् अद्भिश्च खानीन्द्रियच्छिद्राणि खानि चोपस्पृशेच्छीर्षण्यानीति गौतमस्मरणात् । शिरस्यानि संस्पृशेत् । उपस्पृशेदित्युक्त्वा खानि च संस्पृशेदिति यत्पृथगाहात्तोवसीयते । यदुपस्पर्शनाचमनशब्दाभ्यांत्रिरभ्युक्षणमात्रंप्रधानंउच्यते खस्पर्शनादिकाङ्गितिकर्तव्यतेति । तथा चाचमनमिति भक्षणार्थेनैवं धातुसमाख्यानात् ॥ ५३ ॥ **पूजयेदिति** । सर्वदान्नंपूजयेद्देवतात्वेन प्राणार्थत्वेन च ध्यायेदनिन्दयंश्चैतदन्नमद्यात् । दृष्ट्वा च तुष्येत्प्रसीदेच्च । हेत्वन्तरजमपि खेदंजह्यात् प्रतिनन्देत् । अहन्यान्नित्यमेतन्मे स्यादित्येवं सर्वशः सर्वप्रकारम् ॥ ५४ ॥ **पूजितमिति** । यस्मात्सत्पूजितमन्नंसामर्थ्यंवीर्यंच ददाति अपूजितंच तद्भुक्तं उभयंनाशयति तस्मात्पूजितमद्यादिति प्रकृतस्तुतिः फलार्थत्वेन नित्यतापत्तेः ॥ ५५ ॥ **नोच्छिष्टमिति** ।

उच्छिष्टंकस्यचिदपि न दद्यात् । तथान्तरा सायंप्रातःकालयोर्मध्ये नाद्यात् सायंप्रातर्भोजनस्यौचित्यंप्राप्तत्वादन्तरा-शब्दस्य वा मध्यवाचित्वादेवंलभ्यतेऽतिमात्रभोजनंनकुर्यात् । उच्छिष्टश्च न क्वचित् गच्छेत् ॥ ५६ ॥ अनारोग्यमिति । यस्माद्रोगहेतुत्वात् अनारोग्यकृदिति च प्राणहरंविष्टाधिकाद्युत्पादादप्यनायुष्यंच अस्वर्ग्यंच दृष्टार्थजनकत्वेनापि शास्त्रनोदनासामर्थ्यादतिक्रमेण कर्मान्तरार्जितस्वर्गोपभोगप्रतिबन्धत्वादपुण्यंच तद्धेतुत्वाल्लोकविद्विष्टंच बहुभोजनमवलोक्य गर्हणंतत्परिवर्जयेदिति संभूतदोषकथनेन प्रकृतिनिन्दार्थवादो विद्वेषणार्थः ॥ ५७ ॥ ब्राह्मेणेति । ब्राह्मेण तीर्थेन प्राजापत्यदैवाभ्यांवा विप्रोयावज्जीवमुपस्पृशेत् पित्र्येण पुनः कदाचिदिति नित्यानुवादइतरस्तुत्यर्थाविधानादेव पित्र्यस्याप्राप्ते विप्रग्रहणंक्षत्रियादिप्रदर्शनार्थं उपस्पृश्य द्विजोनित्यमिति एतयोरपि प्रकृतत्वात् ॥ ५८ ॥ अप्रसिद्धत्वाल्लक्षणमाह अङ्गुष्ठमूलस्येति । ब्राह्मणस्य दक्षिणहस्ते पञ्चतीर्थानि भवन्तिइति प्रचेतसः स्मरणात् । दक्षिणहस्ताङ्गुष्ठमूलस्याधोभागे ब्राह्मंतीर्थंप्रचक्षते । कायमङ्गुलीनांमूलेग्रे दैवमङ्गुलीनामेवाग्रश-ब्दस्य साकाङ्क्षत्वात्पित्र्यंतयोरधः तयोरित्यस्यापिसाकाङ्क्षत्वात् प्रकृतेनाङ्गुष्ठाङ्गुलिना संबन्धः ॥ ५९ ॥ आचमनस्यालौकिकत्वात्स्वरूपमाह त्रिरिति । प्रथमंत्रीन्वारानपस्तीर्थेनाचमेत्ततः आस्यंद्वौ वारौ अपि शोधयेत्तदनु च खानि इन्द्रियच्छिद्राणि अद्भिः स्पृशेत् ततः आत्मस्थानंहृदयं अथोशिरइति ॥ ६० ॥ अनुष्णाभिरिति । अ-शृताभिरिति शङ्खस्मरणात् अग्निसंपर्करहिताभिः फेनशून्याभिरद्भिरुक्तेन तीर्थेन विद्वान् शुद्धिकामएकान्ते शुचौ देशे प्राङ्मुखउदङ्मुखोवाचामेत् ॥ ६१ ॥ किंप्रमाणाआपआचामेदित्यतआह हृद्गाभिरिति । हृदयप्राप्ताभिरद्भिर्विप्रः शुध्यति । कण्ठप्राप्ताभिः क्षत्रियोवैश्यः प्राशिताभिस्तालुगताभिर्न्त्कण्ठतालुगाभिरिति याज्ञवल्क्यस्मरणात् शूद्रोऽन्ततः आचमनस्य प्रकृतत्वात् जिह्वोष्ठास्यांते स्पृष्टाभिः । उपवीत्यादीनामप्रसिद्धत्वात् लक्षणमाह आचमनावसरे चोपवीतस्याचमनाङ्गत्वार्थम् ॥ ६२ ॥ उद्धृतइति । कार्पासमुपवीतंस्याद्रुक्तलक्षणं उपवीते कण्ठसज्जने कण्ठप्रक्षिप्ते सति निवीती भवत्येवंस्थिते सति उद्धृते दक्षिणे बाहावुपवीती भवति । वामउद्धृते प्राचीनावीत्येवंलक्षणद्वयप्रसिद्ध्यर्थमिहैतन्निवीतलक्षणंमनुष्यकार्यार्थंच निवीतंमनुष्याणामिति श्रुतेः । प्राचीनावीतीति संज्ञा वृत्तानुरोधात्तु प्राचीनमावीत्युक्तमेतच्च पित्र्ये कर्मणि ॥ ६३ ॥ मेखलामिति । विनष्टानि मेखलादीनि अप्सु प्रक्षिप्यान्यानि समन्त्रकाणि गृह्णीयात्तानि । तथा च बौधायनेन सर्वेषांमन्त्रआम्नातः मेखलादिभिश्च शास्त्रवद्ग्रहणैः सह प्रतिपत्तिनियमात् गृहीताम्यानि मन्त्रवदिति च कमण्डलोरप्युक्तत्वात् कमण्डलोरप्युदकार्थशास्त्रवद्ग्रहणमित्यवसीयते । पुनर्ग्रहणाच्चोपनयनोत्तरकालमप्येषामनुवृत्तिरनुमीयते नोपनयनगतैव ॥ ६४ ॥ केशान्तइति । केशान्ताख्यः संस्कारोब्राह्मणादीनांयथाक्रमंषोडशद्वाविंशचतुर्विंशेषु वर्षेषुविधीयते ॥ ६५ ॥ प्राङ्नाभिवर्धनात्पुंसइति । पुंग्रहणस्य रूपर्थत्वे प्रमाणाभावात् स्त्रीणामप्राप्तइत्यतआह अमन्त्रिकेति । एषा सकलसंस्कारपद्धतिः कालक्रमानतिक्रमणेन स्त्रीणांसंस्कारार्थंमन्त्रवर्जिता कार्या ॥ ६६ ॥ एवमुपनयनेप्यमन्त्रके प्राप्तआह वैवाहिकइति । यद्विवाहविधानंतदेवासांवैदिकसंस्कारोपनयनस्थाने पतिसेवा च गुरुशुश्रूषास्थाने गृहकृत्यंचाग्निपरिचरणस्थाने ॥ ६७ ॥ एषइति । एषद्विजातीनामुपनयनभवोविधिरुक्तउत्पत्तेर्व्यञ्जकप्रकाशकोजातस्याप्यनुपनीतस्याज्ञातसमत्वात् पुण्यहेतुत्वात्पुण्यः । इदानीं उपनीतस्योपनयनकर्मणि संबन्धस्तच्छृणुत ॥ ६८ ॥ उपनीयेति । गुरुः शिष्यमुपनयनंकृत्वाऽऽदौ प्रथमतएव शौचंशिक्षयेत् अशुद्धस्य सर्वत्रानधिकारात् । ततआचारं प्रत्युत्थानादिकार्यंच सायंप्रातरग्निसमित्प्रक्षेपादि सान्ध्यकर्मानुष्ठानंच शिक्षयेत् ॥ ६९ ॥ अध्येष्यमाणइति ।

प्रत्यासन्नाध्ययनः शिष्यः कृतशास्त्रचोदितेतिकर्तव्यतायुक्ताचमनः कृतवक्ष्यमाणब्रह्माञ्जलिः । अस्थूलवसनः सन् जितेन्द्रियउदङ्मुखोध्याप्यः ॥ ७० ॥ ब्रह्मारम्भइति । आन्वहिकवेदापाठारम्भान्तयोः सदाहरहः गुरोः पादोपसंग्रहणकंकर्तव्यं । संहतौ च कच्छपके इति प्रसिद्धसंनिवेशेन हस्तौ कृत्वाध्येतव्यं यस्मात्सब्रह्माञ्जलिशब्देनोच्यतइत्यृऽषिभिः स्मृतः इत्यलौकिकत्वात् ब्रह्माञ्जलिस्वरूपनिरूपणम् ॥ ७१ ॥ कथंपुनः पादोपसंग्रहणंककर्तव्यमित्यतआह व्यत्यस्तपाणिनेति । इतरेतरविर्गापितहस्तेन गुरोः पादोपसंग्रहणंकर्तव्यं । वामेन च हस्तेन वामपादः स्पर्शनीयः दक्षिणेन तु दक्षिणः ॥ ७२ ॥ अध्येष्यमाणमिति । प्रत्यासन्नाध्ययनंशिष्यं अनलसोगुरुः सर्वकालमधीष्व भो इति ब्रूयात् । विरामोस्त्विति चोक्तानन्तरमध्यापनान्निवर्तेत ॥ ७३ ॥ ब्राह्मणइति । वेदपाठस्यारम्भान्तयोरोंकारंसर्वदा ग्रहणार्थाध्यापनकालात्कालान्तरेपि कुर्यात् । यस्मादस्य ब्रह्मणः पूर्वमोंनकृतस्तत स्रवति गृहीतमपि विस्मृत्य गच्छति परस्ताच्च विशीर्यते । यस्य न कृतस्तद्विशीर्यते नैवगृह्यते ॥ ७४ ॥ प्राक्कूलानिति । प्राणोपस्पर्शनंदर्भैः प्राक्कूलेष्वासनंचेति गौतमस्मरणात् । प्रागग्रेषु च दर्भेष्वासीनोऽतएव च पवित्रैर्दर्भैरेवप्राणस्थानात्हृदयस्पृष्टैः । पवित्रीकृतप्राणायामैश्च श्वासनिरोधरूपैस्त्रिभिः प्राणायामः त्रिपञ्चदशमात्राइति गौतमोक्तप्राणायामैः पवित्रीकृतः । ततओंकारं पूर्वोक्तं कर्तुंयोग्योभवति ॥ ७५ ॥ ब्रह्मणः प्रणवंकुर्यादित्यस्यार्थवादमाह अकारमिति । त्रिभ्यइति । अकारोकारमकारात्मकः किलोंकारः एतच्चाक्षरत्रयं वेदत्रयात्सारभूतं प्रजापतिरुद्धृतवान् । तथाभूर्भुवःस्वरित्येतच्च महाव्याहृतित्रयमुद्धृतवानिदं चेयंव्याहृतिस्तुतिः । अध्ययनकालेतद्विधानार्थात्राकस्मात् स्तुतिः वर्ततेइतिप्रयोजनात् तत्सवितुर्वरेण्यमित्यस्याः सवितृदेवताकायाऋचः पादंपादंयथाक्रमंत्रिभ्यएववेदेभ्यः परमेष्ठी हिरण्यगर्भः प्रजापतिः उद्धृतवानित्ययमप्यध्ययनकालः विध्यर्थः साविञ्यर्थवादः ॥ ७६ ॥ ७७ ॥ एतदिति । एतदोंकाराख्यमक्षरमेतांचसावित्रीं भूर्भुवः स्वरित्येतद्व्याहृतिपूर्विकांवेदार्थज्ञोविप्रः सन्ध्ययोर्जपन् समस्तवेदपुण्येन संबध्यते । इति विद्वान् ब्राह्मणः सन्ध्याजपसंभूतफलमाहात्म्यकथनेन प्रकृत विधित्रयस्तुतिः ॥७८॥ सहस्रकृत्वइति । एतत्त्रयंसहस्रवारान् अहर्मासंयावद्बहिर्ग्रामात् द्विजोभ्यस्य महद्ब्रह्महत्यादपि पापमपनुदति । जीर्णंचर्मेव सर्पइति । रहस्यप्रायश्चित्तगतमाहात्म्यकथनेन प्रकृतविधित्रयस्तुतिः ॥ ७९ ॥ एतयेति । एतया ऋचा साविञ्या वियुक्तोवेदाध्ययनाभावादुपनयनकाले चात्मीययोपनयनाख्यक्रियया वियुक्तोब्राह्मणक्षत्रियवैश्यजातीयोनिन्दतांशिष्टविषये प्राप्नोतीत्यनयोर्निन्दाद्वारेण विधित्रयोपनयनयोःस्तुतिः ॥ ८० ॥ ओंकारपूर्विकाइति । ओंकारपूर्विकास्तिस्रएताभूरादयामहाव्याहृतयोऽव्ययाअविनाशिन्यः तत्फलस्य दीर्घकालत्वात् पादत्रययुक्ता चेयं तत्सवितुर्वरेण्यमिति सावित्री ब्रह्मणोमुखं वेदप्राप्तिद्वारं विज्ञेयमतः स्वाध्यायमादावेतदध्ययेमिति प्रकृतार्थस्तुतिः ॥ ८१ ॥ यइति । यएतांसावित्रीमहन्यहन्त्रीणि वर्षाण्यनलसोधीते सवायुरिव सर्वत्राप्रतिहतगतिः खमूर्तिमानाकाशरूपः सन् सर्वव्यापित्वात्परब्रह्म परमात्मलक्षणमाभिमुख्येन प्राप्नोतीति जपमाहात्म्यकथनेन प्रकृतविधिस्तुतिः ॥ ८२ ॥ एकाक्षरमिति । ओंकाराख्यमेतदेकाक्षरंपरं ब्रह्म शब्दपरं ब्रह्मणोवेदान्तस्यप्राप्त्युपायः प्राणायामः कृच्छ्रादितपोभ्यः प्रकृष्टंतपः साविञ्याः प्रकाशादन्यत्प्रकृष्टंजपनीयंनास्तीत्येवंप्रकृतोंकार प्राणायामसावित्रीविधीनांस्तुतिः । मौनात्सत्यंविशिष्यते । मौनमनृतदोषपरिहारातिरेकेण सत्यवचनेनाभ्युदयोत्पादादिति स्तुतिप्रसङ्गेन सत्याभिधानस्तुतिः ॥ ८३ ॥ क्षरन्तीति । सर्वाणि वेदचोदितानि होमयागानुष्ठानानि नश्वराणि तत्फलक्षयत्वात् । अक्षरंपुनरेतदोंकाराख्यं अक्षयंब्रह्मतदर्थभावनाद्वारेण ब्रह्मावाप्त्याख्य

स्य फलस्याक्षयत्वात् । ब्रह्म च प्राजापत्याख्यम् । एतदेव शब्दार्थयोर्वेदान्तदृष्ट्योत्पादितवैदिककर्मनिन्दया प्रकृतार्थस्तुतिः ॥ ८४ ॥ विधियज्ञादिति । बाह्यव्यापारसंपाद्याद्यग्निष्टोमादेर्जपयज्ञोविशिष्टोदशभिर्गुणैः दशगुणफलत्वात् । सएव चोपांशुर्यपरोन शृणोति सशतगुणोमनोव्यापारसंपाद्यश्चसहस्रगुणइत्यभ्यासातिशयापेक्षया द्रव्यत्यागादपि चान्तःसंयमस्य दुःसहत्वात् वैदिककर्मफलाधिक्येन जपमाहात्म्यकथनंप्रकृतविधिस्तुत्यर्थम् ॥ ८५ ॥ यइति । येपाकयज्ञादयश्चत्वारोज्योतिष्टोमादिविधियज्ञसहितास्तेसर्वेजपयज्ञस्य षोडशभागंमूल्यार्थेनलभन्तइति श्रौतस्मार्तकर्मनिन्दया इदं आत्मज्ञानवान् प्रकृष्टफलदर्शनेन जपमाहात्म्यकथनं प्रकृतविधिस्तुत्यर्थम् ॥८६॥ जप्येनैवत्विति । जप्येनैव ब्राह्मणोमोक्षंप्राप्नुयादत्र संशयएव नास्ति कथमल्पप्रयासेन महत्फलंप्राप्यतइति । द्रव्यत्यागादप्यन्तःसंयमस्य दुष्करत्वात् । एवंच कुर्यादन्यत्तादर्थ्येन ज्योतिष्टोमादिकमसौ कर्म यदि वा न कुर्यात् यतः सर्वभूतोपकाररतोब्राह्मणः स्यादितिशास्त्रेणोच्यते । अग्निष्टोमीयादिवधेन कुतोमैत्रीति एवंश्रौतस्मार्तकर्मानुष्ठानाशक्तोजप्यपरः पुरुषः संसिद्ध्यनुवादोयं प्रकृतविधिस्तुत्यर्थः ॥ ८७ ॥ इन्द्रियाणामिति । इन्द्रियाणांचक्षुरादीनांविषयेषु रूपादिषु अपहारिषु च उपभोगार्थमाकर्षणशीलेषु यथेच्छंप्रवर्तमानानांनियमने प्रयत्नंकुर्यात् । यथाशिक्षितः सारथी रथ्यारब्धानामश्वानांनियमने यत्नंकरोति ॥ ८८ ॥ एकादशेति । यानि पूर्वे मन्वादयोविद्वांसः इन्द्रियाण्युक्तवन्तः तानि यथावत्कात्स्र्न्येनानुपूर्वशः क्रमेण सम्यक् यथारूपंबुध्यध्व तथावक्ष्यामि ॥ ८९ ॥ तानि च श्रोत्रमिति । त्वक्कर्मतास्थ्यादत्रस्पर्शनेन्द्रियंत्वगुच्यते चक्षुषीत्यधिष्ठानभेदाद्द्विवचनम् । श्रोत्रादौ च तदाधारशक्त्यैक्यालंबनमेकवचनम् । पायुरपानं उपस्थःलिङ्गं वाक्शब्दाभिव्यञ्जकशरीरैकदेशः ॥ ९० ॥ बुद्धीन्द्रियाणीति । एषांमध्यात श्रोत्रादीनिक्रमेण पञ्चबुद्धेः शब्दादिविषयविज्ञानस्य जनकानि पञ्च पाय्वादीनि विसर्गादिकर्मार्थानि मन्वादयः कथयन्तीति कार्यभेदाद्वर्गद्वयविभागः ॥ ९१ ॥ एकादशमिति । मनः स्वगुणेन संकल्पाख्येन शुभाशुभस्वभावेनोभयरूपमत्रैकादशंविज्ञेयम् । यस्मिन्वशीकृते सत्येतौ पञ्च परिमाणौ वर्गौ वशीकृतौ भवतः मनोव्यापारमूलत्वादिन्द्रियप्रवृत्तेः ॥ ९२ ॥ अधुनेन्द्रियसंयमप्रयोजनमाह इन्द्रियाणामिति । इन्द्रियाणांविषयशक्त्या दृष्टादृष्टदोषंनिश्चितंपुरुषः प्राप्नोति तान्येव संयम्य पुनर्दृष्टादृष्टपुरुषार्थसिद्धिंनिश्चयेन प्राप्नोति ॥ ९३ ॥ अथोपभोगतृष्णयाकिमिन्द्रियाणांविषयनिवृत्तिर्नोच्यते किंशक्तिनिषेधेनोच्यतइत्यतआह नजात्विति । न कदाचिदभिलाषः काम्यमानानामर्थानां उपसेवनेन निवर्तते । प्रत्युताज्यादिनाग्निरिवाधिकतरंवर्द्धतेइति ॥ ९४ ॥ एवंच यइति । यः कामान्सकलान् सेवेत योवा केवलाननुपभुज्यैव त्यजेत्तयोः सर्वकामोपभोगादपि परित्यागोविशिष्यते । यस्मादुपभुक्तपूर्वेष्वपि असति चित्तसंयमे पुनरुपभोगेच्छा जायते तदसंपत्तौ चावश्यंभावि दुःखंतस्मान्मूलतएव तृष्णात्यागोवरः ॥९५॥ एवंतर्हि विषयशून्यदेहावस्थानमात्रउपायइत्यतआह नेति । एतानीन्द्रियाणि विषयासक्त्या प्रकृष्टदोषजनकानि न तथा रूपादिविषयानुपभोगेन सम्यक् नियन्तुंशक्यन्ते । यथा विषयगतदोषभावनाविज्ञानेन नित्यकालंनियन्तुंपार्यते ॥ ९६ ॥ वेदाइति । जपदानस्नानयागादिकृच्छ्रादीनि दुष्टचित्तस्य नकदाचित् संपन्नानि भवन्तीति ॥ ९७ ॥ श्रुत्वेति । यः श्रोत्रत्वक्चक्षुर्नासिकेनेष्टान् शब्दस्पर्शरसरूपगन्धान् उपलभ्य महर्षमुपैति कुत्सितांश्चोपलभ्य नग्लानिमेति सजितेन्द्रियोबोद्धव्यः ॥ ९८ ॥ सकलेन्द्रियविषयस्य संयमे यत्नः कार्यः यस्मात् इन्द्रियाणामिति । इन्द्रियाणां मध्यात् यदि पुनरेकमपीन्द्रियंयथेच्छंस्वविषये भवति तदा स्वेन्द्रियान्तरसंयमविज्ञानमपि नश्यति यथोदकपरिपूर्णाच्चर्मणः एकपादानावरणात् सर्वम-

म्भोनिःसरति ॥ ९९ ॥ यतएवमसंजितेन्द्रियमनस्कस्य नवेदादिसिद्धिः तस्मात् वशइति । शक्त्या शरीरमपीडयन्निन्द्रियसमूहंविजित्य मनश्च नियम्य सर्वान्वेदाधिगमादीनर्थान् संपादयेत् ॥ १०० ॥ सन्ध्योतिषाज्योतिषांदर्शनात् वाग्यतइति गौतमस्मरणात् सनक्षत्रकालमवारभ्य पूर्वामिति । यद्यप्यत्र तिष्ठत्यास्यापरोविधिः प्रत्ययः श्रूयते । तथाप्युपलभ्यमानश्रुतिमूलत्वात् यज्जपोत्रप्रधानंस्थानासनयोस्त्वङ्गता । तथा च यत्र वेदब्राह्मणे जपतेरेवपरो विधिप्रत्ययः श्रूयते । यदाहाथातः सन्ध्योपासनविधिः ( १ ) व्याख्यास्यामः इत्युपक्रम्य पूर्वांसन्ध्यांस्थितः सन् सावित्रीमेतदक्षरमेतांच जपन् व्याहृतिपूर्विकांसन्ध्ययोरिति दर्शनात् । प्रणवव्याहृतिपूर्विकांजपेदादित्यदर्शनंयावदिति वाक्यार्थः पश्चिमांपुनरासीनः सावित्रींजपेदुक्तगौतमीयात् सदर्ककालादारभ्य सम्यक् नक्षत्रदर्शनात् यावत् ॥ १०१ ॥ पूर्वामिति । पूर्वांसन्ध्यांतिष्ठन् सावित्रींजपन् संचितंमतनुराम्युत्पन्नंपापमपनुदति सर्वापनोदने प्रायश्चित्तकाण्डानर्थक्यात् । एवंपश्चिमसन्ध्यायामुपविष्टोजपन् दिवाकृतपापमपहन्ति ॥ १०२ ॥ एवं कथंचिदकृतेनसोननुष्ठानप्राप्तौ नित्यतामाह नेति । यः पुनः पूर्वांसन्ध्यांनानुतिष्ठति योवा पश्चिमांनोपास्ते सोध्ययनदानादिद्विजकर्मणः सर्वस्माच्छूद्रवत्परिहरणीयः । इत्येवंनिन्द्येयमवश्यानुष्ठानार्था ब्रह्मयज्ञविध्यर्थंब्रह्मचारिणामनुदिनमाह ॥ १०३ ॥ अपामिति । ग्रामाद्बहिर्विविक्तप्रदेशंगत्वा नियतः शुचिः समाहितः संयतमनानित्योयंब्रह्मयज्ञविधिरित्येवमास्थितः उत्पन्नास्थअपां समीपे मन्त्रान्तरपाठात् सावित्रीमपि जपेत् । स्वाध्यायविधिवत्प्रकरणान्तरेणानध्यायाम्नानाद्वेदवेदाङ्गोच्चारणमात्रधर्मत्वात् ॥ १०४ ॥ शंकायांब्रह्मयज्ञादावप्यनध्यायप्राप्ताबाह वेदोपकरणइति । वेदोपकारके निरुक्तादावङ्गे नित्यभवे च स्वाध्याये ब्रह्मयज्ञाख्ये होमार्थमन्त्रोच्चारणे वानध्यायानुरोधोनास्ति । वेदोपकरणादीनांमसंगाच्छलावद्यार्थमनभिधानम् । हि शब्दआगमप्रसूचकः ॥ १०५ ॥ अत्रार्थवादमाह नैत्यकइति । नैत्यकएककालिन्ब्रह्मयज्ञेऽनध्यायोनास्ति यस्मात् ब्रह्मसत्रं तन्मन्वादिभिः स्मृतम् । अतःसततप्रवृत्तगवामयनादिसत्रतुल्यत्वात् सर्वदैव तदनुष्ठेयम् । किमस्यसत्रसादृश्यमित्यतआह ब्रह्माहुतिहुतमित्यादि सत्रंसोमाहुत्याहुतंभवतीदमपि वेदोच्चारणाहुत्या हुतंब्रह्माहुतिरिवाहुत्यर्थत्वात् पुण्यहेतुत्वाच्च । सत्रतुल्यंसत्रंचप्रदानार्थेन वषट्कारेण युक्तंभवतीदमपि अनध्यायाध्ययनादनध्यायवषट्कृतम् ॥ १०६ ॥ यइति । एवंब्रह्मयज्ञाख्यंस्वाध्यायमरण्ये गमनाद्युक्तविधानेन संयतमनाः शुचिः सन्यः संवत्सरमधीते तस्यैवपयोदधिघृतमधूनि नित्यंददातीति । एवंच नित्यत्वेपि फलकामनया फलमप्यतोभवति दर्शपौर्णमासवत् ॥ १०७ ॥ अग्नीन्धनमिति । अग्निसमिदाधानभैक्षचरणखट्वाशयनगुरुगृहोपलेपनादीन्यनुष्ठितानि समावर्तनाख्यव्रतकालंयावदुपनयनकालोत्तरकालंद्विजः कुर्यात् । प्रधानानुपयायित्वेनाङ्गानांब्रह्मचर्यमेषामनुवृत्तिसिद्धये पुनर्वचनं नियमाय भवतीत्येतावन्त्येवसमावर्तने निवर्तन्ते । अन्यानि पुनः सन्ध्योपासनादीनि आश्रमान्तराविरुद्धानि यावज्जीवंभवन्तीति । तथा च गौतमः उत्तरेषांचैतदविरोधीनि अतएव नैतान्यासमावर्तनात्कुर्यात् यानि पुनरर्वागपि निवर्तन्ते इत्येवंविधिविपरीतनियमोनभवति प्रधानानुवर्तित्वात्तथावचनमसङ्गतम् ॥ १०८ ॥ आचार्यपुत्रइति । आचार्यपुत्रः परिचर्यापरः विद्याप्रदः धर्मानुष्ठानशीलः शुद्धार्यादिविद्यायुक्तः बन्धुः ग्रहणधारणसमर्थः अग्रणपूर्वमन्यथंदाता आर्जवोपेतः आत्मनोपनीतः एतेदशधर्मार्थमध्याप्याः । अर्थदः शुश्रूषुर्ज्ञानप्रदश्चाध्यापनादपि धर्मोस्ति नियमादृष्टरूपेणेति वचनात् ॥ १०९ ॥ नापृष्टइति । पूर्वोक्तव्यतिरेकेणान्यस्य स्वल्पमिदमधीयानस्य विस्वरादिकतस्ततोऽपृष्टेन कथयेन्नापि मितण्डया पृच्छतः किंतर्हि तत्र जानन्नपि प्राज्ञोबधिरवल्लोके व्यवहरेत् । अत्रार्थवादोनिषेधार्थः ॥ ११० ॥ अधर्मेणेति । उक्तमर्यादातिक्रमेण यः प्राह यीवा पृच्छति तयोरन्यतरोयोऽतिक्रमकृत् सम्रियते द्वेषंवा लोके भजते ॥ १११ ॥

पूर्वोक्तनिमित्तानामभ्यावधर्मादिनिमित्तत्रयस्य उपायत्वंदर्शयितुमाह धर्मार्थाविति । यदध्यापने धर्मोपणपूर्वोवार्थोन
भवेत्पणपूर्वकस्य भृतकाध्यापकत्वेन निषिद्धत्वात् परिचर्याध्यापनानुरूपा परिपुष्टबीजमिवाङ्कुरजननासमर्थे भूमदेशे
॥११२॥ एवंच विद्ययेति । वरमदत्तविद्येनैव विद्याध्यापनशीलेन मर्तव्यं न पुनः काष्ठायामप्यापद्युक्ताध्याप्याभावेप्येनां-
विद्यामीरिणे ऊषरइवधर्मादिफलोत्पादनशून्ये वपेत् । अनेन चैतद्दर्शयति यदवश्यंदातव्या विद्येति । अन्यथा कामं
विद्ययैव सह मर्तव्यमित्येतदभावसंसूचनमाचार्यसंबन्धेनोपपद्यते । तथाचश्रुतिः ॥ योहवैविद्यामधीत्यार्थिनेनब्रूयात्स-
कार्यहास्यादिति ॥ अस्य प्रतिषेधस्य पुराकल्परूपोयमर्थवादः ॥ ११३ ॥ विद्याब्राह्मणमित्याहेति । यमेवत्विति ।
विद्या किल विग्रहवती कंचिद्ब्राह्मणमागत्य निधिरिव तवाहमतोरक्षमामित्याह । रक्षा चासूयकमपात्रंमांमाध्यापय ।
तथा सत्यहमतिशयेन, तवदृष्टादृष्टकार्यकरणसमर्था भवामि । यंपुनर्मृद्वार्यादिशौचयुक्तंनियतंसंयतेन्द्रियंब्रह्मचारिणम-
प्रीसंभवोनंनामीयात्माधाध्यादस्य पृथगुपदेशस्तंविप्रंविद्यानिधिपालनसमर्थमविस्मरणशीलममादिनमनभ्यासशून्यमध्या-
पयेति ॥ ११४ ॥ ११५ ॥ ब्रह्मेति । अन्यानध्यापयतोऽविस्मरणार्थंचाभ्यस्यतोऽननुज्ञातंब्रह्म शिक्षेत्सब्रह्मचौर्ययुक्तोनरकं-
व्रजति ॥११६॥ लौकिकमिति । लौकिकंदृष्टहितार्थमायुर्वेदादिकं वैदिकं वेदवेदाङ्गविषयम् । आध्यात्मिकंसाङ्ख्याद्यध्या-
त्मविद्याविषयंज्ञानम् । यतः शिष्येत तंपूर्वंतदभिभाषणनिरपेक्षवक्ष्यमाणप्रकारेणाभिवादयेत् ॥ ११७ ॥ अत्रार्थवादः सावि-
त्रीसारमात्रइति । यदि विप्रः सुयन्त्रितोऽभिवादाचारानुष्ठानयन्त्रितात्मा भवति तदा सावित्रीमात्रप्रधानोपि ताव-
न्मात्राध्येतापि वरंप्रशस्यः न त्वनाचारस्त्रिवेदोपि प्रशस्योयतोऽसावयन्त्रितत्वात् सर्वाशी सर्वविक्रयी च भव-
ति ॥ ११८ ॥ शय्यासनइति । शय्यासनंयद्गुर्वादिना सेवितंसेव्यमानंवा तत्र नोपविशेत् शय्यासनस्थश्चैनमाया-
न्तंदृष्ट्वा ततउत्थायाभिवादयेत् ॥ ११९ ॥ अत्रार्थवादोभयदर्शनेन ऊर्ध्वमिति । यस्माज्ज्येष्ठआगच्छति सति कनीय-
सः प्राणाऊर्ध्वंनिर्गन्तुमिच्छन्त्यनाचारेणायुःक्षयात् । प्रत्युत्थानाभिवादाभ्यांहेतुभूताभ्यांपुनस्तान्स्वीकरोति तस्मात्तौ
कर्तव्यौ ॥ १२० ॥ अयंत्वपरोत्रैवोपकारदर्शनेन अभिवादनशीलस्येति । अभिवादनकरणस्वभावस्य सर्वदा
वृद्धेषु परिचर्यारतस्यायुःप्रज्ञायशोबलानि चत्वारि वृद्धिमुपयान्ति ॥ १२१ ॥ कथंपुनरभिवादनंकार्यमित्यतआह-
अभिवादात्परमिति । ज्येष्ठाभिवादनंकुर्वन्नभिवादयइत्येतच्छब्दात्परंभद्रनामाहमस्मीत्येवंस्वंनामोच्चारयेत् । विप्रग्र-
हणमिहमत्यभिवादवाक्ये च द्विजोपदर्शनार्थंत्रयाणांप्रकृतत्वात् ॥ १२२ ॥ एवंसर्वत्रस्वनामोच्चारणप्राप्तावाह नाम-
धेयस्येति । नामउच्चारितस्य सतोयदभिवादनमभिवाद्यानबुध्यन्तेऽसंस्कृतत्त्वादनभिज्ञाये ताम्प्राज्ञोऽभिवादयेऽहमित्येवं-
ब्रूयात् । स्त्रियःसर्वाभिज्ञाअप्येवमेव ब्रूयात् ॥ १२३ ॥ भोःशब्दमिति । अभिवादने यत्स्वंनामतदन्ते भोःशब्दं-
कीर्तयेत् । तथाभिवाद्यसंबोधनार्थोयतआह नाम्नामिति । यस्मान्नाम्नांया स्वरूपसत्ता सैव भोभावोभोइत्यस्य स-
स्तेति मन्वादिभिः स्मृतः । अतश्चाभिवाद्यनामस्थानापन्नंतत्संबोधनार्थं भोःशब्दंकीर्तयेत् । तेनाभिवादयेभद्रनामा-
हमस्मि भोइत्यभिवादनरूपम् ॥ १२४ ॥ इदानींमत्यभिवादनविधिमाह आयुष्मानिति । अभिवादने कृतआयु-
ष्मान्भव सौम्येत्येवमभिवादयिता वाच्यः । अभिवादयितुश्च नाम्नोन्ते यः अकारादिवर्णोनाम्नामकारान्तत्वनियमाभावात्स-
प्लुतः कार्यः पूर्वाक्षराणि यस्मात्सपूर्वाक्षरोनागंतुकस्ततोपकृष्यवा तेनायुष्मान्भवसौम्येति भद्र३ इतिप्रत्यभिवादरूपम्
॥ १२५ ॥ अत्रार्थवादः योनवेत्त्यभिवादस्येति । यथाशास्त्रमभिवादनस्य कृतस्य यः प्रत्यभिवादनंकर्तुंन

---

( १ ) वा—पा ( गो० २ ) ( २ ) पूर्वार्थे=पूर्वाण्य ( गो० २,५ )

जानाति विप्रोपि किमुतान्यः सविदुषा शूद्रवन्नाभिवाद्यः। तस्मात्प्रत्यभिवादोयंयथाशास्त्रंविज्ञाय सम्यक्कर्तव्यइतिस्थितिः ॥ १२६ ॥ प्रत्यभिवादस्तुतिविध्यर्थत्वे प्रकरणोपरोधोनामधेयस्य ये केचिदित्येतद्ग्रन्थश्चप्रत्यभिवादनप्रसङ्गेनान्यमपि प्रत्यभिवादयितुर्धर्ममाह ब्राह्मणमिति । प्रत्यभिवादयिता समागत्याभिवादयितारंब्राह्मणंकुशलमस्तीत्येवंपृच्छेत् क्षत्रजातीयमनामयमिति वैश्यंक्षेममिति । शूद्रंपुनरारोग्यमिति ॥१२७॥ अवाच्यइति । यागार्थंकृतदीक्षः प्रत्यभिवादनार्थं कार्यार्थान्तरंवा नाम्ना कनीयानपि न वाच्यः । किंतर्हिभोदीक्षित भवता यजमानेनेत्येवं भो भवच्छब्दपूर्वयौगिकैः शब्दैरेवंधर्मज्ञोभिभाषेत ॥ १२८ ॥ परपत्नीति । परस्य पत्नी या भवति सा चात्मनोयदि मातृपितृभ्यो योनिसंबद्धानभवेत्तदा तांकार्यार्थंभवतीत्यनेन शब्देन ब्रूयात् । सुभगेभगिनीत्येवमाद्यन्तेन भवतिसुभगे भवतिभगिनि भवति मातरित्येवंब्रूयात् । आनुरूप्येण भगिनीतिचेतीतिशब्दस्य प्रकारार्थत्वात् ॥ १२९ ॥ मातुलांश्चेति । मातुलादीन् हीनवयसः प्रत्युत्थाय भद्रोहमित्येवंब्रूयात् । ऋत्विग्वक्ष्यते । गुरुश्चात्र मातृष्वस्रपत्यादिः नविद्यागुरुः शैशवाख्यानस्यवक्ष्यमाणत्वात् ॥ १३० ॥ मातृष्वसेति । मातृष्वसाद्यागुरुपत्नीवद्वक्ष्यमाणरूपेण पादोपसंग्रहणादिना संपूज्यायतस्तागुरुभार्यातुल्याः ॥ १३१ ॥ भ्रातुर्भार्येति । पूजाप्रकरणाज्ज्येष्ठभ्रातृभार्योपसंग्राह्यापादयोः नाभिवाद्येह पादयोरितिदर्शनात् । सवर्णा समानजातीया प्रत्यहं ज्ञातयोमातृपितृपक्षाः संबन्धिनो वैवाह्याः तद्भार्याः पुनः प्रवासप्रत्यागतेनोपसंग्राह्यानत्वहरहः ॥१३२॥ पितुर्भगिन्यामिति । पितृष्वसृमातृष्वसृज्येष्ठभगिनीनांमातृवद्वर्तेत । मातृष्वसृपितृष्वस्रोः संपूज्यागुरुपत्नीवदित्यनेनैव पादोपसंग्रहणादिपूजासिद्धाविदंवचनम् । प्रियकरणादिमातृवत्त्यतिदेशार्थम् । यथा वक्ष्यति तयोर्नित्यंप्रियंकुर्यादित्यौपदेशिकातिदेशकवृत्तिविधानेनैव च मातुः प्रकर्षसिद्धौ मातात्वाभ्योगरीयसी । पितृष्वसृमातृष्वसृज्येष्ठेतिवचनं मातृनिषिद्धस्य तत्प्रियकरणप्रतिषेधार्थम् ॥१३३॥ दशाब्दाख्यमिति । एकपुरनिवासिनांनिर्गुणानामेकस्य दशभिर्वर्षैर्ज्येष्ठे सत्यपि सख्यमाख्यायते । ततश्चासौभोभवन्निति वयस्य इत्येवंगौतमस्मरणाद्वाच्यः । एवंकलाभृतांगीतज्ञानांपञ्चभिरब्दैः सख्यमाख्यायते वेदाध्यायिनांप्यब्दपूर्वंप्यब्दाधिकंत्रिवर्षज्येष्ठेन सख्यम् । ज्ञातिषु पुनरप्यल्पेनैव कालेन यत्र वर्षव्यवहारोनास्ति तेन सख्यमन्यथा सर्वत्रात्र ज्येष्ठव्यवहारः ॥ १३४ ॥ ब्राह्मणमिति । ब्राह्मणक्षत्रिययोर्दशवर्षशतवर्षवयोरभिवादभावौ पितापुत्रव्यवहारः स्यात् तयोर्मध्यात्पुनर्ब्राह्मणः पितृस्थानीयः ॥ १३५ ॥ वित्तमिति । धनज्ञातिवयःश्रौतस्मार्तकर्माचरणविद्याः समानजातीयत्वे सति मान्यस्थानानि पूज्यत्वैककरणीयानि[1] ततश्चावित्तस्य वित्तवान्मान्यस्तथैषांवित्तादीनांमध्याद्यत्पश्चान्निर्दिष्टंतत्पूर्वस्मात्पूर्वस्माद्गुरुतरम् । अतश्चवित्तवतांबन्धुमान्मान्यइत्यवतिष्ठते ॥ १३६ ॥ पञ्चानामिति । त्रिषु वर्णेषु ब्राह्मणादिषु यस्य हीनजातीयस्यापि पञ्चानांवित्तादीनांमध्याद्भूयांसि बहूनि त्रीणि चत्वारि पञ्च वा भवन्ति न त्वेकंद्वे वा तानि यदि गुणवन्ति प्रकृष्टानि भवन्ति तदा सउत्कृष्टजातेरपि मान्यः । एवंचब्राह्मणंदशवर्षंत्वित्येतन्निर्गुणविषये समगुणविषये वावतिष्ठते । तथाशूद्रोपि भवतिह्यायनातीतोद्विजातीनांमान्यः । एवंचवित्तबन्धुकर्माणिद्विजातीन्प्रति शूद्रस्य मानहेतवः । विद्या तु तस्य नैवास्ति ॥ १३७ ॥ चक्रिणइति । चक्रयुक्तगन्त्र्यादियानारूढस्यातिवृद्धातुरभारिकस्त्रीणांच राजप्रत्यासंनिधानाच्च ब्राह्मणस्यैव कृतसमावर्तनस्नानस्य भूपतिविवाहार्थप्रस्थितयोश्चगमनोपरोधिपथोऽपक्रामेदिति पूजाप्रकरणादेषामेतत्पूजैकदेशविधानम् ॥ १३८ ॥ तेषामिति । तेषांतु पुनश्चक्रधादीनामेकवर्त्मनि वर्तिनांचक्रादिभिः प्रकृतेन पथोदानेन राजस्नातकौ

---

(१) करणीयानि=करणानि ( गो० २, १ )

मान्यौ । राजस्नातकयोरेकवर्त्मनि वर्तिनोः स्नातकोमानंभजते ॥ १३९ ॥ सोपचारत्वादाचार्यादिलक्षणंपूर्ववैचि-त्र्यार्थमाह उपनीयेति । यःशिष्यमुपनयनपूर्वकंकल्पसूत्रोपनिषत्सहितंवेदमध्यापयति तमाचार्यं मन्वादयआहुः । रहस्यंवेदशब्देन ग्रहणे सति प्राधान्यात्पृथगुपदेशः ॥ १४० ॥ एकदेशमिति । वेदभागंवेदाङ्गानि वा शिक्षाक-ल्पनिरुक्तव्याकरणज्योतिषछन्दांसि योजीविकार्थमपणपूर्वमध्यापयतिसउपाध्यायउच्यते ॥ १४१ ॥ निषेकादीनीति । गर्भाधानादिकर्माणि यथाशास्त्रंयः करोत्यन्नेन च संभावयति वर्धयति सविप्रो गुरुरुच्यते । एवंचपितायंगुरुर्निषेकग्रहणात् ॥ १४२ ॥ अग्न्याधेयमिति । आधानदर्शपूर्णमासाग्निष्टोमादिसोमयागान्यस्य कृतशास्त्रीयाचरणः सन्यः करोति सतस्येह शास्त्रे ऋत्विगुच्यते तस्यांपि मान्यत्वादिहोपदेशः । तदुक्तंस्वसुरादिऋत्विजोगुरूनिति ॥ १४३ ॥ यआवृणोतीति । यआपूरयत्यवितथंविस्वरादिरहितंकृत्वा वेदेनोभौ कर्णौसमातापितृवज्ज्ञेयः । तस्मै चाध्ययनोत्तरकालेपि द्रोहंनकु-र्यात् ॥ १४४ ॥ उपाध्यायादिति । दशभ्यउपाध्यायेभ्यआचार्योगौरवेण हेतुभूतेनाधिकीभवत्युपाध्यायपूजा-तोदशगुणाचार्यस्य पूजाकार्येत्यर्थः । एवमाचार्याणांशतंपितागौरवेणाधिकीभवति यः सकलसंस्कारादिकर्ता जनकमात्रपितृसहस्रात्सकलसंस्कारादिकारयित्रीमाता गौरवेणाधिकीभवति ॥ १४५ ॥ उत्पादकइति । संस्का-रादिकरणरहितोत्पादकाचार्ययोः पित्रोराचार्याख्यः पिता प्रशस्यतरः यस्माद्ब्रह्मग्रहणार्थयज्जन्मोपनयनाख्यं वि-प्रस्य तदिहलोके च शाश्वतंनित्यंपारंपर्येण मुक्तिनिमित्तत्वात् । अतश्च जनकमातृपिताचार्यसन्निधावा-चार्यएवमादौ पूजनीयः विप्रग्रहणंद्विजप्रदर्शनाच्च त्रयाणांप्रकृतत्वाच्च ॥ १४६ ॥ अत्रार्थवादः कामादिति । आचार्यस्त्विति । पितरावेनंमिथः परस्परंकामादुत्पादयतोन तदुपकारचिकीर्षया पुनः संभवमात्रंतस्य जानी-याद्यद्योनावसावुत्पद्यते । आचार्यः पुनः समस्तवेदाध्यापयिता यथाशास्त्रमुपनयनाङ्गभूतया सावित्र्या यांजातिं-यज्जन्मास्य करोति सा सत्या स्यात्सत्यात्मका श्रौतादिकर्मनिमित्तत्वात् । साजरा अबाधका पुनस्तूद्भवेपि तस्यानपचयादमरात्मकज्ञानाधिकारोत्पादनद्वारेणामरहेतुत्वात् ॥ १४७ ॥ १४८ ॥ अपरंगुरुलक्षणमाहपूजार्थं अल्पमिति । यस्य कस्यचिच्छ्रुतस्याल्पंवा बहु वा योबोधयति तमपीह पूजाप्रकरणे तेन श्रुतोपकारेण जा-नीयात् ॥ १४९ ॥ न च वयोज्यैष्ठ्यंविद्यागुरोः पूजार्थमपेक्ष्यं यस्मात् ब्राह्मस्येति । उपनयनस्य कनीयःकर्तृ-त्वासंभवात्तदुपलक्षिताध्यापनादिकर्ता स्वधर्मस्य चायंधर्मइत्येवंबोधयिता बालोपि वृद्धस्यापि धर्मार्थ-कर्मनिमित्तत्वेन पितृतुल्योभवति ॥ १५० ॥ अत्रार्थवादः परःप्रकृतिरूपः अध्यापयामासेति । तइति । अङ्गइति । अङ्गिरःपुत्रः कविर्नाम बालः सन्पितृपितृव्यादीनध्यापितवान् । तांश्च वेदादिज्ञानेन हेतुभूतेन शिष्यत्वेन स्वीकृत्य कार्यार्थेनाह्वानकालेषु पुत्रकाइत्युक्तवान् । ततस्ते पितरस्तथाह्वानोत्पन्नक्रोधाः तमर्थंसमागत्य-पुत्रकशब्दाह्वानाख्यंकिमेतत्साध्वित्येवंदेवान्पृष्टवन्तः । देवाश्चैतद्विचारार्थंसमागत्य युक्तंशिशुर्युष्मानुक्तवानित्येवमेतां-स्तान्पितृनुक्तवन्तः । यतोऽज्ञोमूर्खः सबालोभवति वृद्धोपि सन्यश्चात्राध्यापयिता सबालोपि सन्पितृतुल्योभवति । यतोऽज्ञंदन्येऽज्ञंबालमित्याहुरध्यापयितारंच पितेत्येवंब्रुवते ॥ १५१ ॥ १५२ ॥ १५३ ॥ अतश्च नहायनैरि-ति । नवयोभूयःशिरःपाण्डुर्यधनबन्धुभिर्ज्यायित्वम् । अपि तु योऽध्यापनसमर्थः सश्रेष्ठइत्यस्माकंमतमित्येवमृषयो-धर्मंव्यवस्थापितवन्तः ॥ १५४ ॥ एवंचसति विप्राणामिति । विप्राणांज्ञानेन श्रैष्ठ्यं क्षत्रियाणांपुनः पौरुषेण वैश्यानांधान्यहिरण्यादेः शूद्राणांवयस्तः ॥ १५५ ॥ नतेनेति । येन कारणेन वयोभूयिष्ठ्याख्येनास्य पलित-

युक्तंशिरोन तेन वृद्धोभवत्यपि तु यस्तरुणोपि सन्नधीतवेदोभवति तंदेवावृद्धमन्यन्तइत्यभिधानंप्रकृतदार्ढ्यार्थम् ॥ १५६॥ यथेति। दारुमयोयथा हस्ती न युद्धादिसमर्थो यथाचचर्ममयोमृगआखेटकादावकिंचित्करः एवमनधीयानोब्राह्मणोब्राह्मणसंपाद्यासु प्रतिग्रहादिक्रियासु। एवंच त्रयोप्येते नाममात्रंधारयन्ति न तु हस्त्यादिसंपाद्याः क्रियाः कुर्वन्ति ॥ १५७॥ यथा षण्ढइति । यथानपुंसकंस्त्रीषु गच्छन्नप्यपत्यशून्यं यथा च स्त्रीगौः स्त्रीगवि गमनाभावादपत्यफलशून्या यथा चाज्ञे निष्फलं दानं तथा वेदरहितोब्राह्मणोऽफलः परमात्मनोदृष्टादृष्टानुपकारित्वात् ॥ १५८ ॥ शिष्याचार्यप्रक्रमेधुनाचार्यस्यापि किंचिन्नियममाह अहिंसयैवेति। रज्ज्वा वेणुदलेन वेति शरीरपृष्ठे ईषत्ताडनस्य वक्ष्यमाणत्वात् अतिताडनपरिहारेणैव भूतानांभार्यादीनामपि भूतग्रहणान्न शिष्याणामेव । प्रकृतानामाचार्येण वेदाध्ययनादिकर्तव्यम् । तदर्थंच वागेवानाक्रोशरूपानुच्चैर्वक्तव्यानुशासनाद्धर्मांद्धर्ममिच्छता ॥ १५९ ॥ यस्मात् यस्येति । यस्य वाङ्मनसे शुद्धे विकारहेतौ सत्यपि नकालुष्यंगच्छतः सम्यग्गुप्ते चोत्पन्ने नकथंचित्कालुष्येणतत्कार्यंकुरुतः। सर्वदा यावज्जीवंसउपनिषदोक्तंमोक्षाख्यंफलमखिलंप्राप्नोति ॥१६०॥अतश्च नारुंतुदइति। मर्मस्पृगत्यार्त्तोपि न स्यान्नपरहिंसार्थव्यापारबुद्धिःस्यात्। यया च वाचा लोकएनंद्वेष्टि तांस्वर्गादिलोकफलप्रतिबन्धकांनोच्चारयेत् ॥१६१॥ संमानादिति। पूजातोब्राह्मणोयावज्जीवं विषादिव खिद्येत अमृतमिव चावज्ञांसर्वदाकाङ्क्षेत् ॥ १६२ ॥ सुखमिति। योवाऽवज्ञातः ससुखंस्वपिति न यथाऽवमन्तुरयुक्तंमया कृतमिति चित्तसंक्षोभोभवति एवंसच सुखंनिद्रांजहाति। सुखंलोके व्यवहरति। यः पुनरवमन्ताकृत्सोऽसाधु मया कृतमितीहलोके परलोके चापुण्याद्विनश्यति ॥ १६३ ॥ एवंप्रसक्तानुप्रसक्तिकया पुरुषमात्रधर्ममुक्त्वाऽधुना प्रकृतमाह अनेनेति। उक्तपरिपाटीसंबन्धेन कृतोपनयनोद्विजोगुरुकुले वसन्वेदप्राप्तिप्रयोजनंतपोनियमाख्यं तपोऽर्जनमात्मसंस्कारंच शनैः अन्वहमुपार्जयेत् ॥ १६४ ॥ तपोविशेषैरिति। तपोविशेषैरुक्तवक्ष्यमाणैरग्नीन्धनादिभिर्नानाप्रकारैर्व्रतैश्च प्रतिवेदंगृह्यशास्त्रचोदितैः सावित्र्यादिभिर्वेदः कृत्स्नः समस्तोवेदः शाखामन्त्रब्राह्मणात्मकोद्विजातोनामध्येतव्यः। एकदेशेपि वेदशब्दप्रयोगदर्शनात् उदाहरणे जिह्वाच्छेदइति चैकदेशेपि स्मार्तव्यवहारात् । कृत्स्नग्रहणमङ्गाध्ययनप्राप्तिः। अत्रार्थावबोधार्थत्वादध्ययनविधेः सामर्थ्यलभ्यतेनह्यङ्गैर्विनार्थावबोधोघटते रहस्यमुपनिषत्प्राधान्यात पृथग्ग्रहणंपित्रादिप्रबन्धायातैवचशाखाध्येतव्या अन्यथास्वशाखात्यागाद्यस्तंस्मरन्ति । तथाच ॥ स्वसूत्रंयःपरित्यज्य परसूत्रेण वर्तते । अप्रमाणमृषिंकृत्वा सोप्यधर्मेणयुज्यते ॥ इति परिशष्टेषु स्मर्यते नपुनः शाखापुरुषस्य गोत्रनियतसंबन्धः अतोयैव येन शाखाधीता सैवतस्य स्वा शाखा तदर्थानुष्ठानविषयमेव च स्वसूत्रंयःपरित्यजति सएव वेदशाखात्यागइत्याह तदसत् । यथैवेदमस्माकंगोत्रमितिप्रतिनियतगोत्रत्वस्मरणमेव नियतमस्माकंशाखेतिप्रतिनियतशाखात्वमपिस्मरन्ति । तत्त्यागेनैवचशाखात्यागदोषंस्मरन्ति । तदर्थानुष्ठानपरित्यागविषयमेवच । स्वसूत्रंयःपरित्यजति पित्रादिप्रबन्धा या सैव शाखाध्येतव्या ननुप्रवचननिमित्ताइदानीतनाः काठकइत्येवमाद्याः समाख्याः । कथंवयंकठाइत्येवमादिनियतोव्यपदेशउपपद्यते । सत्यं कएवमहार्थान्तरनिमित्ताकएताःसमाख्याःकेवावयंवयंकठाइत्येवमादि केवाव यंकठाइत्येवमादेर्व्यपदेशस्यानित्यत्वमाह । कथंप्रोक्ताध्ययननिमित्तकइदानीतनोयंव्यपदेशः । समाख्याश्चप्रतिवचननिमित्तास्तथापि समाख्यानां आविर्भावतिरोभावेषु सत्सु अपि शाखाया नित्यत्वात् नित्यसंबन्धत्वस्मरणस्य न कदाचिद्धानिः रहस्यमुपनिषदः। आत्मज्ञानपरत्वेनासांप्राधान्यात्पृथगुपदेशः ॥ १६५ ॥ प्रसङ्गाद्यावज्जीवमध्ययनधर्ममाह।

---

( १ ) अभिधानं=भूयोभिधानं ( गो० २,५ ) ( २ ) पृथक्······नपुनः ( गो० २, ३ )

वेदमिति । तपोयमनियमादिकर्तुमिच्छन् ब्राह्मणोवेदमेव यावज्जीवमभ्यसेत् । यस्माद्वेदाभ्यासस्तस्य तपोन्तरेभ्यः प्रकृष्टंतपःशास्त्रउच्यते । द्विजोत्तमस्य ग्रहणंद्विजप्रदर्शनार्थम् । त्रयाणांप्रदर्शनार्थं प्रकृतत्वादेवार्थवादः ॥ १६६ ॥ आ हैवेति । यत्कृतमाल्यादिकोपि ब्रह्मपरित्यागेनापि द्विजः प्रत्यहंयथाशक्ति स्वाध्यायमधीते सआनखाग्रेभ्योनिर्जीवनखाग्रव्यापकमेवतपःकरोति । परमतपोन्तरेभ्यः प्रकृष्टंतेषांनखानांव्यापकत्वात् । किंपुनर्योयमनियमयुक्तोधीतइति प्रकृतस्तुतिः । नतुयमनियमत्यागेन स्वाध्यायोस्ति । हशब्दआगमसूचकः ॥ [अनसूयश्चयोविप्रोपरमंतस्यतत्तपः॥ यद्वचोपिद्विजोधीते स्वाध्ययंशक्तितोन्वहं ॥ वेदस्वीकरणंपूर्वविचारोभ्यसनंजपः॥ तद्दानंचैवशिष्येभ्योवेदाभ्यासोहिपञ्चधा] ॥१६७॥ यइति । योद्विजउपनीतःसन् वेदमगृहीत्वैवाङ्गादौ यत्नंकुरुते सवेदानभिज्ञत्वादात्मपुत्रादिसंस्काराकरणेन जीवन्नेवसान्वयः क्षिप्रंशूद्रतुल्यतांप्राप्नोति । द्विजग्रहणाच्च वेदमिश्रवेदाङ्गाध्ययने अनुपनीतस्य निषेधः तथाच नाभिव्याहारयेद्ब्रह्मेति वेदएवनिषेधोभविष्यति ॥ १६८ ॥ इदानींप्रकरणाद्वेदाध्ययनमेव तत्करेणस्तुतिद्वारेणस्तोतुमिदमाह मातुरग्रेधिजननमिति । मातुःसकाशात् प्रथमंपुरुषस्यजन्म । द्वितीयंमेखलाबन्धनम् । तृतीयंयागार्थंदीक्षाकाले द्विजस्य सतः । पुनर्वाएतमृत्विजोगर्भंकुर्वन्ति यद्दीक्षयन्तीत्येवंश्रुतिचोदनात् ॥ १६९ ॥ तत्रेति । यस्मिन् जन्मत्रयमध्ये यद्ब्रह्मग्रहणार्थंपुंसोजन्ममेखलाबन्धनोपलक्षणार्थं तस्य माता सावित्री पितापुनराचार्यःकथ्यते । इतिरूपकभङ्ग्या जन्म समर्थयते ॥ १७० ॥ वेदप्रदानादिति । वेदाध्यापनादाचार्यंपितरमस्याहुः । यस्मात्तस्मिन्नुपनयनात्प्राक्किंचिदुत्कर्षहेतुभूतकर्माध्ययनादि न युज्यते । एवंचप्रागुपनयनादजातसमत्वायुक्तंवेदप्रदानेनाचार्यजन्मत्वम् ॥ १७१ ॥ एवंच प्रागुपनयनादध्यननिषेधे सति प्रतिप्रसवमाह नाभिव्याहारयेदिति । स्वधाशब्दाख्येमन्त्रसाधनंकथंनिनीयते पितॄन्प्रति प्राप्यते येन तत्स्वधानिनयनं पित्र्यंकर्म तद्वर्जयित्वा नवेदमुदाहरयेत् । यस्माद्वेदनिमित्तंयावन्नजायते यावदनुपनीतस्तावत् शूद्रतुल्योसौ एतदेवज्ञापकमुपनीतपितृप्रसवेसत्येकोद्दिष्टश्राद्धादिकरणाधिकारस्य ॥ १७२ ॥ कृतोपनयनस्येति । उपनीतस्य सतोऽस्यादौ स्वशाखाचोदितसावित्रादिव्रतोपदेशइष्यते । ततउक्तरूपवेदाध्ययनंस्वशाखागतमन्त्रब्राह्मणाध्ययनंक्रमेणोक्तं प्राणायामादिपूर्वकम् ॥ १७३ ॥ यदिति । यस्य ब्रह्मचारिणोयज्जातीयानि चर्मोपवीतमेखलादण्डवस्त्राण्युपनयने उक्तानि तज्जातीयान्येव नान्यानि प्रतिव्रतमुपादेयानि । पूर्वोपात्तानांधारणोपदेशात् पुनस्तद्विधानमनर्थकमिति तज्जातीयान्यन्यानीति प्रतीयते । पूर्वेषांच कार्यानुपयोगाद्विनष्टतुल्यत्वेसत्यप्सु प्रास्येति प्रतिपत्तिः ॥ १७४ ॥ सेवेतेति । ब्रह्मचारी गुरुकुले वसन् इन्द्रियग्राममिन्द्रियसमूहं नियम्यात्मनस्तपोवृध्यर्थं इमान् यमनियमाननुतिष्ठेत् ॥ १७५ ॥ नित्यमिति । प्रत्यहंस्नात्वा शुचिर्देवानांमहेश्वरादीनां अङ्गिरःप्रभृतीनामृषीणांच प्रमीतानांचपित्रादीनां उदकदानंकुर्यात् । तथादेवतानांहरादीनांपुष्पादिनार्चनं सायंप्रातरग्निसमिदाधानंच कुर्यात् ॥ १७६ ॥ वर्जयेदिति । माक्षिकमांसंमाल्यस्त्रीप्राणिहिंसनानिवर्जयेत् । तथा गन्धवद्द्रव्यंकर्पूरादि उद्रिक्तरसंच गुडादि मधुनोरसशब्दग्रहणेपिप्रायश्चित्तविशेषार्थंपृथगुपदेशः । शुक्तानि यानि प्राप्तस्वरसानिकालपरिवासेनोदकादिद्रव्यान्तरकालपरिवासाभ्यांचाम्लीभवन्ति सर्वग्रहणंपादपूरणंनत्वस्यार्थान्तरग्रहणेसामर्थ्यमस्ति । यत्तुगौतमीये शुक्तावाचइति तद्वाक्शब्दसंनिधानात् शुक्तशब्दस्यार्थान्तरवृत्तित्वम् । इह चैवमभिप्रेते बुद्धिपूर्वकारीशुक्ताश्चैवगिरः सर्वाइत्येवमवेक्ष्यते ॥ यद्यपि सर्वशुक्तानिचैवेहेत्यनेन ब्रह्मचारिणोपि प्रतिषेधसिद्धिस्तथापीहाभिधानंस्वाध्यायाङ्गत्वार्थंतेन प्रतिषेधेन भक्षणे पुरुषार्थोतिक्रममात्रंस्यात् । नविधित्रैगुण्यं कावागतिरनृतहिंसादिप्रतिषेधानां पुनरभिधानस्यात्रचोपभोगार्थंमांसादि प्रतिषेधोन ओषधार्थः । तथाच वसिष्ठेनसाचान्याधीयीत कामाद्गुरोरुच्छिष्टंभे-

षजार्थंप्राश्नीयादिति मांसाद्यभ्यनुज्ञातम् ॥१७७॥ **अभ्यङ्गमिति**। अभ्यङ्गमञ्जनघृताद्यभ्यञ्जनोपानच्छत्रधारणाकामक्रोधपरद्रव्यादिगीतवादनानि वर्जयेत्। कामोभोजनाद्यभिलाषातिशयोमन्मथस्य स्त्रीग्रहणेन निषिद्धत्वात् ॥१७८॥ **द्यूतमिति**। अक्षादिक्रीडाजनैः सह कलहं परदोषादिकीर्तनं असत्यंच स्त्रीणांच मैथुनसेवाशङ्कयालिङ्गनं परस्यचार्थना [ शा ] द्युपघातंचवर्जयेत् ॥ १७९ ॥ **एकइति**। नान्येन सह शयीत। सर्वत्र गुरुगृहे पितृगृहादौ न च स्त्रीप्रयोगात्प्रकारान्तरेणापि रेतः प्रक्षारयेत क्वचिदयोनावपि यस्माद्बुद्धिपूर्वेरेतःस्कन्दयन्नात्मनोब्रह्मचर्यंखण्डयति ॥ १८० ॥ **स्वप्नइति**। यद्द्विजोब्रह्मचारी अबुद्धिपूर्वेस्वप्ने रेतउत्सृज्य स्नात्वा अर्कपुष्पादिनार्चयित्वा त्रीन्वारान्पुनर्मामेत्विन्द्रियमित्येतां ऋचंजपेत् । अस्य प्रायश्चित्तस्य प्रकरणोत्कर्षोरेतःसंरक्षणनियमान्तरेभ्योब्रह्मचारिणोगुरुत्वप्रख्यापनार्थः ॥ १८१ ॥ **उदकुम्भमिति**। उदकुम्भपुष्पगोमयमृद्दर्भांगुर्वात्मनोयावत् प्रयोजनमानयेत् भैक्षंप्रत्यहंचरेत् । नैकदिवसाहृतेनापर्युषितेन स्नेहानियमशुक्तादिना परेद्युर्वर्तेत ॥ १८२ ॥ **वेदयज्ञैरिति**। वेदवेदार्थानुष्ठानयुक्तानांस्वकर्मसुच वृत्त्यर्थेष्वध्यापनादिषु प्रशस्तानां स्ववृत्त्या जीवतां गृहेभ्योब्रह्मचारी शुचिःसन्प्रत्यहंभैक्ष्यमाहरेत ॥ १८३ ॥ **गुरोरिति**। गुरुगृहंनभिक्षेत तथात्मनःपितृमातृगृहेषु यदि पुनरेतद्व्यतिरिक्तगृहेभ्योनलभ्यते तदा पूर्वपूर्वंपरिहरेत्। प्रथमंबन्धुगृहेभिक्षेत तदलाभे गुरुगृहे ॥ १८४ ॥ **सर्वमिति**। बन्धुगृहादिभ्योपि अलाभे चातुर्वर्ण्यादप्याहरेत्। सजितेन्द्रियःसन् भिक्षावाक्यवर्जं मौनं अभिशस्तान् पुनःपातकित्वेन प्रसिद्धान् निश्चितपातकान् दण्डापूर्विकयापतितांश्च वर्जयेत् ॥ १८५ ॥ **दूरादाहृत्येति**। अरण्यात्समिधआहृत्येति गृह्यदर्शनात्। दूरस्य वापर्यवसितत्वादपरिगृहीताः समिधआनीय विहायस्याकाशे निधानासंभवात गृहपटलादौ स्थापयेत्ताभिश्चानलसःसन् सायंप्रातरग्निकार्यंकुर्यात् ॥ १८६ ॥ **अकृत्वेति**। प्रायश्चित्तगुरुत्वात् भैक्षाग्निकार्ये समुच्चिते कामकारेण सप्ताहानि प्रबन्धेनानातुरःसन्नकृत्वावकीर्णिप्रायश्चित्तमेकादशे वक्ष्यमाणंचरेत्। कथंचित्पुनःप्रत्येकव्यतिक्रमेगौतमीयमग्नीन्धनभैक्षचरणेसप्तरात्रमकृत्वाज्यहोमसमिधोवा एताभ्यामिति अनातुरइत्यातुरस्य प्रायश्चित्तान्तरं नतु प्रायश्चित्ताभावः। एतावद्यतः प्रतीयते अनातुरस्येदं प्रायश्चित्तं नत्वातुरस्य व्यतिक्रमोनास्तीति बाह्यतदनातुरः स्नानि खानि नस्पृशेत् । इतितन्नियमवाक्यगतं विशेषणं येनातुरस्यानधिकारइति गम्येत। पितुःप्रायश्चित्तविशेषणे तस्मादातुरस्यप्रायश्चित्तान्तरंभवत्येव। अस्यापि प्रायश्चित्तस्य प्रकर्षणोत्कर्षोलाघवार्थः। तत्रहि क्रियमाणे ब्रह्मचारिग्रहणंकर्तव्यंस्यात् ॥१८७॥ **भैक्षेणेति**। ब्रह्मचारी भैक्षेण यावद्ब्रह्मचर्यंप्राणयात्रांकुर्यात्। नत्वेकसंबन्धि अन्नं अश्नी यात् । यस्मादस्य भैक्षेण वृत्तिरुपवासतुल्यफलेति। एतन्नियमफलाभिधानार्थंच भैक्ष्येण वर्तयेदित्युक्तसंकीर्तनं नचानित्यत्वाशङ्का प्रायश्चित्तस्योक्तत्वात ॥ १८८ ॥

**[नभैक्ष्यंपरपाकःस्यान्नचभैक्ष्यंपरिग्रहः॥ सोमपानसमंभैक्ष्यंतस्माद्भैक्ष्येण वर्तयेत् ॥ १ ॥]**

**भैक्ष्यस्यागमशुद्धस्य प्रोक्षितस्य हुतस्य च॥यस्तस्य ग्रसते ग्रासान् तत्तस्य क्रतुभिःसमाः॥२॥]**

**व्रतवदिति**। दैवेकर्मणिव्रतार्थंमध्वादिवर्जितम् । श्राद्धेच ऋषिवद्दर्षिरिवारण्यनीवारादिनप्राभ्यंप्रार्थितः सन्नकाममिच्छते एकान्नंसमश्नीयात । नास्यैवंकुर्वतोव्रतलोपोभवति । ऋषिशब्दश्चवसिष्ठादौ प्रसिद्धप्रयोगोनवैखानसेवयेन तदर्हान्नाभ्यनुज्ञातेचैकमप्युपभुञ्जीतेतिमांसाशनाशङ्कास्यात् ॥ श्राद्धभोजनस्याचाराधिकदुष्टत्वादृषिवदितिनियमातिशयमाह ॥ १८९ ॥ **ब्राह्मणस्येति** । एतद्दैवपित्र्यैकान्नभोजनाख्यंकर्म ब्राह्मणस्यैव मन्वादिभिःस्मृतम्।

क्षत्रियवैश्ययोःपुनः नैतत्कर्म ब्रुवते । भैक्ष्यस्य प्रतिग्रहप्रकारत्वेपि ब्रह्मचारित्वंच प्रकरणात् क्षत्रियवैश्ययोरपि ब्रह्मचारिणोर्भैक्ष्यभोजनाभ्यनुज्ञाते सति तदपवादैकान्नभोजनेपि तयोरपि प्रस्तुतत्वात् प्रतिग्रहस्य च ब्रह्मचारित्यतिरिक्तक्षात्रियविषये चरितार्थत्वात् प्राप्तौ सत्यमेवंप्रतिषेधः ॥ १९० ॥ **चोदित**इति । गुरुणा नियुक्तोअनियुक्तोवा गृहीताध्ययनभागाभ्यासयत्नमाचार्यपरिचर्यायत्नं यावद्ब्रह्मचर्यंकुर्यात् ॥ १९१ ॥ **शरीरमिति** । देहवाक्चक्षुरादिबुद्धीन्द्रियमनांसि नियम्य बद्धाञ्जलिःसन् गुरोर्मुखंवीक्ष्यमाणस्तिष्ठेत् ॥ १९२ ॥ **नित्यमिति** । यावज्जीवंगुरुसन्निधौ वसेत् । उध्दतबाहुः सदाचारयुक्तोऽनलसः स्यात् । गुरुणोपविश्यतामिति चोक्तःसन् गुरोःसम्मुखमुपविशेत् ॥ १९३ ॥ **हीनान्नवस्त्रवेष**इति । गुर्वपेक्षया संस्कारपरिणामादिना न्यूनान्नवस्त्रालङ्कारोयावज्जीवंगुरोः सन्निधाने स्यात् । शयनाच्च गुरुस्थानात् प्रागुत्तिष्ठेत् । तत्स्वमानन्तरंशयीत ॥ १९४ ॥ **प्रतिश्रवणसंभाषे**इति । आज्ञाङ्गीकरणकार्यार्थसंभाषणे शयितउपविष्टोऽश्नन्नुत्थितोऽनभिमुखोनकुर्यात् ॥ १९५ ॥ **कथं तर्हि आसीनस्येति । पराङ्मुखस्येति** । उपविष्टस्याज्ञांददतउत्थितः प्रतिश्रवणसंभाषेकुर्यात् । उत्थितस्य च तदभिमुखंगत्वा वेगेन गच्छतस्तस्य पश्चाद्वेगेन गच्छन् परावृतस्य चास्थितस्य चाभिमुखोभूत्वा दूरावस्थितस्य समीपमागत्य शयानस्य प्रह्वोभूत्वा निकटे चैदेशेतिष्ठतः ॥ १९६ ॥ १९७ ॥ तथैव **नीचंशय्यासनमिति** । गुरुशय्याद्यपेक्षया ह्रस्वशयनासनं यावज्जीवंगुरुसंनिधौ स्यात् । तथा गुरोश्चक्षुर्विषये न यथेष्टासनः स्यात् ॥१९८॥ **नोदाहरेदिति** । गुरोरसन्निधानेपि पूजावाक्यपदरहितंनाम नोच्चारयेत् । गुरोर्गमनभाषणभोजनादि चेष्टांनानुकुर्यात् एवमस्मद्गुरुर्गच्छतीति ॥ १९९ ॥ **गुरोरिति** । यस्मिन् देशे गुरोःसदोषाभिधानमसद्दोषकथनंवा केचन कुर्वन्ति कर्णौ तत्राच्छादनीयौ तस्मात्प्रदेशादन्यत्रगन्तव्यम् । नचात्मना परिवादादि कर्तव्यन् ॥ २०० ॥ **परिवादादिति** । परिवादकर्ता जन्मान्तरे खरउत्पद्यते । श्वाच निन्दाकर्ता । अननुज्ञातगुरुधनोपजीवकः कृमिर्भवति । गुरुगुणासहनः कोटः कृमेरीषदुपचितः प्राणी भवतीति फलकथनम् । अतएव न कर्तव्यमिति । न चाद्यार्थस्यश्लोकस्य पूर्वार्धवादित्वं युक्तं श्रुतशब्दानुपादानात् । उत्तराभ्यांच विध्यर्थाभ्यांचसाहचर्यात् श्रवणनिषेधे दण्डापूपिकासिद्धकरणनिषेधइतिचेत् फलाभिधानंतर्हिकुतःसिद्धम् ॥ २०१ ॥ **दूरस्थ**इति । दूरस्थःसन्परहस्तपुष्पप्रेषणेनाचार्यंनार्चयेत् । नाप्येनंप्रत्युपजातक्रोधंनचभार्याणांसमीपस्थमर्चयेत् । यानासनस्थश्च यदाभवति तदावतीर्यैनमभिवादयेत् । यानासनस्थश्चैवैनंप्रत्युत्थायाभिवादयेत् । अनेनचावरुह्याभिवादयेत् । तत्र नीचयानासनादनुत्थायाप्यवेराहणंसंभवति । एतदुक्तं प्रत्युत्थायाभिवादयेत् । गन्त्रीगवादियानासनस्थस्यापि चोत्थानंसंभवति अतउक्तंअवरुह्याभिवादयेदिति ॥ २०२ ॥ **प्रतिवात**इति । प्रतिवातोमुखीभूतपुरोवर्तिगुरुदेशाच्छिष्यदेशंप्रतिवायुर्यस्मिन्प्रदेशे यत्र चानुगतशिष्यगुरुदेशंप्रतिवातः ॥ तत्र पश्चाद्गुरुणासह नासीत । तथा गुरुसंनिधाने यस्मिन्देशे गुरोःसंश्रवआकर्णनंनास्ति तत्रान्यस्य कस्यचिन्नकिंचिदपि कथयेत् ॥ २०३ ॥ **गोऽश्वोष्ट्रयानप्रासादप्रस्तरेष्विति** । गोऽश्वोष्ट्रयाने युक्ते सति प्रासादे धवलगृहे तृणप्रस्तरे कटे च नद्यादिकृते कुलाले शिलाफलकनौषुच गुरुणा सहासीत ॥ शय्यासनेध्याचरिते श्रेयसा न समाचरेत ॥ इतिप्रतिषेधस्यायंप्रतिप्रसवः ॥ २०४ ॥ **गुरोरिति** । आचार्यगुरुर्यदा शिष्यस्य संनिहितोभवति तदा तस्याप्याचार्यवत् वर्तेत । तथाचार्यगृहे वस्थितस्तेनाननुज्ञातःस्वयोनिगुरून्नाभिवादयेत् ॥ २०५ ॥ **विद्यागुरुष्वेवमेवेति** । आचार्यादन्येषु उपाध्यायादिषु

+ चा= वा ( गो०२ )

विद्यागुरुष्वेवमेव वर्तेत । तथा स्वयोनिषु गुरुष्वधर्मनिवर्तकोषधाद्युपदेष्टृष्वेव नित्यावृत्तिः ॥ २०६ ॥ **श्रेयःसुगुरुवद्वृत्तमि-** ति । श्रेयःसु वृत्ताद्यधिकेषु गुरुपुत्रेषु ब्राह्मणेषु गुरुबान्धवेषु गुरुवद्वृत्तिं यावज्जीवमाचरेत् ॥ २०७ ॥ **बालइति** । ब्रह्म- चारिणः कनीयान्समोयज्ञविद्यादौवा शिष्यः तथाध्यापयन्गुरुसुतोगुरुवत्पूजामर्हति । नत्वध्यापयितृत्वादेवास्य गु- रुवृत्तिःसिद्धैव विद्यागुरुष्वेवमेवमिति । न च कनीयत्वापेक्षयाशैशवाख्यापनस्य दर्शनत्वात् । सत्यं किंतु शि- ष्योवा यज्ञकर्मणीत्युक्तोऽध्यापयतोव्यर्थशिष्यत्वादमामाशङ्कायामिदंवचनं इदमेवज्ञापकं । यंथगुरोरर्थगुरुर्गरीयान् ॥ २०८ ॥ **उत्सादनमिति** । उद्वर्तनस्नापनोच्छिष्टभोजनपादधावनानि गुरुपुत्रस्य नकार्याणि । अस्मादेव प्रतिषेधात् गुरोरेतदनुक्तमपि कर्तव्यमित्यवसीयते ॥ २०९ ॥ **गुरुवदिति** । गुरोःसजातीयाभार्यागुरुवत्पूजनी- याः । विजातीयाः पुनः प्रत्युत्थानाभिवादनमात्रेण ॥ २१० ॥ **अभ्यञ्जनमिति** । अभ्यङ्गस्नापनोद्वर्तनकेशर- चना गुरुभार्याया न कार्या ॥ २११ ॥ **गुरुपत्नीति** । तरुणीगुरुभार्या यूना कामंसुखदुःखे जानता पादो- पसंग्रहणपूर्वकंनाभिवाद्या ॥ २१२ ॥ **स्वभावइति** । स्वरूपमेतत् स्त्रीणां यन्मनुष्याणांस्मरोद्रेकजननं । अतो- स्माद्धेतोःप्राज्ञःस्त्रीषु न स्पर्शनादि ममादंभजते ॥ २१३ ॥ **अविद्वांसमिति** । यतःकामक्रोधविधेयंपुरुषंसम्य- क्शास्त्रज्ञंवा लोके अधर्ममार्गेनेतुंस्त्रियोऽलंसमर्थाः ॥ २१४ ॥ **मात्रेति** । मातृभगिनीदुहितृभिरपि सह निर्जने न आसीत । यतोऽप्रधृष्यइन्द्रियसमूहः शास्त्रज्ञमपिसंप्र [ योगा ] त् च्यावयति ॥ २१५ ॥ **काममिति** । गुरुपत्नीनांतरुणीनां युवा वन्दनंभुवि विन्यस्तहस्तोविन्यस्तपाणिना इति अनेन विधिनाऽसा- वहमितिब्रुवन् । इत्युक्तरूपेणाभिवादनंकुर्यात् ॥ २१६ ॥ **विप्रोष्येति** । प्रवासप्रत्यागतः पादोपसंग्रहणंप्रत्यहं- पुनरभिवादनमात्रंगुरुभार्यासु कुर्यात् । एषएवसाध्वाचारइति संचिन्तयन् ॥ २१७ ॥ युक्तमेतत्पुत्रदारादिपर्यन्तंगुरुपरि- चरणंयस्मात् **यथेति** । यथा कुद्दालादिना खनित्रेण महता यत्नेन खनन् नरः पातालगतमुदकंप्राप्नोत्येवं आचार्यस्थां- विद्यांपरिचरणशीलः प्राप्नोति नत्वालस्यात् ॥ २१८ ॥ **मुण्डइति** । लूनाखिलकेशोवास्यात् इतरेतरसंलग्नधृतसमस्त- केशोवास्यात् । शिखैव वा जटास्य तथाभूतः स्यात् तथाचकुर्यात् यथास्य ग्रामनगरावस्थितस्योत्तरश्लोके शयान- ग्रहणाच्छयानस्य सूर्योनास्तंयायात् नाभ्युदियात् क्वचित्कस्मिंश्चित्काले ॥ २१९ ॥ **तमिति** । तंब्रह्मचारिणमिच्छातः सुप्तंयदि सूर्यउदयेनाभिव्याप्तंकुर्यात् । तस्य वा शास्त्रार्थपरिज्ञानाच्छयानस्य यद्यस्तंयायात्तदा जपन्नहदानीमि- तिगौतमस्मरणात् सावित्रींजपन्नदिनंनाश्नीयात् । अस्यापि प्रायश्चित्तस्य प्रकरणोत्कर्षोलाघवार्थम् । तत्र हि क्रियमाणे ब्रह्मचारिग्रहणंकर्तव्यंस्यात् ॥ २२० ॥ अत्रार्थवादः **सूर्येणह्याभिनिम्लुक्तइति** । सूर्येणाभिनिम्लुक्तोनिम्लोचनेना- स्तंगमनेन शयानः सन्नभिव्याप्तोनन्तरोक्तंप्रायश्चित्तमकुर्वाणोमहता पापेन युक्तः स्यात् ॥ २२१ ॥ यतएवमतः **आचम्येति** । प्रयतः शुचिः सन्समाहितः संयतेन्द्रियउपस्पृश्य शुचौ देशे जपंकुर्वन् सन्ध्योपासनोक्तविधिना याव- ज्जीवमुभे संध्ये सेवेतेति सन्ध्यालोपप्रायश्चित्तप्रसङ्गेनायंसन्ध्योपासनानुवादः । प्रयतत्वंसमाहितत्वंशुचिदेशविध्यर्थम् ॥ २२२ ॥ **यदीति** । स्त्रीशूद्रावपि यच्छ्रेयोवक्ष्यमाणंशास्त्रविरुद्धमनुतिष्ठतः तदपि तयोःसकाशात् दृष्ट्वायुक्तोयत्नवा- ननुतिष्ठेत् । तथा यत्र च शास्त्रीयपदार्थे जपादौमनोस्यपरितुष्येत् तत्समाचरेत् ॥ २२३ ॥ श्रेयआचरेदित्युक्तंकिंतच्छ्रे- यइत्यतआह **धर्मार्थाविति** । धर्मार्थौ श्रेयइति कैश्चिदुच्यते परलोकेहलोकयोर्यथाक्रमंतयोःकर्मनिमित्तत्वात् । कामार्थौ

( १ ) कस्मिंश्चित्=कस्मिंश्चिदपि ( गौ० २, १ ).

वित्यपरैःकथ्यते प्रत्यक्षतस्तयोरेव पुरुषार्थसाधकत्वोपलम्भात्। धर्मएवेत्यन्यैर्भण्यते अर्थकामयोस्तन्मूलत्वश्रवणात्। अर्थएवेह लोके श्रेयइत्यन्यै रभिधीयते। ततएव धर्मकामसिद्धेः। एवंमतान्तराण्युक्त्वास्थितपक्षमाह। त्रिवर्गइतितुस्थितिरिति धर्मार्थकामरूपस्त्र्यात्मकोत्रिवर्गः श्रेयइत्युच्यते। इत्येषएवनिश्चयः। परस्पराविरोधेनत्रयाणामपि पुरुषार्थसाधकत्वात्। न च ब्रह्मचारिणः कामसेवनमतोनोपदिश्यते श्रेयःपदार्थनिरूपणपरत्वात् ॥ २२४ ॥ **आचार्यश्चपिताचैवेति।** आचार्यपितृमातृज्येष्ठभ्रातरःपीडितेनापि क्षत्रियादिना नावमाननीयाविशेषतोब्राह्मणेन नान्येषांतन्मूलत्वाद्धर्मानुष्ठानस्यातिप्रसङ्गःस्यात् यस्मादिति ॥२२५॥ **आचार्योब्रह्मणोमूर्तिरिति** । ब्रह्मोपदेशोत्पादनसाधारणैकोदरनिवासालंबनमेतदेषांब्रह्मादिशरीरत्वाभिधानं प्रकृतविध्यर्थवादार्थम्। ब्रह्मप्रजापती परमात्महिरण्यगर्भौ स्वः सौदर्यः ॥ २२६ ॥ **यमिति** । संभवे गर्भग्रहणेसति तदनन्तरमेवानवरतंयद्दुःखमपत्यानांसंबन्धि मातापितरावनुभवतः तस्यानेकवर्षशतप्रत्युपकारकरणेनाप्यानृण्यंप्राप्तुं न शक्यते किमुतैकजन्मनेति ॥ २२७ ॥ तस्मात् **तयोर्नित्यमिति** । मातृपित्राचार्याणांयावज्जीवंप्रियंकुर्यात्। न च तपोन्तरासक्त्यातत्प्रियोपेक्षाकार्या। तस्मात्तेष्वेव चतुष्टयेषु सर्वतपःफलंसम्यक्प्राप्यते ॥ २२८ ॥ यतएवमतः **एषामिति**। एतेषांमात्रादीनांत्रयाणांपरिचर्या तपोन्तरेभ्यःप्रकृष्टंतपोमन्वादिभिःकथ्यते एवंच तैरननुज्ञातोनित्यनैमित्तिकवर्जं अन्यंधर्मंनाचरेत ॥ २२९ ॥ **यस्मात्तइति**। पृथिव्यन्तरिक्षब्रह्मलोकावाप्तिहेतुत्वात्तच्छुश्रूषायास्तएवत्रयोलोकाइत्युच्यन्ते। एवंच ब्रह्मचर्यव्यतिरिक्ताश्रमत्रयतुल्यफलत्वात्तत्सेवायास्तएवत्रयआश्रमाः। वेदत्रयजपतुल्यफलत्वात् तत्परिचर्यायास्तएवत्रयोवेदाः। अग्निसंपाद्यकर्मतुल्यफलत्वात् तदाराधनायास्तएव त्रयोग्नयः। इतिमन्वादिभिः उक्ताइति पूर्वविध्यर्थवादः ॥ २३०॥ **पिता वै गार्हपत्योग्निरिति।** गार्हपत्याद्धविषांसंभवोस्यचपितुः सकाशात्। दक्षिणाग्नेश्च गुणत्वमातुश्चपितृपरतन्त्रत्वं आहवनीयस्य यागनिवर्तकत्वं प्राधान्यं। आचार्यस्याप्यखिलपुरुषार्थकारित्वात् प्राधान्यमित्येव किंचित्सामान्यमाश्रित्यायमेषामग्निव्यपदेशः। अग्निभ्यश्चैषामुपकरोति साग्निस्त्रेतात्राणार्थमिव गुरुतरेति अयमप्यर्थवादः ॥ २३१ ॥ **त्रिष्विति**। एतेषु त्रिषु शुश्रूषायामस्खलन् त्रीन् लोकान्वक्ष्यमाणान् जयते गृही । आधिपत्येन स्वीकुर्यात्। ततः स्वदेहेन कान्तियुक्तेन ज्वलनादित्यादिदेववत्सुखंद्युलोकेभवति। गृहस्थस्याप्ययंधर्मः इति दर्शयितुंगृहीत्युक्तम् ॥ २३२ ॥ **इममिति** । मातृपित्राचार्यशुश्रूषाभिःपृथिव्यन्तरिक्षब्रह्मलोकान्प्राप्नोति ॥ २३३ ॥ **सर्वइति** । सर्वे यागादयोधर्मास्तस्य फलदानोन्मुखाभवन्ति येन मातृपित्राचार्या आराधिताः। येनपुनरेते न परितोषिताः तस्य सर्वायागादिक्रियानिष्फलाइतिशुश्रूषाविध्यर्थवादः ॥ २३४ ॥ **यावदिति** । मातृपित्राचार्येषु जीवत्सु अन्यंधर्मंनाचरेत्। किंतर्हि तेष्वेव सर्वदा वर्तमानभविष्यदुपकारतःकुर्यादिति प्रकृतविध्यर्थवादः । तेषांत्रयाणामित्येतत्सिद्धस्यैवास्यपुनरभिधानंप्रकृतविधिदार्ढ्यार्थम् ॥ २३५ ॥ **तेषामिति**। तत्शुश्रूषाविरोधेन परलोकार्थंयागार्थंयद्यदाचरेत् तत्तदेषांतत्फलंस्यादित्येवंमनोवाक्कायव्यापारेण तेभ्योदद्यात् ॥ २३६ ॥ **त्रिष्विति** । यस्मान्मात्रादिष्वाराधितेषु यावत्किंचित्यागादिकर्तव्यंतत्सर्वं पुरुषस्य परिपूर्णंभवति। यस्मादेषसाक्षात्प्रकृष्टोधर्मः अग्निहोत्रादिः गौणइति मन्वादिभिरुच्यते इतिप्रकृतविध्यर्थवादः ॥ २३७ ॥ **श्रद्दधानइति** । श्रद्धोपेतःप्रकृष्टांविद्यां उत्कृष्टमात्मज्ञानाद्युपदेशं क्षत्रियादेर्निकृष्टजातीयादपि गृह्णीयात्। शूद्रादपि प्रकृष्टंधर्मंशास्त्राविरुद्धं तेन कुतोपि ज्ञातंशिष्येत्। यत्तु यदि स्त्री यद्यवरजइत्युक्तंतन्न ततः शिक्षयन्त्यापतदनुष्ठानदर्शनेनानुष्ठानम्। उत्कृष्टांचावैधव्यादिलक्षणोपेतांक्षत्रियकुंभकारादिकुलादप्याददीत ॥ २३८ ॥ **विषादिति**। विषादपि तत्साधनकरसायनादिकरणेनामृतंग्राह्यम्। ग्रामादि प्रस्थितेन प्रशस्तवाक्यंबालोदीरितमप्यभीष्टार्थसंसिद्धेः

सूचकत्वेनग्राह्यम् । शत्रोरपि साध्वाचारोग्राह्यः । अमेध्यपतितमप्यकृतसंस्कारमपि काञ्चनंग्राह्यम् ॥ २३९ ॥ **स्त्रियोरत्नानी**ति । **शिल्पानिचाप्यदुष्टानी**ति । अत्र स्त्रीरत्नशौचचित्रकर्माद्यदुष्टशिल्पाभिधानार्थः यथैतानि सदाश्रयाण्युपादेयान्येवम् ॥ २४० ॥ **अब्राह्मणादि**ति । ब्राह्मणाध्यापकाभावे आपत्काले विधानमापत्कल्पइतिवापाठः । तस्मिन्नब्राह्मणादध्ययनंब्रह्मचारिणउपदिश्यते । अध्ययनधर्मत्वेन च शुश्रूषायाःप्राप्तत्वे सत्यपि पुनर्वचनस्य नियमार्थत्वादनुपगमनमेव गुरोः शुश्रूषा नान्या सा च यावद्वेदग्रहणंनपाठकालएव प्राङ्मुखउपविश्येति गृह्यस्मरणात् ।' नतत्रगमनाभावात् । अब्राह्मणशब्देन च ब्राह्मणसदृशउच्यते न युक्तेन सदृशाभिधानात् तत्र सत्यपि वर्णत्वेन सादृश्यत्वेन द्विजत्वेन च सदृशतरत्वाच्छूद्रशिष्योगुरुश्चैवेति च निषेधदर्शनादिहाब्राह्मणशब्देन क्षत्रियवैश्याविवोच्येते । न तु शूद्रस्तथापि च जीवेत्क्षत्रियधर्मेण सह्यस्यप्रत्यनन्तरइत्यापद्येवंदर्शनादिहापि प्रथमंक्षत्रियात्तदभावाद्वैश्यादिति वेदितव्यम् । अत्र गुरुशब्देनाभिधानात् शुश्रूषा एकदेशस्य चाभ्यनुज्ञानात् न क्षत्रवैश्ययोरप्येवंविधाध्येत्रध्यापनमाचार्यस्याभिमतमित्यवसीयते । कथंतर्हि निषिद्धाध्यापनोध्यापनगुरुः स्यात् शुश्रूष्योवा अदृष्टार्थेचात्रैतदनयोर्वृत्त्यर्थत्वेन ॥ योलोभादधमोजात्याजीवेदुत्कृष्टकर्मभिः ॥ इति प्रत्यवायस्यवक्ष्यमाणत्वात् ॥ २४१ ॥ एवंवक्ष्यमाणस्य नैष्ठिकस्यापि अब्राह्मणादध्ययनाद्यावज्जीवंतद्गृहवासप्राप्ताविदंतन्निषेधार्थमाह **नेति** । नैष्ठिकः शिष्योऽब्राह्मणगुरुगृहेऽध्यापनाचाराभिज्ञनाशून्यब्राह्मणगृहे वा सर्वोत्कृष्टांतिमिच्छन् यावज्जीविकंवासं नकुर्यात् ॥ २४२ ॥ इदानींनैष्ठिकब्रह्मचर्यविध्यर्थमाह **यदी**ति । यदि पुनर्ब्रह्मचारी यावज्जीविकंवासंगुरुगृहे इच्छेत्तदा यत्नवान् भूत्वाऽऽशरीरपातनाद्गुरुमाराधयेत् इत्येषएव नैष्ठिकउच्यते । तथा च हारीतः ॥ निष्ठांचेद्गच्छतीति । इतरस्तूपकुर्वाणकउच्यते । अध्यापनार्थेशुश्रूषाकरणंप्रवृत्तत्वात् । न चात्र यावज्जीवमग्निहोत्रंजुहुयादित्येवमादि श्रुत्याबाधआशङ्कनीयः ब्रह्मचार्याचार्यकुलावासी तृतीयोत्यन्तमात्मानं आचार्यकुलेवसादयन्नित्यस्याप्येतच्छ्रुतिमूलत्वात् ॥२४३॥ अस्यफलमाह **आसमाप्तेरि**ति । यावच्छरीरंयोगुरुंपरिचरति सब्रह्मलोकमामहाप्रलयादनश्वरमञ्जसा स्पष्टेन मार्गेण गत्यन्तराव्यवहितेन गच्छति । विप्रग्रहणंप्रदर्शनार्थंत्रयाणांप्रकृतत्वात् ॥ २४४ ॥ **नपूर्वमि**ति । स्नानपूर्वमगृहीतवेदःशिष्योधनमाहरन् यथा न अध्यापयामीत्येवंगुरुणादिष्टोनकिंचिदपि गुरवे दद्यात् भृतकाध्यापकत्वप्रसङ्गात् । अतएवाह **धर्मविदि**ति । अपणपूर्वत्वेनिषेधोधर्मार्थौ यत्र नस्यातामित्युक्तत्वात् ॥ तथाचापस्तंबः ॥ यदाचार्यंभोजयित्वा शेषमन्नमश्नाति हविरुत्कृष्टमेव तद्यदन्यानि द्रव्याणि यथालाभमुपहरति दक्षिणाएव वा सएषब्रह्मचारिणोयज्ञोनित्यप्रततइति । स्नानंपुनः कर्तुमिच्छन्समावर्तनकालइममर्थमाहरेत्येवंगुरुणादिष्टोयथाशक्त्यवश्यंगुर्वर्थमाहरेत्तदानींभृतकाध्यापितत्वासंभवात् ॥ २४५॥ **क्षेत्रमि**ति । अतश्च प्रीत्युत्पादनपरत्वात्प्रदर्शनार्थंभूम्यादिग्रहणम् । अन्ततोयद्युत्पन्नंकिंचित्स्यात्तदा छत्रोपानहम् ॥ २४६ ॥ नैष्ठिकधर्मविध्यर्थमाह **आचार्यइ**ति । आचार्ये प्रमीते गुरुवद्गुरुपुत्रदारसपिण्डानां पूर्वस्यपूर्वस्याभावे उत्तरोत्तरस्य शुश्रूषांकुर्यात् ॥ २४७ ॥ **एषुत्वविद्यमानेष्वि**ति । गुरुपुत्रादिषु असत्सु कालनियमावलंबनेनोत्थानोपवेशनादटनवान्भक्त्याग्निकार्यं अनुतिष्ठन् आत्मसंबन्धि शरीरंक्षपयेत् ॥ २४८ ॥ **एवमि**ति । आसमाप्तेःशरीरस्येत्युक्तमप्येतन्नैष्ठिकफलाविप्लुतविधानार्थमुपसंहारार्थमनूद्यते । उक्तेन रूपेण योऽस्खलन्नैष्ठिकब्रह्मचर्यंचरति सब्रह्मलोकंगच्छति न च संसारे जायतेमहाप्रलये ब्रह्मणासहयुज्यते विप्रग्रहणंप्रदर्शनार्थं त्रयाणांप्रकृतत्वात् ॥ २४९ ॥ इतिश्रीभट्टमाधवात्मजगोविन्दराजविरचितायांमनुटीकायांमन्वानुसारिण्यांब्रह्मचर्याश्रमविधानंनामद्वितीयोध्यायः ॥ २ ॥ शिवमस्तु ॥

## ॥ अथतृतीयोऽध्यायः ॥



**श्रीगणेशायनमः** ॥ षट्त्रिंशदाब्दिकं उपकुर्वाणकब्रह्मचारिणोगार्हस्थ्याधिकारात् कियदवधिनि ब्रह्मचर्ये कृते गार्हस्थ्यमा श्रयणीयमित्यतआह **षट्त्रिंशदाब्दिकमिति** । षट्त्रिंशद्वर्षसंभवं गुरुगृहे ऋग्यजुःसामाख्यवेदत्रयविषयंप्रतिशाखंद्वादशवर्षाणि व्रतं नियमसमूहश्चरितार्थंतदर्धकंचाष्टादशप्रतिशाखं षडितिपादिकंवा नवप्रतिशाखंत्रीणीति यावता वा कालेनोक्तावधेरूर्ध्वमधोवा वेदान्गृह्णीयात्तावत्कालंचरितव्यम् । नियमफलापेक्षोविकल्पः नियमेनाधीतंवीर्यवत्तरंभवति इतिश्रुतेः । अत्रचाथर्ववेदस्य नेता एतेअथर्वांगिरसीइत्यादिश्रुतेः श्रुतीरथर्वांगिरसीरित्यादिस्मृतेश्च वृद्धव्यवहारेचेतरवेदवन्निरुपपदवेदशब्दप्रयोगादङ्गानि वेदाश्चत्वारइतिधर्मः तेष्वपिचतुर्षु व्यवहारात् । सत्यपिवेदत्वे शान्त्यादिप्रयोजनत्वे प्रायेण दृष्टार्थत्वादृग्वेदेनैवहोत्रमकुर्वत यजुर्वेदनाध्वर्यवं सामवेदेनोद्गीथम् । यदेव त्रय्यै विद्यायै संश्लेषंतेनब्रह्मत्वमपिश्रुतेस्त्रय्यैवक्रियापरिसमाप्तेर्ग्रहणं वेदःकृत्स्नोधिगन्तव्यइति एकशाखाध्ययनेनैव स्वाध्यायनिवृत्तौ पुण्यातिशयापेक्षया ॥ १ ॥ **वेदानिति** । शाखात्रयंद्वयंचैकांवा स्वशाखापूर्वक्रमेण मन्त्रब्राह्मणपौर्वापर्यस्थितिक्रमेण चाधीत्याखण्डितब्रह्मचर्योऽसंजातस्त्रीप्रसंयोगोगार्हस्थ्यंप्रतिपद्यते ॥ २ ॥ **तमिति** । तंकृतब्रह्मचर्यंब्रह्मचर्यावस्थानोदितधर्मानुष्ठानानुशयेन प्रतिख्यातं तस्मात्पुत्रमनुशिष्टंलोक्यमाहुरितिश्रुत्याः पितुः प्राथमकल्पिकत्वात्पितुः सकाशात्तदभावआचार्ये अधीतवेदं कृतमाल्याद्यलंकारं परार्ध्यशयनोपविष्टं पितातदभावआचार्यादिगृह्योक्तस्वरूपगोसाधनकमधुपर्काख्यकर्मणा गार्हस्थ्यप्रतिपत्तेःप्राक् पूजयेत् । दीयतइति दायः ब्रह्मैवदायोब्रह्मदायस्तंहरतीतिब्रह्मदायहरः ॥ ३ ॥ **गुरुणेति** । गुर्वनुज्ञातोगृह्यशास्त्रविध्यनतिक्रमेण कृतगृह्योक्तस्वरूपस्नानसमावर्तनाख्यकर्मा द्विजः समानजातीयांप्रशस्तलक्षणांभार्यां उपयच्छेत् ॥ ४ ॥ **असपिण्डेति** । सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ॥ इत्यपि वक्ष्यत्यतोमातुरसपिण्डमातामहप्रमातामहान्वयजाता या न भवति याच मातामहीप्रमातामह्याद्यन्वयजाता न भवति पितुश्चयासमानगोत्रानभवति चशब्दात्सपिंडाच पितृष्वस्रादिसंततिजाता या न भवति साद्विजातीनांमैथुनादौ दारकर्मणि योग्या ॥ ५ ॥ **महान्तीति** । इमानि दश वक्ष्यमाणानि कुलान्युत्कृष्टान्यपि वर्जयेत् । तथा गोछागाविमहिषीधान्यैः समृद्धान्यपि तच्छीलप्रजोत्पत्तिव्याधिसंक्रान्तिपरिहारार्थंशास्त्रनोदनासामर्थ्याददृष्टदोषपरिहारार्थंच दारसंबन्धिवर्जयेत् ॥ ६ ॥ **हीनक्रियमिति** । यागादिरहितंकुलंस्त्रीजनकंवेदशून्यंप्रचुरतरदीर्घरोमाश्रितं आर्शाद्याख्यव्याध्युपेतं राजयक्ष्ममन्दाग्न्यपस्मारिश्वित्रिकुष्ठीनांचसंबन्धीनि कुलानि वर्जयेत् ॥ ७ ॥ **नोद्वहेदिति** । कपिलांषडंगुल्याधिकां व्याधिनाधिष्ठितां अविद्यमानलोमां बहुलोमां बहुभाषिणींपिङ्गलवर्णांकन्यांनोपयच्छेत् ॥ ८ ॥ **नेति** । नक्षत्रवृक्षनदीम्लेच्छपर्वतपक्षिसर्पदासभयानकनामिकां कन्यां नोद्वहेत् ॥ ९ ॥ **अव्यङ्गाङ्गीमिति** । अविकलाङ्गीं प्रसन्ननाम्नीं राजहंसगजरुचिरगमनां अनतिस्थूलरोमकेशदन्तां कोमलाङ्गीं कन्यांपरिणयेत् । विधिनिषेधौ भयाभिधाननिर्दोषसगुणकन्योपयनेऽभ्युदयार्थम् ॥ १० ॥ **यस्याइति** । यस्याभ्राता नास्ति तांयदपत्यंभवेदस्यास्तन्ममस्यात्स्वधाकरं इत्यभिसन्धिमात्रात्पुत्रिकेत्येकइत्येवं ननु गौतमोक्तपुत्रिकाविधिभ्रान्त्यानोद्वहेत् । भ्रातृभावे हि पितरि विज्ञायमानेपि पुत्रा-

भावात्कदाचिदसौ पित्रा पुत्रिका कृता स्यात्। सत्यामपिवा सभ्रातृकमसिद्धावेनैवमुत्पन्नेयंनेति यस्याजनकोविशेषेण ज्ञायते तामपिपुत्रिकात्वभ्रान्त्या नोद्वहेत् जनकेहि सम्यक्ज्ञायमाने भिन्नपितृकयोरप्येकमातृकायाभ्रातृत्वप्रसिद्धेरस्ति जनककृते पुत्रिकात्वाशङ्का। एतदुक्तं उभयोर्विशेषणं पुत्रिकायाश्च न परिपूर्णभार्यात्वं अतएवनिषेधात्। अभ्रातेव पुंसएति प्रतीचीति व्याख्यातंचैतन्निरुक्तकृताभ्रातृकेवपुंसः पितॄनेत्यभिमुखीसंतानकर्मणे पिण्डदानाय भवतीति। अत्र चप्रकरणे येषांविधिनिषेधानांदृष्टगुणदोषानुषङ्गोनास्ति यथाअसपिण्डाचयामातुरितितदतिक्रमे भार्या नभवति। भार्यादशम्याहवनीयादिवत्संस्कारशब्दत्वात् येषांपुनर्दृष्टगुणदोषदर्शनेन विधिनिषेधाभिधानं यैथाहीनक्रियमिति नभवति। क्रमोभार्यात्वाभावः केवलनियमातिक्रमात्प्रायश्चित्तमात्रेभवति। यच्चैतन्नर्क्षवृक्षनदीनाम्नीमित्यादि तदपि दृष्टगुणदोषानुविधायिविधिनिषेधप्रकरणमध्यपाठात्तदेकयोगक्षेममेव तथाच मनुना सपिण्डादिप्रतिषेधमभिधायानन्तरंमहान्त्यपि समृद्धानीत्यादिपृथक्करणमुपक्रम्य हीनक्रियमित्यादि नर्क्षवृक्षेत्यादिचैतत्प्रकरणेभिहितम् ॥ ११ ॥ सवर्णेति। द्विजातीनामादौ पाणिग्रहणे समानजातीयायुक्तेत्युक्तं कामात्पुनर्दारकर्मणि प्रवृत्तानामिमावक्ष्यमाणवर्णक्रमेणश्रेष्ठाःस्युः ॥ १२ ॥ शूद्रेति। शूद्रस्य शूद्रैव भार्या भवति नउत्कृष्टापकृष्टे। शूद्रावैश्याचवैश्यस्य मन्वादिभिःस्मृता। वैश्याशूद्राक्षत्रियाच क्षत्रियस्य क्षत्रियावैश्याब्राह्मणीच ब्राह्मणस्य। शूद्रामप्येकेमन्त्रवर्ज्यमिति वसिष्ठस्मरणात् मन्त्रवर्जितैषांद्विजातीनांभवति ॥ १३॥ नेति। ब्राह्मणक्षत्रिययोर्गार्हस्थ्यप्रतिपत्तये सवर्णा अलभमानयोः कस्मिंश्चिदपीतिहासाख्याने शूद्राभार्या नोपवर्ण्यते। एवंचशूद्रानिषेधात् ब्राह्मणक्षत्रिययोः सवर्णालाभेऽस्तिक्षत्रियवैश्योद्वाहइति गम्यते। तत्रापिच धनपद्यादौ क्षत्रप्रवृत्तिदर्शनात् प्रथमंब्राह्मणस्यक्षत्रियोद्वाहस्तदलाभेवैश्योद्वाहः ॥१४॥ आत्रार्थवादः हीनजातिस्त्रियमिति। शूद्रतामित्युपादानात् हीनजातिंशूद्रांशास्त्रार्थापरिज्ञानादुपयच्छमानाद्विजातयः कुलानि पुत्रपौत्रादिबन्धौश्चिरंतनकालभाविसंतानानि शूद्रतांगमयन्ति तथाविधानामेव तत्रोत्पादनात्। अत्र द्विजातयइति वचनाद्वैश्यस्याप्यकृतसवर्णाविवाहस्य शूद्रानिषेधइति गम्यते। ब्राह्मणक्षत्रिययोःपुनःप्रत्यवायातिशयपूर्वप्रतिषेधारंभसामर्थ्यात्। मतान्तराण्याहुः ॥ १५॥ शूद्रावेदीति। अत्रेरुतथ्यपुत्रस्यच गौतमस्यैतन्मतं यच्छूद्रोद्वोढा पतितोभवतीति निन्दया प्रतिषेधानुमानम्। नह्यकस्मात्। निन्दाप्रवर्ततइत्येवंच तन्मतेनायंशूद्रायाअत्यन्तप्रतिषेधः। शौनकस्य पुनर्मतंयच्छूद्रासुतोत्पत्त्यापततीत्यतश्च तन्मते ऽनतौतामुपेयात्। भृगोःपुनर्मतं यत्केवलशूद्रापत्यतयापततीत्येवं चतत्पक्षे इतरासु जातापत्यः शूद्रामृतौव्रजेत् ॥ १६ ॥ शूद्रामिति। शूद्रांगत्वा ब्राह्मणोनरकंव्रजति। इति अयमत्यन्तप्रतिषेधः। शेषोर्थवादः। सुतं शूद्रायामुत्पाद्यब्राह्मण्यादेवभ्रश्यतीत्ययंसुतोत्पत्तिनिषेधार्थवादः। एवंचेहार्थवादोयोब्राह्मणग्रहणादत्यन्तप्रतिषेधः। सुतोत्पत्तिनिषेधोब्राह्मणविषयादेव ॥ १७ ॥ दैवपित्र्यातिथेयानीति। यस्तुतत्कारेयन्मोहात्सजात्यास्थितयाप्ययेति ॥ निषेधंवक्ष्यत्यतोसन्निहितायामपि सजात्यायांवायामश्राद्धातिथिदानानि यस्य शूद्रया दत्तानि तद्धव्यकव्यं पितृदेवानोपजीवन्ति नच तेनातिथेयेन सगृहस्थःस्वर्गंगच्छति ॥ १८ ॥ वृषलीफेनपीतस्येति। शूद्रायाकृतपरिचुंबनस्य तयैवचैकपर्यङ्कादौ मुखश्वासापवित्रीकृतस्य तस्यामेव चोत्पन्नापत्यस्य संशुद्धिर्नोपदिश्यतइति पूर्वोत्तरावर्धश्लोकावत्यन्तनिषेधात् ॥ १९ ॥ भृगुमतार्थवादौ चतुर्णामिति। चतुर्णामपि ब्राह्मणादिवर्णानांपरलोकेहलोकयोः कांश्चिद्धिताहितान् इमान्वक्ष्यमाणानष्टौ भार्याप्राप्तिहेतून्विवाहान्संक्षेपेण शृणुत ॥ २० ॥ ब्राह्मइति। स्तुतिनिन्दाप्रतिपाद-

( १ ) बन्धाः=प्रबन्धाः ( गौ०२, ५ )

नोयम् । एषांब्राह्मादिव्यपदेशोनत्वसाधारण्येन ब्रह्मादिदेवतासंबन्धएषांविद्यते ॥ २१ ॥ **येयस्यधर्म्या**इति । ये विवाहायस्य वर्णस्य धर्मानपेतायस्य च विवाहस्य यौ गुणदोषौ वोढुरिष्टानिष्टफलदातारौ प्रतिनियतविवाहोत्पन्नायत्तेषु च ये गुणादोषास्तत्सर्वंयुष्माकंप्रवक्ष्यामि ॥ २२ ॥ **षडिति** । षडादितः क्रमावस्थितान् विप्रस्य क्षत्रियस्य चोपरितनान् चत्वारोविट्शूद्रयोः पुनः राक्षसवर्जितान् तानेव धर्मादनपेतान् जानीयात् ॥ २३ ॥ **चतुरइति** । ब्राह्मणस्याद्याश्चत्वारः क्षत्रियस्य राक्षसमेकम् वैश्यशूद्रयोश्चासुरम् स्मृत्यर्थोपनिबन्धकाराः प्रशस्तान्मन्यन्ते । अत्र चासुरादीनांब्राह्मणादिषु पूर्ववाक्यविहितानांइह निराकरणात् विकल्पतोनित्यासंभवे वैकल्पिकेषु प्रवृत्तिः । एवमुत्तरत्रापिवेदितव्यम् ॥ २४ ॥ **पञ्चानामिति** । इहपैशाचनिषेधात्प्राजापत्यादयः पञ्चगृह्यन्ते । पञ्चानां प्राजापत्यादीनांमध्यात् त्रयोधर्मादनपेताद्वौत्वधर्म्याविहशास्त्रे स्मृतौपेशाचासुरौ तावापद्यपि न कर्तव्यौ ॥ २५ ॥ **पृथगिति** । यावेतौगन्धर्वराक्षसाख्यौ विवाहौ पूर्वोक्तौ तौ पृथक् पृथक्कृत्वा मिश्रौवा क्षत्रस्याधर्म्याविति पूर्वंसिद्धम् । मिश्रौ धर्म्यौ तस्य तौ स्मृतौ इत्यनेनोच्यते । तत्रेतरेतरानुरागपूर्वंयदाकन्यावरेणात्मानं संविदा युद्धादिनापहारयति तदागान्धर्वराक्षसौ मिश्रौ भवतः ॥ २६ ॥ **आच्छाद्यचार्हयित्वेति** । वासोविशेषैःकन्यामाच्छाद्यालङ्कारादिभिश्चार्हयित्वा श्रुताचारवन्तंवरंयाच्ञारहितं स्वयमानीय यत्तस्मै कन्यादानं सब्राह्मोविवाहोमन्वादिभिःस्मृतः ॥ २७ ॥ **यज्ञइति** । ज्योतिष्टोमादियागे प्रारब्धमर्थवदृत्विजंप्रचरति यदलङ्कृत्यकन्यादानंक्रियते तंदैवंविवाहंमन्वादय आचक्षते ॥ २८ ॥ **एकमिति** । गोबलीवर्दमेकंद्वेवा वराद्धर्मतोयागाद्यवश्यकर्तव्यधर्मनिमित्तंगृहीत्वा यत्कन्यायायथाशास्त्रंप्रदानंविधीयते सआर्षोविवाहउच्यते ॥ २९ ॥ **सहेति** । सहयुवांधर्मंकुरुत इति प्रदानकाले वाचोक्त्वा यदर्चापूर्वं कन्यादानं सप्राजापत्योविधिःस्मृतः ॥ ३० ॥ **ज्ञातिभ्यइति** । कन्यायैकन्याज्ञातिभ्योयथाशक्तिधनंदत्वा यत्कन्यायाश्चप्रदानं आदानं स्वीकारं स्वेच्छातोनार्षवद्धनजातिपरिमाणानियमेन सआसुरोविवाहउच्यते ॥ ३१ ॥ **इच्छयेति** । कन्यावरयोःपरास्परानुरागाद्यःसंयोगोमैथुनाचरणं समैथुनायहितःकामनिमित्तकोगान्धर्वोविवाहोबोद्धव्यः । इहगान्धर्वादौ मुख्यमेवोपगमनं तुशब्दस्तथाप्रतीते नच ॥ पाणिग्रहणकामन्त्राकन्यात्वेच प्रतिष्ठिताः॥ इति वचनातसंस्कारपरिलोपोयागर्भिणोसंस्क्रियते वोढुःकन्यासमुद्भवः । अक्षताच क्षताचैव पुनर्भूसंस्कृतापुनः इत्यादि मनुयाज्ञवल्क्योक्तसहोढकानीनपौनर्भवलक्षणेषु संसारदर्शनात् । गान्धर्वादि विवाहेषु पुनर्वैवाहिकोविधिः ॥ कर्तव्यश्चत्रिभिर्वर्णैः समयेनाग्निसाक्षिकः इतिचदेवलस्मरणात् ॥ तथा ॥ गान्धर्वासुरपैशाचाविवाहाराक्षसाश्चयाः ॥ पूर्वंपरिणयस्तेषांपश्चाद्धोमोविधीयते ॥ बह्वृचगृह्यपरिशिष्टदर्शना द्धारतादौच मुख्योपगमनवदेवंच । पाणिग्रहणकामंत्राइत्यादि नरान्तरोपभुक्तकन्याविषयेवतिष्ठते । पुनर्वैवाहिकोविधिःकर्तव्यः इत्यादिवचनाद्गमनोत्तरकालमकृतसंस्कारा द्विजातीनांभार्या नभवति शूद्रस्य भवत्येव त्रिभिर्वर्णैरित्युपादानात्तथाविधपुत्रस्य रिक्थभाग्दर्शनात् ॥ ३२ ॥ **हत्वेति** । हत्वा कन्यापक्षान् प्रमाथ्य छित्वाऽप्रमाथ्याङ्गच्छेदादि कृत्वा भित्वा प्राकारादीन् हामातर्हापितरनाथापह्रियते इत्येवमाह्वयन्तीमश्रुजलाविलनयनां यःकन्यांगृहादाहरति तदपि भूयः कन्याहरणं राक्षसोविवाहः ॥ ३३ ॥ **सुप्तामिति** । सुप्तांनिद्रोपेतांक्षीबां शीलसंरक्षणानिबर्हणां निर्जने प्रदेशे यस्मिन्विवाहे उपगच्छति सपापहेतुर्विवाहानांमध्ये पैशाचोऽष्टमः ख्यातः ॥ ३४ ॥ **अद्भिरेवद्विजातीनांकन्यादानंप्रशस्यतइति** । ब्राह्मणानामुदकदानपूर्वमेव कन्यादानंप्रशस्तमित्युच्यते । क्षत्रियादीनांपुनः परस्परेच्छया विनाप्युदकं वाङ्मात्रेणापि दानमिष्यते ॥ ३५ ॥ **यइति** । एषांविवाहादीनांमध्यात्यस्य विवाहस्य यत्फलं मनुनाकथितं तत्सर्वंमम यथावत्कथयतोविप्राःशृणुत ॥ ३६ ॥

**दश पूर्वापरानिति** । ब्राह्मविवाहोढापुत्रोयदि सुकृतकृद्भवति तदा दश पूर्वान्पित्रादीन् अन्वयिनोमृतान् दशचापरान् पुत्रादीनात्मानंचैकविंशकं पापान्मोचयति । नचाकृताभ्यागमकृतविप्रणाशावत्रचोदनीयौ । श्राद्धादिवद्वचनगम्यत्वादमुष्यार्थस्य पुत्रादीनांचापापाचाराणांउत्पत्तिमात्रेणैवैषांविमोक्षस्तदानीं अनुत्पन्नत्वात् ॥ ३७ ॥ **दैवोढाजइति** । दैवविवाहोत्पन्नःपुत्रः सप्तपरान्पित्रादीन् सप्तावरान्पुत्रादीन् पापान्मोचयति । आर्षविवाहोत्पन्नश्च त्रीन्पित्रादीन् त्रींश्चपुत्रादीन् । तथा प्राजापत्यविवाहोढोजोत्पन्नश्च षट्पुत्रादीन्षट्पित्रादींश्च ॥ ३८ ॥ **ब्राह्मयादिष्विति** । **रूपसत्त्वगुणोपेताइति** । ब्राह्मयादिषु विवाहेषु चतुर्षु क्रमावस्थितेषु अध्ययनादिसंपत्तेजोयुक्ताः साधुप्रियालावण्येन द्वादशाध्यायवक्ष्यमाणलक्षणेन सत्त्वेन दयादिभिश्च गुणैर्युक्ताः धनिनःख्यातिमन्तःसंपन्नस्रगनुलेपनादिभोगानुष्ठातारः पुत्राजायन्ते शतंवर्षाणांजीवन्ति ॥ ३९ ॥ ४० ॥ **इतरेष्विति** । ब्राह्मयादिभ्यश्चतुर्भ्योऽन्येष्वासुरादिषु दुष्टविवाहेषु क्रूरकर्माणोऽनृतवादिनोवेदयागादिद्वेषिणश्च सुताजायन्ते ॥ ४१ ॥ **अनिन्दितैरिति** । अगर्हितैर्भार्याप्राप्तिहेतुभिर्विवाहैरगर्हितानि मनुष्याणामपत्यानि भवन्ति । गर्हितैश्च गर्हितानि भवन्ति । तस्मात् गर्ह्यान्विवर्जयेत् नकुर्यात् ॥ ४२ ॥ **पाणिग्रहणसंस्कारइति** । हस्तग्रहणात्मकसंस्कारोगृह्योक्तोसमानजातिषु गृह्यमाणासु शास्त्रेणोच्यते असजातिषु पुनः उह्यमानासु विवाहकर्मणि अयंवक्ष्यमाणोविधिः पाणिग्रहणस्थाने विज्ञेयः ॥ ४३ ॥ **शरइति** । क्षत्रियया पाणिग्रहणस्थाने ब्राह्मणःपाणिगृहीता वरप्रान्ताच्छरोब्राह्मणोद्वाहेग्राह्यः वैश्ययाच ब्राह्मणःपाणिपरिगृहीता दात्रादितोदनमयःप्रान्तंब्राह्मणक्षत्रियोद्वाहेग्राह्यम् । शूद्रयापुनर्द्विजात्युद्वाहे तत्ततप्रावृतवस्त्रदशाग्राह्याः ॥ ४४ ॥ **ऋतुकालाभिगामीति** । ऋतुर्गर्भाधानसमर्था स्त्रियोवस्था । तत्कालेभार्यामजातपुत्रोनियमतउपगच्छेत् अनुपगमनेदोषश्रवणात् । तथाचपराशरः ॥ ऋतुस्नातांतुयोभार्यांसंनिधौनोपगच्छति । घोरायांभ्रूणहत्यायांयुज्यतेनात्रसंशयः ॥ किंच ॥ त्रिभिर्ऋणैर्ऋणवान् जायते यज्ञेन देवेभ्यः प्रजयापितृभ्यः स्वाध्यायेनऋषिभ्यः इत्येतत् श्रुतिमूलत्वस्य संभवति । मूलान्तरकल्पनायाः अन्याय्यत्वम् । तथाच पुत्रार्थी संविशेदिति अनेनैतत्श्रुतिमूलत्वमस्याचार्यआविष्करिष्यत्येवं चैतन्मूलत्वादस्य नियमत्वमवसीयते । जातपुत्रस्यत्वनियमः एकपुत्रोत्पादने विधेश्चरितार्थत्वात् । तथाच कामजान्त्वितिदर्शनान्नैकंपुत्रं दद्यात्प्रतिगृह्णीयाद्वा । सहिसंतानायपूर्वेषामिति च । यत्तुदशास्यापुत्रानाधेहीति तद्बह्वपत्यप्रशंसापरं जातपुत्रस्यापि ऋतुकाले नियमगमने कथंदशत्वेत्रावतिष्ठेत् । एवंच नियमोयं नत्वनृतुकाले गमननिषेधार्थापरिसंख्येति । कःपुनरनयोर्भेदविशेषोनियमः तत्राप्राप्तप्रापकोविधिर्नियमः पक्षे प्राप्तंचाहुः समेयजेतेति यदत्रहिदर्शपौर्णमासाभ्यांयजेतेत्येवमादियागचोदनावाक्यतएवपक्षे यागाधिकरणभूतसमदेशप्राप्तिरस्त्येवाधिकरणं विनायागानुपपत्तेः । सूत्रसमयिक्षमाणस्यैतद्वचनमुदास्ते स्वतएवप्रवृत्तेः । विषमेतु यियक्षमाणस्य समाप्राप्तावेतद्वचनं समर्थेविधायकत्वेनार्थवदेवंच विधिफलएवश्रुतेःनियमः । अपरे तु प्राप्तस्यपुनर्वचनंनियममाहुर्यथासर्वतएवात्मानंगोपायेदिति । तत्र चान्यत्रचप्राप्तौ परिसंख्याभवति । यथा पञ्चपञ्चनखाभक्ष्याइत्यस्त्यत्र शशादीनांच जिघांसा प्रयुक्तत्वात् युगपद्भक्षणप्राप्तिः । अतःपरेच भक्ष्याइति परिसंख्यायन्ते । यद्यपि च स्वार्थहानिःपरार्थपरिकल्पना प्राप्तबाधदोषाक्रान्तत्वंपरिसंख्यायास्तथापि वाक्यार्थानर्थक्यापत्तिरुभयतस्तथा श्रवणं वरमित्यसावप्याश्रीयते स्वार्थहानिविधिप्रतिपादकश्रवणेपि विध्यर्थपरित्यागः । तत्रच आद्यापेतवाक्यप्रमेयभूतस्य प्रतिषेधकल्पना पञ्चव्यतिरिक्तपञ्चनखानांजिघांसा प्रयुक्तस्य भक्षणबाधनमिति । प्राप्तबाधः एवंचेहर्तावनृतौ चार्थित्वाप्राप्तौ सत्यामनृतौ न गच्छेदित्येवं यद्यपि परिसंख्यानुमापद्यते नियमरूपतापाक्षित्वाभा-

वात् तथाप्यननुगमनदोषश्रवणान्नियमार्थतैवन्याय्या स्वदारसंतुष्टश्च नित्यंस्यात् । नरुयन्तरमुपगच्छेदिति ऋतौ उपगच्छेदिति भार्यागमनप्राप्ता च भार्यागमनपरिसंख्यैषा अमावास्यादिवक्ष्यमाणपर्ववर्जनमनृतावपि भार्यातत्संरक्षणवतः । संततिकाम्यया विनाप्यपत्योत्पत्तिं तत्सुरतसंभोगेच्छया नियमतउपेयात् । यत्त्वमावास्यामष्टमीचेत्यादिवक्ष्यति तदृतुकालाभिगामीस्यादित्यनेनार्तौ पर्वस्वपिगमनप्राप्तौ निषेधार्थम् । तथाचानृताविति तत्रचवक्ष्यति॥४५॥ **ऋतुरिति**। चतुर्भिर्दिवसैः उत्तमजननिन्दितैः सहजो षोडशाहोरात्राणि स्त्रीणांरोग्याद्यजनि [तऋ] तुक्रमः॥ ४६ ॥ **तासामिति** । तासांपुनःषोडशानांरात्रीणां आद्याश्चतस्रऋतुदर्शनात्प्रभृति चैकादशीत्रयोदश्यौ च निन्दिताः । अतस्तासु नगन्तव्यं शिष्टादशरात्रयोगमनप्रशस्ताःस्युः ॥४७॥ **युग्मास्विति** । युग्मासु षष्ठ्यष्टम्याद्यासु गच्छतःपुत्राजायन्ते । अयुग्मासु सप्तमीनवम्याद्यासु स्त्रियः । अतः पुत्रार्थी युग्मासु ऋतुकाले भार्यांव्रजेत् । तास्वल्पीभावादार्तवस्य तथाचायुर्वेदःयुग्मास्वल्पीभवत्यार्तवमयुग्मां तस्मात्पुत्रस्य दुहितुर्जन्मोत्पद्यते ॥ ४८ ॥ **पुमानिति** । पुंसोधिकबीजे अयुग्मास्वपि रात्रिषु पुमानरूयाकृतिर्दुर्बलोहीनाङ्गोजायते आयुर्वेदएव अभिधानात् । स्त्रीबीजेत्वधिकेयुग्मास्वपि स्त्रीपुरुषाकृतिर्दुर्बला हीनाङ्गावाजायते आयुर्वेददर्शनात् । समेस्त्रीपुरुषबीजेयुग्मास्वयुग्मास्वपिनपुंसकंजायते । स्त्रीपुंसयोर्वा वायुना बीजभेदे सतिनिःसारेल्पेच बीजे अग्रहणंगर्भस्य ॥ ४९ ॥

[ तस्माच्छुक्रविवृद्ध्यर्थंस्निग्धंहृद्यंचभोजयेत् ॥ लघ्वाहारास्त्रियः ......... ]

**निन्द्यास्विति** । निद्यासु षट्सु अन्यासु चाष्टासु रात्रिषु यासुकासुचिन्नक्रमेणैव स्त्रियंपरिहरन् रात्रिद्वयेऽवशिष्टेगच्छन् गार्हस्थादाश्रमान्तरेपिवसन्ब्रह्मचार्येवभवति । न ब्रह्मचर्यखण्डनदोषोस्य भवतीत्युत्पन्नविनष्टपुत्रस्याश्रमान्तरस्थस्यापीच्छया पुत्रार्थंरात्रिद्वयगमने यत्रतत्राश्रमेवसन्नपि पुत्रार्थंसंविशेदिति प्रस्तुतत्वात्पुत्रस्यच महोपकारकत्वेनश्रवणाद्यथाश्रमान्तरेऽत्यन्तब्रह्मचर्योपदेशादयुक्तमेतदित्याहुस्तदसदस्यापिशास्त्रगोचरत्वात् ॥ ५० ॥

[ ऋतुकालेतुयोदारान्संन्निधौनोपगच्छति ॥ तस्यरजसितंमासंपितरःस .... ]

**नेति** । कन्यायाःपिता धनग्रहण दोषज्ञः स्वल्पमपिकन्यादानविनियमरूपधनं न गृह्णीयात् । यस्माल्लोभेन तद्गृह्णन् अपत्यविक्रयीभवेत् ॥ ५१ ॥ **स्त्रीधनानीति** । दुहितृभगिन्यादि संबन्धीनि हिरण्यानि दासीवाहनवस्त्राणि वा पित्रादयउपभुञ्जते । अतस्ते पापाः पापकर्मणोनरकंव्रजन्ति प्रसङ्गात्स्त्रीधनोपजीवनप्रतिषेधः ॥ ५२ ॥ **आर्षइति** । आर्षे विवाहे गोमिथुनंशुल्कंवराद्ग्राह्यमिति केचिदाचार्याःप्राहुः । तत्पुनरसत्यं यस्मादल्पार्थसाध्यत्वादर्थोवाभवतु बहुमूल्यसाध्यत्वाद्भवतु सर्वथा विक्रयस्तावदसौ भवत्येवंगोमिथुनमित्येतत्परमतमित्यवसीयते ॥५३॥ **यासामिति** । यासांकन्यानांपुनःपित्रादयः आत्मार्थंदानंदत्तंवरान्नगृह्णन्ति अपितु प्रसन्नैर्भर्त्रादिभिः अपणपूर्वकंकन्यार्थंदत्तं गृह्णते नासौविक्रयः । किंतर्हिपूजनंतत्कन्यानांकेवलं विक्रयस्पर्शशून्यं अनुकंपारूपं तत् ॥ ५४ ॥

[ योमनुष्योमनुष्यंहिविक्रीणन्धनमिच्छति ॥ तस्यमूत्रपुरीषंहिसपरत्रोपजीवति ॥ १ ॥ ]

**पितृभिरिति** । पितृभ्रातृभर्तृभिर्बह्वींसंपदमामुकामैःस्त्रियःपूज्याअलंकर्तव्याश्च ॥ ५५ ॥ **यत्रेति** । यस्मिन्कुले पित्रादिभिःस्त्रियःपूज्यन्ते तत्र देवताःप्रसीदन्ति । यत्र पुनरेतानपूज्यन्ते तत्र देवताप्रसादाभावाद्यागादिक्रियाःसर्वानिष्फलाः भवन्तीति ॥ ५६ ॥ **शोचन्तइति** । यस्मिन्कुले नवोढादुहितृस्नुषाद्याः सशोकाभवन्ति तत्कुलं क्षिप्रमेव विनश्यति ।

यत्र पुनरेताः शोकार्त्तानभवन्ति तत्सर्वकालं वृद्धिमेति ॥ ५७ ॥ **जामयइति** यानिगृहाणि नवोढादुहित्राद्याश्चापूजिताःसद्यो भिशपन्ति तान्यभिचारविशेषहतानीव सर्वनाशंनश्यन्ति ॥ ५८ ॥ यस्मादेवं **तस्मादेताःसदाभ्यर्च्या**इति । **भूतिकामैर्नरैर्नित्यंसंकरेषूत्सवेषुच** ॥ तस्मात्कारणादेताःसंकरेषु कौमुदीमहानवम्यादिषु उपनयनादिषुच सर्वकामैर्मनुष्यैराभरणवस्त्रभोजनैर्नित्यं अभिपूजनीयाः ॥ ५९ ॥ **संतुष्ट**इति । यस्मिन्कुले स्वभार्यया हेतुभूतया नित्यंभर्ता निवृत्ताभिलाषोभार्यापिच यत्रनित्यंस्वभर्त्राहेतुभूतेनानुपजातनरान्तराभिलाषा तत्राविचलं मङ्गलं भवति ॥ ६० ॥ **यदा**ति । यदिस्त्री सुगन्धलेपनादिना कान्तिमती न भवेत्तदाभर्तारंनप्रहर्षयत् । भर्तुरप्रहर्षाच्चगर्भग्रहणंनभवति ॥ ६१ ॥ किंच **स्त्रियांतुरोचमानायामि**ति । स्त्रियांवेषादिना कान्तिमत्यांभर्तृमनोहरतया परपुरुषसंपर्काभावात्तत्कुलमुज्ज्वलंभवति । तस्यांपुनररोचमानायां भर्तृद्विष्टतया नरान्तरसङ्कल्पतः सकलमेवकुलंमलिनीभवति ॥ ६२ ॥ **कुविवाहैरि**ति । आसुरादिविवाहसंस्काराभाववेदानध्ययनब्राह्मणापूजनैः प्रख्यातकुलान्यपकर्षंयान्ति । तस्मादेतत्परिहरणीयम् ॥ ६३ ॥ **शिल्पेनव्यवहारेणे**ति । **अयाज्ययाजनैश्चे**ति । चित्रकर्मादिशिल्पधनप्रयोगकेवलशूद्रापत्यगवाश्वरथक्रयविक्रयादिकृषिराजसेवाव्रात्यादियाजनयागादिकर्माभावबुद्धिमन्त्रानध्ययनैः क्षिप्रमेवकुलान्यपकर्षयान्ति ॥ ६४ ॥ ६५॥ **मन्त्रत**इति । यद्यपि धनेन कुलमितिप्रवादः । तथापिवेदाध्ययनावबोधतदर्थानुष्ठानयुक्तानि पुनःकुलान्यल्पधनान्यपि उत्कृष्टकुलमध्ये गुण्यतांप्राप्नुवन्ति महतींख्यातिमर्जयन्ति । विवाहप्रसङ्गेन प्रसक्तानुप्रसक्तिकयैतत्सर्वमुक्तम् ॥ ६६ ॥ **वैवाहिक**इति । अष्टकादि गृह्योक्तंकर्म यथाशास्त्रं वक्ष्यमाणपञ्चयज्ञानुष्ठानंचाग्निसंपाद्यंमात्यहिकंपाकं विवाहभरे अग्नौ गृहस्थःकुर्वीत ॥ ६७ ॥ **पञ्चसूने**ति । पचनदृषत्सूर्पोलूखलपघटाद्याःपञ्चगृहस्थस्य सूनाइव घातनस्थानानि यानि स्वकार्ये योजयन् पापेनसंबध्यते । एवंचास्मात्सूनावचनात्तासांनिष्कृत्यर्थमिति च निष्कृतिवचनात् सूनादोषैर्नलिप्यतइतितद्दोषाभिधानात् । अधर्महेतुत्वमासांतन्निष्कृत्यर्थं महायज्ञानामित्यवसीयते । शास्त्रैकगोचरत्वाद्धर्माधर्मयोर्नचैवंसति महायज्ञानामनित्यतापत्तिः । देवतातिथिभृत्यानामृषयःपितरोदेवताइत्येवमादिरेषांनित्यत्वप्रतिपादनाय सन्ध्योपासनावदुभयार्थत्वमेषाम् ॥ ६८ ॥ **तासामि**ति । तासांचुल्यादीनांसूनानांयथाक्रमंनिष्कृत्यर्थं तदुत्पन्नपापनिर्हरणार्थंप्रत्यहंपञ्चमहायज्ञागृहस्थानांमन्वादिभिःस्मृताःग्रहणं तेषामपिदेवतात्वात्तथा ऋषीणामपि देवतानामितिग्रहणं तेषामपि कर्तव्यतया स्मृतौ स्मृताः ॥६९॥ तेच **अध्यापन**मिति । जपोहुतइति वक्ष्यमाणोध्यापनशब्देनाध्ययनमपिगृह्यते सब्रह्मयज्ञः । पितृतर्पणंपितृयज्ञः । अग्नौहोमोदेवयज्ञः । भूतबलिर्भूतयज्ञः । अतिथिपूजनंमनुष्ययज्ञः । एतेवक्ष्यमाणाःकर्तव्यताविशेषाइहस्वरूपमात्रेण निर्दिष्टाः ॥ ७० ॥ **पञ्चे**ति । एतान्पञ्चमहायज्ञान् योयथाशक्तिनजहाति ससर्वकालमपि गृहे वसन् चुल्यादिसूनाजनितैःपापैर्नसंबध्यते ॥ ७१ ॥ **देवतातिथिभृत्यानामि**ति । देवताशब्देनभूतानामपिग्रहणं तेषामपिदेवतात्वात् । तथा ऋषीणामपिदेवतानामितिग्रहणं तेषामपि देवतात्वस्मरणात् भृत्याः ॥ वृद्धौचमातापितरौसाध्वीभार्यासुतःशिशुः ॥ अप्यकार्यशतंकृत्वा भर्तव्यामनुरब्रवीत् इत्युक्त्वाएषांदेवतादीनांपञ्चानांयोनददाति समाणान्धारयन्नपिनजीवति जीवितकार्याभावात् ॥ ७२ ॥ **एवंचाकरणनिन्दयैषां** नित्यतामाह **अहुतंचहुतंचैवे**ति । उत्तरश्लोके एषांव्याख्यार्थोभविष्यति । एतानेव पञ्चमहायज्ञानेभिर्नामान्तरंमुनय आचक्षते । नाममात्रभेदोनवस्तुभेदइत्येतत्प्रतिपादयितुं संज्ञान्तरप्रदर्शनमेतत् ॥७३॥ **जपइति** । अहुतशब्देन जपोब्रह्म-

---

(१) सद्यो=सत्यो ( गो० २, ५ ).

ज्ञाख्यःस्मृतः। हुतश्च होमोदेवयज्ञः। प्रहुतश्च भौतिकोबलिःभूतयज्ञः। ब्राह्म्यंहुतंद्विजाग्र्यस्य ब्राह्मणस्यार्चा अतिथियज्ञः। प्राशितंचपितृतर्पणंपितृयज्ञः। यदि कथंचित्सकलमहायज्ञामहानुष्ठानासंपत्तिस्तदा ॥ ७४॥ **स्वाध्यायेनित्ययुक्तःस्याद्दैवेपित्र्येचकर्मणि। उभयत्रापियुक्तोहीति** । ब्रह्मयज्ञदेवयज्ञानुष्ठानेनित्यंयत्नवान्स्यात् तस्मादेवंयज्ञानुष्ठानपरइदंस्थावरजङ्गमरूपंजगद्धारयति ॥ ७५ ॥ तथाच अग्नौ **प्रास्ताहुतिरिति**। अग्नावाहुतिःसम्यक्कृयथाविधि प्रक्षिप्ता हुता रसाहरणरूपत्वादादित्यस्यादित्यंप्राप्नोति सआहुतिरसः कालेन परिपक्वःआदित्याद्वृष्टिरूपेण जायते। ततोन्नं तदुपभोगेनच प्रजाजायन्ते ॥ ७६ ॥ अपिच **यथवायुंसमाश्रित्यसर्वेजीवन्तिजन्तवः ॥ तथागृहस्थमाश्रित्य वर्तन्तइतराश्रमाः** ॥ यथाप्राणवाय्ववलंबनेन सर्वप्राणिनोजीवन्त्येवंगृहस्थाश्रममाश्रित्यावलंब्याश्रमान्तराणि ध्रियन्ते ॥ ७७॥ एवंच **यस्मादिति**। यस्माद्गृहस्थव्यतिरिक्तास्त्रयोप्याश्रमिणोवेदार्थोपदेशान्नदानाभ्यां गृहस्थैरेवोपक्रियते तस्मात्श्रेष्ठाश्रमोगृहस्थः। गृहा पत्नी मेधोयज्ञः गृहाधीनोमेधोयस्य गृहमेधी। गृहायांतिष्ठन्तीतिगृहस्थाः। गृहाअस्यास्तीतिगृही ॥ ७८॥ यतएवमतः **ससंधार्योग्रहस्थेनेति**। सगृहस्थाश्रमोस्वर्गसंबन्धं अनंतमिहलोके सुरतसंभोगस्वाद्वन्नादिसुखमनन्तमिच्छता प्रयत्नेनानुष्ठेयोऽसंयतेन्द्रियैर्धारयितुं न शक्यइति गृहस्थाश्रमफलकथनम् नचानित्यतापत्तिः ॥ ७९ ॥ यतआह **ऋषयइति**। ऋषिप्रभृतयोगृहस्थेभ्यः सकाशाद्यतोऽर्थयन्ते यतःशास्त्रज्ञेन एभ्यःकर्तव्यम् ॥ ८० ॥ किंतदित्याह **स्वाध्यायेनेति**। नानाप्रकारत्वादर्चनस्य स्वाध्यायादेरर्चनार्थत्वमविरुद्धं पूर्वोक्तमहायज्ञार्थैः स्वाध्यायादिभिः ऋषिदेवपित्रतिथिभूतानि यथाशास्त्रमर्चयेत् ॥ ८१ ॥ तेषु पितृयज्ञनिरूपणार्थंतावदाह **दद्यादहरहरिति**। पितृभ्यः प्रीतिमुत्पादयन् अन्नोदकक्षीरमूलफलैर्यथासंभवंप्रत्यहंश्राद्धंकुर्यात् ॥ ८२ ॥ **एकमिति**। पंचयज्ञान्तर्गते पितृप्रयोजनएकमपि शक्त्यासति संभवे बहूनपि विप्रान्भोजयेत्। श्राद्धशब्दनोदनाद्वैश्वदेवब्राह्मणभोजने प्राप्तआह। नचैवेति विश्वान्देवानुद्दिश्यान्यंब्राह्मणंनकिंचितभोजयेत् ॥ ८३ ॥ **वैश्वदेवस्येति**। वैश्वदेवार्थस्यान्नस्य सतोवैवाहिकेग्नौ कालान्तराहिते वा परिसमूहनादि गृह्योक्तेतिकर्तव्यतापूर्वकमाभ्योवक्ष्यमाणाभ्योदेवताभ्यः प्रत्यहंब्राह्मणोहोमंकुर्यात्। ब्राह्मणग्रहणंद्विजप्रदर्शनार्थं त्रयाणांप्रकृतत्वात् ॥ ८४ ॥ **अग्नेरिति**। **कुहैचैवेति**। स्वाहाकारप्रदानाहोमाइति स्मरणादग्नये स्वाहा सोमाय स्वाहाइत्येवमादौ कृत्वा ततोग्नीषोमाभ्यांस्वाहेत्यग्नीषोमयोः समस्तयोर्होमंकुर्यात्। तदनुविश्वेभ्योदेवेभ्योहुत्वाधन्वंतरये कुह्वायनुमत्यै प्रजापतये द्यावापृथिवीभ्यां अन्तेग्नयेस्विष्टकृतइत्येवं गृह्येग्निविशेषणत्वात् स्विष्टकृतएते स्वाहाकारान्तहोमाः कार्याः ॥ ८५ ॥ ८६ ॥ **एवमिति**। एवमुक्तप्रक्रियया सम्यक्प्रतिदैवतंहविर्हुत्वा प्राच्याद्यासु सर्वासु दिक्षु प्राच्यामिन्द्रायनमइन्द्रपुरुषेभ्योदक्षिणस्यांयमाय यमपुरुषेभ्यः पश्चिमायांवरुणायवरुणपुरुषेभ्यः उत्तरस्यसोमायांसोमपुरुषेभ्यइत्येवंप्रदक्षिणावर्तं इन्द्रादिभ्यः सानुचरेभ्योबलिंदद्यात्। गृह्यएवदर्शनादिहान्तकादिशब्दाभिधानंछन्दोभङ्गभयात् ॥ ८७ ॥ **मरुद्भ्यइतितद्वारिहेरदिति**। मरुद्भ्यइत्येवंद्वारप्रदेशेऽद्भ्यइत्येतदपांमध्ये वनस्पतिभ्यइत्येवंमुशलोलूखले द्वंद्वैकवद्भावाद्विकल्पेनान्यत्र बलिंदद्यात् ॥८८ ॥ **उच्छीर्षइति**। वास्तुपुरुषस्य शिरःप्रदेशे उत्तरपूर्वस्यांदिशि श्रियै तस्यैव च पादप्रदेशे दक्षिणपश्चिमायांभद्रकाल्यै ब्रह्मणेवास्तोष्पतये चेतिगृहमध्ये द्वन्द्वनिर्देशेपि आहनिर्देशाभावाद्देवताद्वयं ॥ ८९ ॥ **विश्वेभ्यइति**। विश्वेभ्योवैश्वदेवेभ्य

---

( १ ) शक्त्या=शद्रात् ( गो० २, ५ )

इतिचशब्दादेकेयमाहुतिः । विश्वेभ्योदेवेभ्यः इति नाम्नाकाशेप्रक्षिपेत । दिवाचरेभ्योभूतेभ्यइतिदिवानक्तंचरेभ्योभूतेभ्यइति नक्तमितिगृह्यदर्शनात् एतद्वाधारान्तरस्यावचनात् आकाशस्यचप्रस्तुतत्वात् आकाशएव ॥ ९० ॥ **पृष्ठेवास्तुनिकुर्वीतेति** । वेश्मनउपरि वेश्मनः पृष्ठे वास्तुपृष्ठदेशे वा तत्र सर्वान्नभूतयेनमइत्येवंबलिंकुर्यात् । बल्यर्थं धृतान्नशेषंसर्वंदक्षिणस्यांदिशि स्वधापितृभ्यइतिप्राचीनावीतीत्येवंगृह्यदर्शनात् पितृभ्योहरेत् ॥ ९१ ॥ **शुनांचेति** । तदन्वन्यदन्नमुध्दृत्य श्वपतितश्वपाककुष्ठ्यादिकाककृमीणांशनकैरजोवगुण्ठनपरिहारेण भुवि निक्षिपेत् ॥ ९२ ॥ **एवमिति** । एवमुक्तनीत्याभिहित सर्वभूतानि नित्यमन्नादिना यःपूजयति सतेजःशरीरोभूत्वा स्पष्टेन मार्गेण येनाशुप्राप्येतेशरीरपातसमनन्तरमेव तेन ब्रह्मलोकंगच्छति । इति पञ्चयज्ञफलकथनं नचानित्यतापत्तिरित्युक्तम् ॥ ९३ ॥

**[ सायंतनस्यसिद्धस्यपत्न्यमन्त्रंबलिंहरेत् ॥ वैश्वदेवंहिनामैतत्सायं ॥ १ ॥ ]**

**कृत्वेति** । एवमुक्तस्वरूपेणैतत्बलिकर्म कृत्वा सर्वगृहभोक्तृभ्यःपूर्वमतिथिंपूजयेत् । भिक्षणशीलाय ब्रह्मचारिणे समकालमेव स्वस्तिवाच्यभिक्षादानमप्पूर्वं इति गौतमोक्तविधानेनभिक्षांदद्यात् ॥ ९४ ॥ **यत्पुण्यफलमिति** । अल्पगुर्हैमशृङ्गीत्यादियाज्ञवल्क्योक्तविधिना गांदत्वा यत्पुण्यफलं गोदोत्प्रभस्यविष्टपमिति प्राप्नोतितदेव द्विजगृहस्थोभिक्षांदत्वा प्राप्नोति ॥ ९५ ॥ **भिक्षामिति** । फलपुष्पादिना सत्कृत्य पारमार्थिकवेदार्थज्ञाय ब्राह्मणाय स्वस्तिवाच्येत्यादि विधिपूर्वकं प्रतिपादयेदिति ब्रह्मचारिभिक्षादानाद्विध्यन्तरमिदम् । तथाच वसिष्ठः श्रोत्रियायाग्रंदत्वा ब्रह्मचारिणेत्याह ॥ ९६ ॥ अपात्रेचैतदातिथ्यादिनकार्यंयस्मात् **नश्यन्तीति** । यानि पितृदैवोद्देशेनान्नानि मोहाद्दानशास्त्रानभिज्ञतया दातृभिरध्ययनविधियज्ञानुष्ठानतेजःशून्यत्वाद्भस्मरूपेषु विप्रेषु दत्तानि तानि तेषांदानशास्त्रानभिज्ञानांमनुष्याणां निष्फलीभवन्ति ॥ ९७ ॥ **विद्यातपःसमृद्धेष्विति** । ज्ञानानुष्ठानतेजःसंपन्नेषु विप्रमुखेषु अग्नितुल्येषु हव्यकव्यादि यत्प्रक्षिप्तंतदिह दुस्तराच्छत्रुव्याध्यादभिभवादमुत्रच महतःपापात्त्रायते ॥ ९८ ॥

**[ प्रतिग्रहेणशुद्धेन शस्तेन क्रयविक्रयात् । यथा क्रमं द्विजातीनां धनं न्यायादुपागतम् ॥१॥ ]**

**संप्राप्तायेति** । स्वयमुपस्थायातिथयआसनाचमनाद्युदकान्नंच व्यञ्जनविशेषैःयथासंभवं सत्कृत्यासनावसथावित्यादिवक्ष्यमाणविधिपूर्वकंदद्यात् ॥ ९९ ॥ **शिलानप्युञ्छतोनित्यमिति** । अतिदौर्गत्यावृत्तिसंयमातिशयार्थितया शिलानक्षेत्रफलशेषान् अप्युञ्छिन्वतःसभ्यावसथ्याभ्यांसहत्रेतया पञ्चस्वप्यग्निषु होमंवा कुर्वाणस्य सर्ववृत्तिसंकोचपश्चाग्निहोमार्जितंपुण्यं अनर्चितोतिथिर्वसन् स्वीकरोत्यदानदोषकथनेन नित्यतामाह । सभ्योनामाग्निर्महासाधनसीताद्यपनुत्त्यर्थं यस्तत्र तत्र विह्रियते ॥१००॥ अन्नासंभवेपुनः **तृणानीति** । तृणानि विश्रमभूम्याचमनाद्युदकप्रियसत्यवचनानि साधुगृहेष्वतिथ्यर्थंनकदाचिदप्युच्छिद्यन्ते अतोअन्नाभावएतान्यवश्यंदेयानि ॥१०१॥ अप्रसिद्धत्वादतिथिलक्षणमाह **एकरात्रमिति** । ब्राह्मणएकांरात्रिंपरगृहेवसन् अतिथिःयतिःस्मृतः यदस्याहनित्यावस्थाने न विद्यते द्वितीयातिथिरस्येत्येवमतिथिरुच्यते ॥ १०२ ॥ **नैकग्रामीणमिति** । समानग्रामनिवासिनं यंचसंगत्यालोकयात्रयाचरितं विचित्रपरिहासकथाजीवनं यस्य सभार्याग्नयस्तस्मिन्नेव ग्रामे संप्राप्तस्तंवैश्वदेवकालेपि संप्राप्तमतिथिंनविन्द्यात् आतिथेयोद्देशतएवग्रामान्तराणिगत्वा ॥ १०३ ॥ **उपासतइति** । येगृहस्थादुर्मेधसः औदरिकतयापरान्नंसेवन्ते तेन परान्नभोजनेन ते जन्मान्तरेऽन्नाद्यदायिनांगृहे पशुतांव्रजन्ति इतिफलप्रतिपादनपरमेतदतःपरपाकोपसेवनंनकार्यम्

॥ १०४ ॥ **अप्रणोद्यइति** । यस्मादयमादित्येनास्तंगच्छता प्रापितोतिथिस्तदानींत्वगृहगमनाशक्तेःसगृहमेधिनोगृहा-नुष्ठयपञ्चयज्ञवता गृहस्थेन न प्रत्याख्येयः । सचवैश्वदेवकाले प्राप्तस्तदुत्तरकालेवा नास्यगृहस्यस्यान्नमनश्नन्गृहे-वसेत् । अवश्यमस्याशनंदेयं अयंच प्रतिषिद्धातिथिप्रतिप्रसवार्थमारंभोन्यथावैश्वदेवहीनामैतत् सायंप्रातर्विधीयतइ-ति **वक्ष्यमाणेनैव** सायमतिथिदानसिद्धावनारंभःस्यात् ॥ १०५ ॥ **नेति** । यदतिथये रोचते तत्तस्माअदत्वात्म-ना **नाश्नीयात्** । अतिथिभोजनंच धनख्यात्यायुःस्वर्गनिमित्तमित्यातिथेयफलकथनंनत्वानित्यतापत्तिः । सर्वंसुकृत-मादत्तइत्याद्युक्तत्वात् ॥ १०६ ॥ **आसनावसथाविति** । युगपदनेकातिथ्यस्थानेसति ह्यासनस्थानविश्रमस्थानश्र-द्धादिशयनानुगमनपरिचरणमितरेतरापेक्षायोत्कृष्टावकृष्टमध्यमेषु उत्कृष्टावकृष्टमध्यमंकुर्यात् । अन्नंपुनस्तुल्यमेव तत्र-विशेषाश्रवणात् ॥ १०७ ॥ **वैश्वदेवइति** । कृतेऽतिथिभोजनपर्यन्ते वैश्वदेवे यद्यपरोतिथिराव्रजेत् तस्मै तदाचा-न्नंयथाशक्तिपुनःपक्त्वाप्रदद्यात् । बलिहरणंच ततोन्नान्नकुर्यात् । बलिहरणनिषेधादात्मसंस्कारार्थता वैश्वदेवस्या-भिप्रेतेत्यवसीयते । अन्नसंस्कारपक्षेकथनमसंस्कृतान्नभोजनमनुजानीयात् ॥ १०८ ॥ प्रसङ्गाद्ब्राह्मधर्ममाह **नभो-जनार्थइति** । भोजनलाभार्थंविप्रःस्वे कुलगोत्रे नकथयेत । यस्माद्भोजनार्थंते कथयन् उद्गीर्णाशीति विद्वद्भिःकथ्य-ते ॥ १०९ ॥ **ब्राह्मणस्यत्वनतिथिरिति** । ब्राह्मणगृहे गुरुमित्रबन्धुक्षत्रियवैश्यशूद्रानातिथयोभवन्ति । गुरोःप्रभु-त्वात् मित्रबन्धूनामात्मसमत्वात् क्षत्रियादेश्च हीनजातित्वात् क्षत्रियस्योत्कृष्टः ब्राह्मणः स्यात् । ब्राह्मणक्षत्रियावकृष्टजा-तीयौ स्यातामेव वैश्यस्यापि ॥ ११० ॥ **यदीति** । क्षीणपाथेयोग्रामान्तरवासित्वादतिथिधर्मेण यदिक्षत्रियोविप्रगृहे आगच्छेत् तदा गृहावस्थितविप्रेषु कृतभोजनेषु तमपि भोजयेत् ॥ १११ ॥ **वैश्यशूद्राविति** । वैश्यशूद्रावपाथेयाव-तिथिरूपौ गृहेप्राप्तौ तदोकारुण्यात्संभोजनीयौ ॥ ११२ ॥ **इतरानिति** । उक्तक्षत्रियादिव्यतिरिक्तान् सखिबन्धुसहाध्या-यिप्रभृतीन् प्रीत्याहेतुभूतया गृहमागतानन्नंयथाशक्ति संस्कृत्य भार्याभोजनकाले भोजयेत् । आत्मनोपि कालोवशिष्टं-तुदंपतीतिवक्ष्यमाणत्वात् । गुरोस्तुकालान्वभिधानप्रभुत्वेन स्वायत्तकालत्वात् ॥ ११३ ॥ **सुवासिनीरिति** । जीवच्छ्वशुर-पितृकाः स्त्रियः कुमार्यातुरगर्भिणीश्च अतिथ्यनुगतानेवाविलंबमानोभोजयेत् । अग्रतः एव पाठे ऽतिथिभ्यःपूर्वमेव ॥११४॥ **अदत्वेति** । एतेभ्योभृत्यपर्यन्तेभ्योतिथ्यादिभ्योदत्वा योव्यतिक्रमादोषऽनभिज्ञःपूर्वंभुङ्क्ते सभुञ्जानएतत्फलभूतंमरणा-समनन्तरमात्ममात्मनः श्वगृध्रखादनंनजानाति ॥ ११५ ॥ **भुक्तवत्स्विति** । आतिथ्यादिज्ञातिसंबन्धेषु दासेषु कृतभोजनेषु ततोन्नावशिष्टंजायापती पश्चादश्नीयाताम् ॥ ११६ ॥ **देवानिति** । गृहेभवा गृह्याइत्यन्तेन भूतयज्ञउक्तइति वक्ष्यमाणप्रत्यवा-यकथनार्थोयमनुवादः ॥ ११७ ॥ **अघमिति** । यआत्मार्थमेवपचति नदेवादिभ्योददाति सपापहेतुत्वात्पापमेवकेवलंभुङ्क्ते । नान्नलेशमपि यस्मात्यदेतत्पाकयज्ञशिष्टाशनंसाधूनां अन्नमुपदिश्यते ॥ ११८ ॥ अतिथिपूजाप्रसङ्गेनाथराजादीनांपूजाविशेषउच्यते **राजर्त्विकस्नातकगुरुप्रियश्वशुरमातुलानिति** । जनपदाभिषिक्तंक्षत्रियंगृहागतं याजकंऋत्विजं यःक-श्चिद्गृहस्थोद्विजातिर्विद्याव्रतस्नातकं शिष्योगुरुं श्वशुरोजामातरं जामाताश्वशुरं भागिनेयोमातुलं मधुपर्काख्येन गृह्यो-क्तरूपेण **कर्मणा पूजयेत्** । परिमितात्संवत्सरात् संवत्सरेऽतीते पुनर्गृहागतानेतान्पूजयेत् । ये तु स्नातकमाचार्यः पूजयेत्तंप्रतीतमित्युक्तत्वादित्याहुस्तेषांपरिसवत्रानितिस्नातकविशेषणंकथंस्यात ॥ ११९ ॥ राजस्नातकयोःसंकोचायेदमाह । **राजेति** । राजस्नातकौ यज्ञकर्मण्येव संप्राप्तौ मधुपर्केण पूजनीयौ । नत्वयज्ञेसंवत्सरादूर्ध्वं अपीति शास्त्रमर्यादा ।

(१) तदाकारुण्यात्संभोजनीयौ=तदोभावपि कारुण्यंनिर्वाहयन् दासभोजनकाले भोजयेत् ( गौ० २, ५ )

संवत्सरात्पुनः अर्वाक् यत्नेपि न पूज्यौ। पूर्ववाक्योपरिसंवत्सरादित्युपादाने अत्र च नतुयज्ञइत्युपादानात् राजस्नातकपूजासंकोचार्थत्वं अस्य प्रतीयते ॥ १२० ॥ सायमिति। दिनान्तेऽन्नस्यसिद्धस्य इन्द्राय नमइत्येवमादिमन्त्रवर्जमनसांद्देशेन पत्नी बलिहरणंभूतयज्ञाख्यंकुर्यात्। यस्मादेवंनामयज्ञाद्यात्मभोजनपर्यन्तं एतत्सायंप्रातर्गृहस्थस्योपदिश्यते ॥ १२१ ॥ पितृयज्ञमिति। आहिताग्निरमावास्यायांश्रौतंपिण्डयज्ञाख्यं कर्म कृत्वा औपसदाग्निरप्येवमनाहिताग्निर्नित्ये श्रपयित्वेतिसूत्रवचनात् सूत्रोक्तंतदेव कृत्वा मासिभवंपिण्डपितृयज्ञाङ्गभूतानांपिण्डानामनुपश्चादाह्रियते इतिपिण्डान्वाहार्यकंश्राद्धंकुर्यात्। विप्रग्रहणंद्विजप्रदर्शनार्थंत्रयाणांप्रकृतत्वात् ॥ १२२ ॥ अधुना नामवचनेन पिण्डपितृयज्ञानन्तरकरणमस्य समर्थयते पिण्डानामिति। यतएव तन्मासिकंश्राद्धंपिण्डानामनुपश्चादाह्रियते ततःपिण्डान्वाहार्यकमेतद्विद्वांसोमन्यन्ते। एवंच युक्तं यत्पिण्डपितृयज्ञानन्तरंक्रियतइति। तन्मांसेन विशेषेण विहितेन खड्गमांसादिना प्रयत्नतःकार्यं तदभावे पुनरन्यैर्हविष्यैः ॥ १२३ ॥ तत्रेति। तस्मिन् श्राद्धे भोजनीयायेच वर्जनीयाः यथासंख्याकाश्चयैश्चान्नैस्तत्कर्तव्यंतत्सर्वंप्रवक्ष्यामि ॥ १२४ ॥ यद्यपदेशतस्तस्ययेभोजनीयाःस्युरितिश्रुतंतथाप्यल्पवक्तव्यत्वात् संख्यांतावदाह द्वाविति। द्वौपित्र्याङ्गभूते दैवे पितृपितामहप्रपितामहोद्देशेन त्रीन् एकैकंवा दैवपित्र्ययोर्ब्राह्मणंभोजयेत्। उक्तातिरिक्तभोजनसमर्थोऽप्यधिकभोजने नैवप्रवर्तेत। यत्तु नत्वेवैकंसर्वेषांपिण्डे व्याख्यातमिति गृह्यदर्शनान्निमन्त्रयेत त्र्यवरानिति चेहाभिधानादेकैकमुभयत्रवेत्यस्य विस्तरप्रतिषेधार्थवादत्वमाह तदसत्। द्वौ दैवे पितृकृत्ये त्रीनित्येतद्विकल्पेनास्य श्रवणात्। याज्ञवल्क्येचैककमेवचेतिविधिदर्शनाद्वसिष्ठेच ॥ यद्येकंभोजयेच्छ्राद्धे दैवंतत्रकथंभवेत् ॥ अन्नंपात्रेसमुद्धृत्य सर्वस्यप्रकृतस्यच ॥ देवतायतनेकृत्वाततःश्राद्धंप्रवर्तयेत् इत्येकब्राह्मणभोजनात् यत्पुनर्नत्वेवैकमित्यादि गृह्यवचनंतद्द्रव्यब्राह्मणादिसम्यक्संपद्विषयं नत्वत्यन्तप्रतिषेधार्थम्। तथाचैतदनन्तरमेवगृह्यकृत काममनाद्यइत्याहादनीयाद्यभावात्। कामनेकमपि सर्वेषांभोजयेदित्येवंचनिमन्त्रयेतत्र्यवरानिति। एतदपिद्रव्यब्राह्मणादिसम्यग्विषयं नत्वेवैकविध्यत्यन्ताभावज्ञापकं विस्तरइतिवृत्तवशात् प्रथमे वा चशब्दइति स्मरणात् ॥ १२५ ॥ सत्क्रियामिति। ब्राह्मणपूजांचोक्षादिदेशमपराह्णकालंशौचंगुणवद्ब्राह्मणलाभविस्तारोनाशयति तस्मादुक्तातिरिक्तब्राह्मणभोजनंनकुर्यात्। हेतुतोविस्तरनिषेधात् तत्क्रियातिसंभवेऽधिकब्राह्मणभोजनमप्यस्ति। तथाच गौतमोक्तेऽवरानन्नचब्राह्मणान्भोजयेत्। अयुजोवायथोत्साहमिति ॥ १२६ ॥ प्रथितेति। योयंपित्र्योनामविधिःपित्र्यंकर्म एषा प्रेतकृत्या प्रेतोपकारार्था क्रिया क्षये चन्द्रक्षये गृहे वा नानाश्रमान्तरैः सर्वगृहिणांख्याता तस्मिन्कृत्ये पित्र्ये कर्मणि युक्तस्य तन्निष्ठस्य लौकिकी स्मार्ती प्रेतक्रिया प्रेतोपक्रियते गुणवत्पुत्रपौत्रप्रबन्धोत्पत्त्या तस्मादेतद्यत्नतः कार्यम् ॥ १२७ ॥ श्रोत्रियायेति। दैवपित्र्यादीन्यन्नानि छन्दोमात्राध्यायिने देयानि छन्दोमात्राध्यायिनि श्रोत्रियशब्दप्रयोगान्नात्यन्तापायेन नियमः संभवे पुनः समस्तशाखाध्यायिदानम्। यत्नेन भोजच्छ्राद्धेबह्वृचमित्यादिनामिति सति पुनः श्रोत्रियत्वेसति श्रुतवृत्ताभिजनादि योगे च पूज्यतमाय विप्राय देयानि यतस्तस्मै दत्वा पितॄन्प्रतिप्रकर्षेणातिशयेनोपकारकंभवति ॥ १२८ ॥ यस्मात् एकैकमिति। दैवपित्र्ययोरेकैकमपि वेदार्थविदंभोजयेत्। परिपूर्णफलंपितृतृप्त्याख्यंप्राप्नोति नत्वविदुषोबहूनपिभोजयन्पुष्कलंफलमाप्नोतीत्यभिधानात्ब्राह्मणस्य भोजनमत्र प्रधानंपिण्डदानादिरङ्गमित्यवसीयते ॥ १२९ ॥ दूरादिति। येमातृतोदशपुरुषं पितृतोदशपुरुषंइत्यादिसूत्रकारोक्तविकल्पपरीक्षान्यायेन समस्तशाखाध्यायिनंब्राह्मणंपरीक्षेत। यस्मात्तस्मात्तथाविधोब्राह्मणोहव्यकव्यानांतीर्थमिव तीर्थेनोदकावतरणमार्गेणोदकानिमोग्रच्छन्त्येवंतथाविधेन ब्राह्मणेन हव्यकव्यानि देवान् पितॄन् गच्छन्ति। तथाविधोब्राह्मणोऽतिथितुल्यःस्मृतोमहाफलत्वात् ॥ १३० ॥ तद्धर्मामिति। यत्र दैवपित्र्यादावन्

ग्विदांब्राह्मणानांदशलक्षाणि भुञ्जते तत्रैकोवेदविद्भुक्त्वा प्रीतः तुष्टोधर्मतोधर्मोत्पादनेन तान्सर्वानर्हति स्वीकर्तुंयोग्योभवति तद्भोजनजन्यधर्मानुत्पादयतीत्यर्थः । इतिविद्वद्ब्राह्मणभोजनस्तुतिः ॥ १३१ ॥ **ज्ञानोत्कृष्टायेति** । विद्योत्कृष्टेभ्योहव्यकव्यानि देयानि नान्येभ्योयस्माद्यथा रुधिरोपलिप्तौ हस्तौ रुधिरेणैव अपगतनल्लेपौ कर्तुं [न] पार्यैते अपि तूदकेनैव शक्येते एवंचाज्ञदानमुखेन नात्मोत्तारयितुंशक्यते अपितुविद्वद्दानद्वारेणैवेत्यविद्वन्निन्दया विद्वद्दानस्तुतिः॥१३२॥**यावतइति** । यत्सङ्ख्याकान् ग्रासान हव्यकव्येष्ववेदविद्ग्रसते तत्सङ्ख्याकानेव प्रस्तुतश्राद्धकर्ता ज्वलितान् स्थूलानशूलर्ष्ट्याख्यायुधानयःपिण्डानग्रसते इति अविद्वद्दानफलकथनम् । तथाच व्यासोदातुरेवफलमाह ॥ ग्रसते यावतः पिण्डान् तस्य वै हविषोनृचः ॥ ग्रसते तावतः स्थूलान् गत्वा वैवस्वतः क्षयम् ॥ १३३ ॥ **ज्ञाननिष्ठाइति** । केचिदात्मज्ञानपराविप्राभवन्ति । अपरे कृच्छ्रादितपःप्रधानाः । अन्ये तु तपोऽध्ययननिरताः ॥ अपरेयागादितत्पराः ॥ १३४ ॥ इतिकिमाह **ज्ञाननिष्ठेष्विति** । ज्ञानप्रधानेभ्योयत्नेन पित्रार्थानि देयानि दैवार्थानि पुनः शास्त्रमर्यादानतिक्रमेण चतुर्भ्योज्ञाननिष्ठादिभ्योपीति ॥ १३५ ॥ **अश्रोत्रियइति** । यःश्रोत्रियःपुत्रःआत्मनःश्रोत्रियोयः श्रोत्रियपुत्रःआत्मनाचाश्रोत्रियः ॥ १३६ ॥ योःकःश्रेयान् इत्युपन्यस्याह **ज्यायांसमिति** । अनयोःपूर्वनिर्दिष्टयोर्मध्यात्श्रोत्रियपुत्रं आत्मनाश्रोत्रियमपि प्रशस्यतरंजानीयात् पश्चात् श्रोत्रियपुत्रआत्मनाच श्रोत्रियःसतदधीतवेदपूजार्थंपूजामर्हति वेदस्तद्द्वारेण पूज्यते । नत्वसौपूजार्हइति पित्रादिविद्यापरीक्षार्थमेतच्चाश्रोत्रियदानार्थं श्रोत्रियायैवदेयानीतिनियमादेवंच ॥ दूरादेवपरीक्षेतेत्येतत् विद्याव्यतिरिक्तजात्यातिशयपरीक्षार्थत्वेनावतिष्ठते ॥ १३७ ॥ **नश्राद्धेभोजयेन्मित्रंधनैःकार्योस्यसंग्रहः । नारिंनमित्रंनाभिभर्तुं विज्ञातंभोजयेद्द्विजम्** ॥ मित्रंश्राद्धे न भोजयेत् किंतर्हि धनान्तैररस्यैमव्यादिस्नेहःकार्योयं पुनःशत्रुंनमित्रंनाभिभर्तुंविज्ञातंब्राह्मणंश्राद्धे भोजयेत् ॥ १३८ ॥ **यस्येति** । यस्य मित्रोपकारपराणि हव्यकव्यानि तस्य पारलौकिकंफलंन भवतीति । फलाभावकथनपरमेतत् । नकेवलंपूर्वमित्रस्य श्राद्धादिना देयंयावत् ॥ १३९ ॥ **यइति** । श्राद्धदानेनानेन सह मैत्री मे भविष्यति इति एवं योमनुष्यःशास्त्रानभिज्ञतया श्राद्धेन मित्रभावंकुरुते समित्रहेतुत्वाच्छ्राद्धंमित्रमस्येति श्राद्धमित्रोद्विजापसदःकर्मान्तरार्जितेनापि स्वर्लोके न संबध्यतइति ॥ १४० ॥ **संभोजनीति** । सा दक्षिणा तद्दानंसह भुज्यते ययेति संभोजनीया गोष्ठी । पिशाचधर्मत्वात्पैशाची मन्वादिभिरुक्ता सा च मित्रार्थत्वादिहलोके एवास्ते अन्धागौर्यथैकस्मिनगृहे न परलोके प्रत्युपकाराय भवति ॥ १४१ ॥ **यथेति** । त्वार्जना **यथा ऊषरे** भूमदेशे धान्यान्युप्त्वा कर्षकःफलंन प्राप्नोति एवमश्रोत्रियाय श्राद्धादि दत्वा दाता न फलंप्राप्नोति अश्रोत्रियदाने वैफल्यकथनार्थमेतत् ॥ १४२ ॥ **दातॄनिति । विदुषे दक्षिणा दत्ता भवति प्रेत्यचेहच** ॥ वेदार्थविदे च यथाशास्त्र श्राद्धादिदत्तंपितृतृप्त्याख्यामुत्रिकफलेन कीर्त्यनुषङ्गैहिकफलेन च दातॄन्सफलान्कुरुते । प्रतिगृहीतॄंश्च तत्प्रतिग्रहलब्धधनानुष्ठितयागादिफलेनामुत्रसफलान्कुरुते अधर्मार्जितद्रव्यानुष्ठितयागादिनैष्फल्यात् इहलोकेचधर्मार्जितधनकृतकृष्यादिफलविषयान्सफलान्कुरुते इतिविद्वद्दानस्यदातृप्रतिगृहीतृदृष्टादृष्टफलकथनार्थमेतत् ॥ १४३ ॥ **काममिति** । वरंगुणवद्ब्राह्मणान्तराभावेसगुणं मित्रंश्राद्धेभोजयेत् । न योग्यमपि शत्रुंयतोऽरिणाश्राद्धादिभुक्तंपरलोकेनिष्फलंभवतीति । अन्याभावे गुणवन्मित्रप्रतिप्रसवार्थमेतत् । छन्दोमात्राध्यायिनिश्रोत्रियशब्दप्रयोगात्तदाश्रयिणंनैयमिकमुक्तम् ॥ १४४ ॥ अधुनातु सतिसंभवे फलविशेषार्थंसमस्तशाखाध्यायिनि दानमाह **यत्नेनेति** । समस्तशाखाध्यायिनंबह्वृचंतथाविधमेवाध्वर्युं छन्दोगं चैवंविधमेवाध्वर्युंयत्नेन श्राद्धेभोजयेत् । वृत्तवशान्नानाप्रकारैःशब्दैः सकलशाखाध्यायिनएवैते युक्ताः । येतु छन्दोमात्राध्यायिप्रतिषेधार्थं श्रोत्रियायैव देयानीत्येतद्विशेषणार्थत्वमस्याहुस्तेषा-

मनेनैवसिद्धे श्रोत्रियायैवदेयानीत्येतदनर्थकंस्यात् ॥ १४५ ॥ एषामिति । एषांबह्वृचादीनांमध्यादन्यतमोयस्य त्व र्चितमनाःश्राद्धंभुञ्जीत तस्य पित्रादि सप्तपुरुषव्यापिन्यनवच्छिन्ना पितॄणांतृप्तिःस्यादिति समस्तशाखाध्यायिभोजन फलकथनम् । अतएवविज्ञायते यत्र क्व च नावस्थिताःपितरःपित्राद्युपहृतकव्यैःसुखमासते । इतश्च पितृतृप्तिफलमेतत् श्राद्धकर्मणि च अकृताभ्यागमकृतविप्रणाशावत्रचोदनीयौ शास्त्रैकगोचरत्वे वैश्वानरवत्तथैवागमात् ॥ १४६ ॥ एषइ ति । हव्यकव्यप्रदानेन एषमुख्योविधिः यदसंबन्धिभ्यःश्रोत्रियादिभ्योदीयतइति । अयंवक्ष्यमाणः पुनर्मुख्याभावे विधि र्बोद्धव्योमुख्याभावेच सर्वदा साधुभिरनुष्ठितः ॥ १४७ ॥ मातामहमिति । मातामहमातुलभागिनेयश्वशुरविद्यागुरुदौहित्र र्त्विग्याज्यान्भोजयेत् । विट्दुहिता । तस्याः पतिंविट्पतिं जामातरंबंधुंच सगोत्रादिकम् ॥ १४८ ॥ नेति । धर्मज्ञोदैवेकर्म णि भोजनार्थंब्राह्मणंन परीक्षेत लोकप्रसिद्धिमात्रेणैवासौ तथा प्रतिपद्यतत्रभोजनीयः । पित्र्ये कर्मण्युपस्थिते दूरादेवप रीक्षेतेत्युक्तनीत्या यत्नतःपरीक्षेत ॥ १४९ ॥ येस्तेनाःपतिताक्लीबाइति । स्तेनादीनविप्रानहव्यकव्ययोरुभयोरप्ययोग्या न्मनुराह । चौरान्ब्राह्मणसुवर्णादन्यत्रतस्य पतितत्वेनोपसंग्रहात् । पतितमेकादशेवक्ष्यति । क्लीबोनपुंसकं । नास्तिपर लोककर्मेत्येवं वर्तनंयेषांते नास्तिकवृत्तयः ॥ १५० ॥ जटिलमिति । ब्रह्मचारिणमस्वीकृतवेदं अत्यन्तानध्ययनस्य श्रोत्रि यायैव देयानीति नियमे सति प्राप्त्यभावात् । तथा दुश्चर्मंद्यूतवृत्त्या:ऽयाज्ययाजकान्श्राद्धे न भोजयेत् । दैवेत्वनिषे धस्तथायत्रोभयनिषेधमिच्छति तत्र हव्यकव्यग्रहणमुभयत्रचेति करोति ॥ १५१ ॥ चिकित्सकान्देवलकान्मांसवि क्रयिणस्तथेति । चिकित्सकादयोहव्यकव्ययोरुभयोरपि वर्जनीयाभवेयुः । चिकित्सकोभिषक् देवलकः प्रतिमापरिचा रकः अनयोश्चवृत्त्यर्थत्वेनैतत्कुर्वतोरयंप्रतिषेधोनधर्मार्थं तत्रविहितत्वात् । मांसविक्रयिणःसकृदपि । तथाच सद्यःपतति मांसेनेतिलिङ्गमन्यथाविपणेनगतार्थंस्यादिहचजीवन्तइत्युपादानात् मांसेनसकृदपि प्रतीयते विपणोवाणिज्यम् ॥ १५२ ॥ प्रेष्यइति । ग्रामराजभृतकः कुत्सितनखः श्यावदन्तः गुरोःप्रतिकूलाचरणः त्यक्तश्रौतस्मार्ताग्निः प्रतिषिद्धवृद्धिजी वीत्येते हव्यकव्ययोर्वर्ज्याः । पूर्ववाक्यादेव क्रियानुवृत्तेरेवमुत्तरत्रापि ॥ १५३ ॥ यक्ष्मीति । क्षयी वृत्त्यर्थ त्वेनपशुपालःप्रसिद्धः । परिवेत्तृपरिवित्तीच वक्ष्यमाणौ निराकृतिः वेदादीनांनिराकर्ता अनुपजीव्योब्राह्मणानांद्वेष्टा ग णमध्यगतोब्राह्मणादिभिः इत्येते हव्यकव्ययोर्वर्ज्याःस्युः ॥ १५४ ॥ कुशीलवइति । नटःगायनादिकृतस्त्रीसंप्रयो गोब्रह्मचारी शूद्रायाभर्ता । पुनर्भ्वाःपुत्रोवक्ष्यमाणः काणः यस्य च जायाजारोगृहे इत्येतेहव्यकव्ययोः परिहरणी याः ॥ १५५ ॥ भृतकाध्यापकइति । पणपूर्वाध्यापकः पणपूर्वाध्यापितः शूद्रशिष्यः तस्यैव च गुरुः नत्वगुरुः तस्या नुकल्पेभोज्यत्वेनोक्तत्वात् । परुषभाषी कुण्डगोलकौ वक्ष्यमाणावेते हव्यकव्ययोः वर्ज्याः ॥ १५६ ॥ अकारणपरि त्यक्तेति । मातृपितृविद्यागुरूणांनिष्कारणंपरित्यक्ता पतितैश्चाध्ययनकन्यादानादिसंबन्धःसंपर्कंगतोर्वागपिसंवत्सरात् । संवत्सरेण तु पतितत्वादेवगतार्थता संवत्सरेणपततीति ॥ १५७ ॥ अगारदाहीति । गृहस्य दाहकोमारणद्रव्य दाता कुण्डस्य वक्ष्यमाणस्य योऽन्नमश्नाति सोमस्य लतारूपस्य विक्रेता समुद्रंयोगच्छति स्तुतीनांपाठकः तिलादेः पेषकः लेख्यसाक्ष्यादौ कूटस्य कर्ता इत्येते उभयत्रपरिहरणीयाः ॥ १५८ ॥ पित्रेति । पापरोग्यभिशस्तश्च जालिकोरस विक्रयी ॥ शास्त्रलेकवस्तुषु यःपित्रासह विवदते कितवोऽपरदेवयतीतरस्योक्तत्वात् । केका इति पाठकाचारः । सुरा

व्यतिरिक्तमद्यस्य पाता कुण्डीपातकोपपातककर्तृत्वेनोत्पन्नाभिशापिसत्यपि तत्कारित्वनिश्चये सत्याजीधर्मानुष्ठाने रसशब्द-स्येक्षुरसादावपि प्रसिद्धत्वात् तद्विक्रयी विषयस्यवतत्राप्यर्थशास्त्रेरसशब्दप्रयोगादित्येतउभयत्रपरिहर्तव्याः ॥ १५९ ॥ **धनुःशराणामिति** । धनुःशरस्य कारकोऽग्रेदिधिषूपतिर्भ्रातुर्मृतस्येति वक्ष्यमाणोवृत्तवशादग्रइत्यस्यालापेनसत्यभामा-भामेतिवत् । यत्तु गौतमीयपर्यालोचनयाग्रेदिधिषूपतिशब्देन द्वयंनिषिध्यते अग्रेदिधिषूपतिः दिधिषूपतिश्चतत्राग्रेदि-धिषूपतिरनूढाकन्यागामी दिधिषूपतिस्तद्वोढेत्याहुस्तरसदशद्वार्थत्वात् । नचदिधिषूपतिश्चतद्वोढेतिव्याख्यानमुक्तंभ्रातुर्मृत-स्येतिमानवलक्षणाविरोधात् । मित्रस्ययोऽपकारेवर्तते द्यूतवृत्तिःसभिकःपुत्रेणाध्यापितोमुख्यस्य पुत्राचार्यत्वस्यासंभ-वात् ॥ १६० ॥ **भ्रामरीति** । अपस्मारी गण्डमालाख्यव्याध्युपेतः श्वित्री शूचकःधातुसंक्षोभादियुक्तोऽन्धोवेदस्य कुत्सकः इत्येते हव्यकव्ययोर्वर्ज्याःस्युः ॥ १६१ ॥ **हस्तिगोश्वोष्ट्रदमकइति** । हस्तिगवाश्वोष्ट्राणांविनेता ज्यो-तिःशास्त्रेणजीवनः पक्षिणांवार्तनपूर्वकंक्रीडार्थंपोषयित्वायुद्धशिक्षयिता एते उभयत्र परिहर्तव्याः ॥ १६२ ॥ **स्रोतसामिति** । उदकागमनसेतुबन्धभेदकः भेदादिनादेशान्तरंनेताच तेषामवच्छादनकृत् । वास्तुविद्याजीवनः । दूतोराज-प्रेष्यव्यतिरिक्तोपि । वृक्षाणांरोपयिता मूल्येन न धर्मार्थंदशाम्रवापी नरकं न यातीत्यादिनोदनात् ॥ १६३ ॥ **श्वक्रीडीति** । श्वभिर्यः क्रीडति याजकक्रियादिजीवकः कन्यायानिन्दकः हिंसारतः शूद्रजीवनोवृषलपुत्रइतिवा-पाठः । चतुर्दश्यादौविनायकादिगणयागकृत् इत्येव उभयत्र वर्जनीयाः ॥ १६४ ॥ **आचारहीनइति** । प्रत्यु-त्थानाद्याचारवर्जितःक्लीबोनिरुत्साहोनपुंसकस्योक्तत्वात् । सर्वदा याञ्चास्वभावोऽस्वयंकृतंवापि यःकृष्यावृत्यन्तरसंभ-वेपि जीवतिश्लीपदीव्याधिविशेषाद्धुलूलैकचरणःसाधुभिर्निन्दितः केनापिनिमित्तेनेत्येतदुभयत्र बहिःकार्याः ॥ १६५ ॥ **और्भिकइति** । मेषमहिषजीवीपुनर्भवोभर्ता मूल्येनप्रेतानांनिर्हारकोनधर्मार्थं । एतद्वै परमंतपोयत्प्रेतमरण्यंनिर्ह-रन्तीतिश्रुत्यानोदितत्वात् एते यत्नतउभयत्र वर्जनीयाः ॥ १६६ ॥ **एतानिति** । एतेनिन्दिताचारास्ते-नादयःइहजन्मनि काणादयश्चैवंकर्मविशेषेण जायन्ते इति वक्ष्यमाणत्वात् । प्रागजन्मन्यतएतान् योग्यब्रा-ह्मणैःसह एकपंक्तिभोजना [ न ] र्हान् ब्राह्मणापसदान् द्विजःश्रेष्ठःशास्त्रज्ञोदैवेपित्र्येच वर्जयेत् ॥ १६७ ॥ **ब्राह्म-णइति** । **तृणाग्निर्यथाहविषोपशाम्यति** न हविर्दहनसमर्थस्ततश्चनिष्फलस्तत्र होमएवंनिष्फलत्वाद्वेदाध्ययनेनशू-न्योब्राह्मणस्तृणाग्नितुल्योतस्माउद्देशेननदातव्यम् । यतोनभस्मनि होमःक्रियते । श्रोत्रियायैव देयानि अनेनैव अनधी-यान निषेधसिद्धौ इदंवचनंदैवेकाणादीनांछन्दोध्यायिनां स्वाचाराणां अभ्यनुज्ञानार्थंगर्हिताचारंवर्जयेत् । अनधीयानंच यस्तु स्वाचारोधीयानश्च तस्यदैवेकाणत्वलिङ्गसंसूचितंप्राग्जन्मार्जितगर्हितकर्म । शेषत्वमनपेक्षं तथावसिष्ठः ॥ अथचेन्मन्त्रसंयुक्तः शारिरैःपङ्क्तिदूषणैः ॥ अदुष्यन्तंयमःप्राहपङ्क्तिपावनएवसइति ॥ १६८ ॥ **अपङ्क्त्यदानइति** । पङ्क्तिभोजनानर्हदाने दातुर्य-देनोदैवपित्रार्थहविषि फलोत्पत्तिर्भवति तत्साकल्येन प्रवक्ष्यामि ॥ १६९ ॥ **अव्रतैरिति** । वेदग्रहणार्थंसावित्र्यादिव्रतरहितैः तथापरिवेत्रादिभिरन्यैश्च स्तेनादिभिरपाङ्क्तैर्यद्देवपित्र्यर्थंभुक्तं तत्सुकृतलेशवशेन रक्षांसि भुञ्जते न दात्रभिमतफलायभ-वति । अव्रतानांचनिषिद्धमध्यापठितानामप्यस्मादेव निषेधोबोद्धव्यः ॥ १७० ॥ परिवेत्रादीनप्रसिद्धत्वाल्लक्षयति **दाराग्निहोत्रसंयोगमिति** । योज्येष्ठेभ्रातर्यकृतदारके तिष्ठति सति दारश्रौतस्मार्ताग्न्यानयनंकुरुते सपरिवेत्ता ज्येष्ठश्चपरिवित्तिर्बोद्धव्यः ॥ १७१ ॥ प्रसङ्गादेतद्व्यतिक्रमफलमाह **परिवित्तिरिति** । परिवित्तिपरिवेत्तारौ य-याच कन्यया हेतुभूतया परिवेदनंक्रियते दाताच कन्यायायाजकश्च तदुद्वाहहोमस्योपदेष्टा येषांपञ्चमस्तेनरकं

गच्छन्ति ॥ १७२ ॥ **भ्रातुरिति** । मृतस्य भ्रातुर्वक्ष्यमाणनियोगधर्मेणापि नियुक्तायां भार्यायां यो नियोगधर्मं हित्वा-कामेन हेतुभूतेनानुरागं भावयेत् सोग्रेदिधिषूपतिः निषिद्धत्वात् । अत्र वृत्तवशात्सत्यभामावच्चाग्रशब्दस्यप्रयोगः । ॥ १७३ ॥ **परदारेष्वि** । परभार्यायांकुण्डगोलकाख्यौ सुतावुत्पद्येते । तत्रसपतिकायांयउत्पद्यते सकुण्डोवि-धवायाश्चगोलकः ॥ १७४ ॥ **तेतुजाताःपरक्षेत्रइति** । तेपरभार्याजाताःकुण्डगोलकाख्याअदृष्टार्थानुप्रयोगाप्राणिमात्र-व्यपदेशार्हाहव्यकव्यानीहदत्तानि लोकआनुषङ्गिककीर्त्याख्यफलभावादमुत्र देवपितृतृप्त्यभावाद्दातॄणांनिष्फलानि भव-न्तिकुर्वन्तिवा ॥ १७५ ॥ **अपाङ्क्त्याइति** । पङ्क्तिभुञ्जानानर्हांस्तानपियावतःयावत्सङ्ख्याकान् अनर्हान्भुञ्जाना-नर्हा [ न ] नुपश्यन्ति तावत्संख्याकानांसंबन्धितत्रश्राद्धादौदाताऽज्ञोनान्नफलमाप्नुयात् इति अपाङ्क्त्यादर्शनफलक-थनम् ॥ १७६ ॥ अन्धादीनांविशेषमाह **वीक्ष्येति** । अन्धस्य दर्शनाभावात्तत्र संनिहितोसौ पाङ्क्त्यानांनवतेः संबधिभो-जनफलंनाशयति । एवंकाणःषष्टेः। श्वित्री शतस्य कुष्ठीसहस्रस्य । इत्यन्धादिसन्निधिफलकथनं संख्यावैचित्र्यादेवेदमप-रमप्यवसीयते । यदथचेन्मन्त्रवियुक्तइत्युक्तंच शिष्टदर्शनावष्टंभेन काणादीन्भोजयिष्यतःपूर्वपूर्वमपचितसंख्यानिंदित प्रवृत्तिस्तदलाभेऽधिकनिन्दितइति ॥ १७७ ॥ **यावतःसंस्पृशतीति** । शूद्रस्य पाकयज्ञादेरुपद्रष्टाकर्ताच यत्संख्या-न् ब्राह्मणानङ्गैःस्पृशति आसनेषूपक्लृप्तेषु बर्हिष्मन्तुपृथगिति स्पर्शनिषेधाद्यावतांपंक्तौ उपविशति तत्संख्यानां-संबन्धिभोजनफलंनभवतीति शूद्रयाजकभोजनफलं अतएवचाप्यनिषिद्धगणपठितस्यापि निषेधोबोद्धव्यः ॥ १७८ ॥ **वेदविदिति** । वेदज्ञोपिविप्रः शूद्रयाजकसकाशाल्लोभेन दानादिप्रतिगृह्य मृन्मयापक्वशरावाप्युदकइवाशुविनाशमुपै-ति । प्रसंगाल्लाघवार्थमप्यकृतमप्येतदुक्तमन्यत्रहि क्रियमाणे शूद्रयाजकग्रहणं कर्तव्यंस्यात् ॥ १७९ ॥ **सो-मविक्रयिणइति** । सोमविक्रयिणे यद्दत्तंतद्दातृभोजनार्थंशक्तस्संपद्यते । तच्चशकृद्भोजने तिर्यक्जात्युत्पत्तिफल-तास्यादनेन प्रकारेणोक्तंभवत्येवंपूयरुधिरेपि व्याख्येये । नष्टंविनाशमुपगतंअतश्चतत्फलंभवति । अप्रतिष्ठमलब्धास्पद-मतस्थानाश्रयत्वान्नफलदानसमर्थं ॥ १८० ॥ **यदिति** । वाणिजिकाय यद्दत्तंतन्नेहकीर्तये नापिपरलोकफलाय-भवति । पुनर्भूपुत्राय च दत्तंनिष्फलं भस्मनीवहुतंहव्यंतत्प्रेत्य ॥ १८१ ॥ **इतरेष्विति** । इतरेभ्योऽनु-क्तफलेभ्योऽपाङ्क्तेभ्योयद्दत्तमन्नंतन्मेदशोणितानांमध्ये मज्जति । भवतीति विद्वांसोऽयसोमविक्रयिणेविष्ठेतिवद्व्या-ख्येयम् ॥ १८२ ॥ **अपाङ्क्त्योपहतेति** । स्तेनादिभिः पङ्क्त्युपविष्टैर्दूषितापङ्क्तिर्यैर्ब्राह्मणैः पवित्रीक्रियते तान्पङ्क्तिप-वित्रीकरणान्ब्राह्मणान्साकल्येनशृणुत । यद्यप्यस्यपङ्क्तिनिषेधात् स्तेनादीनांश्राद्धदानासंभवेपिसति पङ्क्तिपावनवचन-समर्थकम् । तथापरीक्षायांकृतायामपि रहस्यविज्ञातदोषसंभवादिदंतन्निवृत्त्यर्थमर्थवद्भवति ॥ १८३ ॥ **अग्र्याइति** । सर्वेषु वेदेषु ऋग्वेदादिषु ये अग्रे श्रेष्ठाः वेदपारगत्वे सत्यपि वेदंकरामलकवत्पश्यन्तीति अग्र्याउच्यन्ते तेपङ्क्ति-पावनाबोद्धव्याः । तथाप्रोच्यतएभिर्वेदार्थइतिप्रवचनान्यङ्गानि तेषु पूर्ववदग्र्यावेदज्ञत्वाभावेपि पङ्क्तिपावनास्तथावंशमवि-च्छिन्नवेदाःपङ्क्तिपावनाः । पूर्वमश्रोत्रियःपितायस्येति पितृगतश्रोत्रियत्वेन भोज्यत्वमुक्तमनेनतु सकलवंशाविच्छिन्नवे-दत्वेन पङ्क्तिपावनउच्यते ॥ १८४ ॥ **त्रिणाचिकेतइति** । **वेदार्थविदिति** । त्रिणाचिकेताख्याध्वर्यववेदव्रताचरणाद्गुणोब्रा-ह्मणोपित्रिणाचिकेतः पञ्चाग्निर्धार्याध्यातः । त्रिसुपर्णाख्यंऋग्वेदव्रतयोगात्पूर्ववत् त्रिसुपर्णोव्याकरणादीनि षडङ्गानि योवेत्ति सर्वप्रवचनेष्वित्यनेनाप्यध्येतोक्तोऽनेन स्वङ्गउच्यते । ब्राह्मविवाहोढापत्यंज्येष्ठसामाख्यसामवेदव्रतयोगाज्ज्येष्ठसामगोन्त-रेणाप्यङ्गानि योवेदार्थंप्राज्ञतयावेत्ति प्रवक्ताध्यापयिता व्याख्याता धर्मार्थवेदवेदार्थयोःब्रह्मचारीगाङ्गोवैयब्रह्मस्यमातरइति वेददर्शनादिहापि वेदमूलत्वाद्गोसहस्रस्य दाता बहुप्रदश्चैवशतवर्षश्चेत्येते ब्राह्मणश्रोत्रियायैव देयानि इति नियमात्

सतिश्रोत्रियत्वे एतद्गुणयोगेपङ्क्तिपावनाबोद्धव्याः ॥ १८५ ॥ १८६ ॥ **पूर्वेद्युरिति** । श्राद्धकर्मणिप्राप्ते स्त्रीप्रयोगांशङ्कायांश्राद्धदिवसात्पूर्वस्मिन्अहनि परस्मिन्नेवासति संभवेयद्यत्यन्तन्यूनान् ततस्त्रीन्नतुनैवैकैकविधेरप्युक्तत्वात् । प्रश्रयपूर्वंवायथोक्तान्विमान् निमन्त्रयेत ॥ १८७ ॥ **निमन्त्रितइति** । श्राद्धे ब्राह्मणोनिमंत्रितः स्त्रीनिवृत्तियमनियमानुष्ठानवान् सदानिमन्त्रणात् प्रभृतिश्राद्धाहोरात्रंयावतःस्यात् वेदांश्चजपावश्यकर्तव्यव्यतिरेकेण नाधीयीत । श्राद्धकृच्चतद्वदेवस्यात् ॥ १८८ ॥ **निमन्त्रितानिति** । यस्मात्तान्द्विजान्निमन्त्रितान् पितरउपतिष्ठन्त्यदृश्यरूपेण समीपमायान्ति प्राणवच्चानुगच्छतोनुगच्छन्त्युपविष्टेषु विप्रेषु समीपे उपविशन्ति तस्मान्नियतात्म [ ना ] निमन्त्रितेनभाव्यं इतिपूर्वविध्यर्थवादः ॥ १८९ ॥ **केतितइति** । हव्यकव्ययोःशास्त्रमर्यादानतिक्रमेण निमन्त्रितोब्राह्मणोङ्गीकृत्य केनापि प्रकारेण भुंजानः तदतिक्रमपापवान् जन्मान्तरेसूकरत्वंयाति । पापशूकरइतिपाठे पापशूकरोधमशूकरः ॥ १९० ॥

[ ब्राह्मणंतुमुखंकृत्वादेवाःपितृगणैःसह ॥ तदेनमुपजीवंतेतस्मात्तान्नव्यतिक्रमेत् ॥ १ ॥ ]

**आमन्त्रितइति** । तदहर्ब्रह्मचारिस्यादितिगौतमस्मरणात् । वृषल्यपि कामयमाना चालयति भर्तारमिति वृषल्यत्र ब्राह्मण्यपि श्राद्धे निमन्त्रितःसन् तयासह स्त्रीपुंधर्मेणयोरमते सदातुर्यत्पापंतत्सर्वंप्राप्नोति इतिपापोत्पत्तिप्रतिपादनमात्रमेतत् । अन्यथा अपापे दातरि दुष्कृतसंबन्धोनस्यात् तत्रदातुरेतत्प्रायश्चित्ततयाचोदितं येनासौ दुष्कृतत्वान्मुच्यते ॥ १९१ ॥ **अक्रोधनाइति** । क्रोधशून्याः पूर्वार्यादिशुद्धिनिरताः सर्वदावर्जितस्त्रीसंप्रयोगाः त्यक्तायुधाः महात्मनोऽनादिदेवतारूपाः पितरोऽतःक्रोधादिरहितैःश्राद्धब्राह्मणैर्भाव्यं ॥ १९२ ॥ **यस्मादिति** । एषांपितॄणांयस्यसकाशादुत्पत्तिः येच पितरोयैर्यागादिभिर्नियमैःशास्त्रोक्तकर्मभिर्यथास्युस्तत् शृणुत ॥ १९३ ॥ **मनोरिति** । हिरण्यगर्भापत्यस्यमनोस्सुतायेमरीच्यादयःपुत्राः । यथोक्तं मरीचिमत्र्यंगिरसमित्यादितेषांमरीच्यादीनांसर्वेषांऋषीणामेतेयेसोमपादयः पितृमुख्यामन्वादिभिःस्मृताः ॥ १९४ ॥ **विराट्सुताइति** । विराट्सुताःसोमसदोनामसाध्यानांपितरः देवानांच मरीचिपुत्राअग्निष्वात्ताख्यालोके ख्याताः ॥ १९५ ॥ **दैत्यदानवयक्षाणामिति** । दैत्यादीनां प्रथमाध्यायोक्तभेदानां अत्रिपुत्राबर्हिषदोनामपितरःस्मृताः ॥ १९६ ॥ **सोमपानामेति** । ब्राह्मणक्षत्रियवैश्यशूद्राणांयथाक्रमंसोमपहविर्भुजाज्यपासुकालिनामानःपितरः ॥ १९७ ॥ **सोमपाइति** । ब्राह्मणस्य पितरःसोमपाः कवेः भृगोःपुत्राः । क्षत्रियपितरोहविर्भुजोहविष्मन्तोङ्गिरःसुताः । वैश्यपितरस्त्वाज्यपाःपुलस्त्यस्यपुत्राः । शूद्रपितरःसुकालिनो वसिष्ठस्य पुत्राः ॥ १९८ ॥ **अनग्निदग्धानिति** । अनग्निदग्धाग्निदग्धाकव्यबर्हिषदः अग्निष्वात्तासौम्याख्यानपरान् पितॄन्विप्राणामेवजानीयात् । वेदपुराणेषुचैव नामकंपितॄणांप्रसिद्धम् ॥ १९९ ॥ **यइति** । य एते सोमपादयः प्रधानभूताःपितृगणाउक्तास्तेषामपीह संसारेपितरएव पुत्रपौत्राविज्ञेयाः ॥ २०० ॥ **ऋषिभ्यःपितरइति** । मरीच्यादिभ्यउक्तनामभ्योयेसोमपादयोजाताः तेभ्यश्च देवदानवंजातम् । देवेभ्यश्चस्थावरजङ्गमरूपंसर्वंजगत्क्रमेण जातमेवंचोक्तपितृभवत्वात् पितृपितामहप्रपितामहादीनांतत्पूजायांतेपूजिताभवन्तीत्येतत्प्रतिपादनार्थं सोमपादिपितृगणोपन्यासः प्रकृतपितृपूजास्तुत्यै विज्ञेयः ॥ २०२ ॥ **राजतैरिति** । तेषांपितॄणांरौप्यपात्रैरौ-

---

( १ ) यागादिभिः=ब्राह्मणादिभिः ( गो० २,५ )

प्ययुक्तैर्वापानीयमपि भक्तयादत्तं अक्षय्यसुखहेतुसंपद्यते किंपुनःप्रशस्तामिषादीनिघृतादीनि । दानपात्रविशेषफलमेतत्॥२०२॥ **देवकार्यादि**ति । दैवस्य देवकर्मणःसकाशात् पित्र्यंकर्मद्विजातीनांविशेषेण कर्तव्यतयोपदिश्यते । प्रधानंहि तद्य-स्मात्दैवकर्मपितृकर्मणःपूर्वंसत्परिपूरकंस्मृतमेवंच तस्यपितृकार्यपरिपूरकवदङ्गत्वमिति ॥ २०३ ॥ **तेषामि**ति । पितृणां-रक्षाभूतंगृह्यदर्शनाद्विश्वान्देवानुद्दिश्य पूर्वंब्राह्मणंनिमन्त्रयेत् । यस्माद्रक्षोदर्शितंश्राद्धंरक्षांस्याच्छिन्दति यस्माद्रक्षाभूतं-पित्र्यस्य दैवं तस्मात् ॥ २०४ ॥ **दैवाद्यन्तमि**ति । **पित्राद्यंतंत्वीहमानःक्षिप्रंनश्यतिसान्वय**इति । ततःश्राद्धं-दैवादिदैवान्तंचानुतिष्ठेत । नचपित्र्योपक्रमापवर्गंपित्राद्यंतंतदनुतिष्ठन्ससंतानंआशुविनश्यतीति ॥ २०५ ॥ **शुचिमि**ति । अनुपहृतंदेशंजनैरनाकीर्णंगोशकृतोपलेपयेत् । अथवा दक्षिणस्यांदिशि अवनतोयदिस्वभावतोनस्यात् तदा प्रयत्नत स्तंसंपादयेत् ॥ २०६ ॥ **अवकाशेष्वि**ति । स्वभावशुचिषु स्थानेषु नद्यादिपुलिनेषु च निर्जनेषु प्रदेशेषु दत्तेन श्राद्धादिना पितरःसर्वदा तुष्यन्ति तस्मिंश्चदेशे ॥ २०७ ॥ **आसनेष्वि**ति । आसनेषु सदर्भेषु पृथक्पृथक्वि-न्यस्तेषु सम्यक्कृतस्नानाचमनानतान्पूर्वंनिमन्त्रितानुपवेशयेत् ॥ २०८ ॥ **उपवेश्ये**ति । तान्विप्राननिन्दितानास-नेषु उपवेश्यानन्तरंकुङ्कुममाल्यधूपादिभिः स्वामीदैदैवब्राह्मणपूर्वकमर्चयेत् ॥ २०९ ॥ **तेषामि**ति । तेषांब्रा-ह्मणानामुदकंदर्भतिलमिश्रंदत्वाग्नौकरवाणिकरिष्यइति चेत्यनुज्ञातोयदाकुर्वित्येवंब्रूयुरिति गृह्योक्तरूपेण सहब्रा-ह्मणैरनुज्ञातो अग्नौवक्ष्यमाणंहोमंकुर्यात् । ब्राह्मणग्रहणंद्विजप्रदर्शनार्थंत्रयाणांप्रकृतत्वात् ॥ २१० ॥ **अग्ने-रि**ति । सोमयमयोर्द्वन्द्वनिर्देशेपि अग्नेर्देशाभावाद्देवताद्वयंतेनाग्नये स्वाहा सोमाय स्वाहा यमाय स्वाहेत्ये-वमग्न्यादीनांपर्युक्षणादितिविधिपूर्वकंहविर्दानेन तर्पणं आदौ कृत्वा पश्चाद्ब्राह्मणभोजनादि ॥ २११ ॥ **अग्न्यभाव**इति । **अक्रोधनानि**ति । अनग्निकस्यानुपनीतोपनीतासमावृत्ताकृतदारमृतभार्यादेमृताहादिश्राद्धेविधाना-दौपासनाग्न्यभावे ब्राह्मणहस्तएतदाहुतित्रयंदद्याद्यस्माद्यएवाग्निःसएवाग्निःसएवब्राह्मणइति । वेदविद्भिःब्राह्मणैरुच्यते। अक्रोधनान्क्रोधशून्यान्स्वाराधनादीनग्रौ प्रास्त्येतिच न्यायेन लोकवृत्त्युपादानात् श्राद्धसंप्रदानभूतानेतान् ब्राह्म-णान् मन्वादयोवदन्ति तस्माद्देवतुल्यत्वात्तद्धस्तेदेयमिति पूर्वविध्यर्थवादः ॥ २१२ ॥ २१३॥ **अपसव्यमि**ति । अग्नौयः-पर्युक्षणपरिस्तरणाहुतिदानादीनि कर्तव्यताक्रमः तंसर्वमपसव्यपितृकर्मवत् दक्षिणासंस्थंकृत्वा तदेतदुदक्संस्थंअपस-व्येन दक्षिणेन हस्तेन पितृतीर्थेन पिण्डाधारभूतायांभुव्युदकंप्रक्षिपेत् ॥ २१४ ॥ **त्रीनि**ति[1] । तस्मादग्न्यादि होमा-र्थाहुतिंदत्वा हुतशिष्टान्त्रीन्पिण्डान्कृत्वा उदकेन विधिना दक्षिणहस्तेन पितृतीर्थेनानन्यचित्तोदक्षिणामुखस्तेषु दर्भेषु तंहस्तंनिमृज्यादितिदर्शनात् दर्भेषु दद्यादतएवचोदकमपि पूर्वोक्तपिण्डाधारभुवि दर्भेष्वेव दद्यात् ॥२१५॥ **न्युप्ये**ति । तान्पिडान्पिण्डेष्वञ्जनाभ्यञ्जनवासोदद्यादित्येवं आदि सूत्रकारोक्तविधिपूर्वकं दत्वातस्तेषु पिण्डाधारभूतेषु दर्भेषु करावघमर्षणमिति वैष्णवस्मरणात् । दर्भमूलेषु तंहस्तंप्रपितामहात्पूर्वेषांत्रयाणांलेपभागिनांहस्तसंश्लिष्टान्नावयवभागि-तृप्तयेसमर्पितलेपंकुर्यात् ॥ २१६ ॥ **आचम्योदक्परावृत्ये**ति । तदनूपस्पृश्यआचम्योदङ्मुखोयथाशक्तित्रीन्प्राणा-यामान्कृत्वा वसंतायनमइति षड्ऋतून्नमस्कुर्यात् । पितृनेवच पितृंश्च नमोवःपितरइत्येवमादिमन्त्रयुक्तंकृत्वाभिपर्यावृत्ये-तिगृह्यदर्शनाद्दक्षिणाभिमुखोभूत्वानमस्कुर्यात् ॥ २१७ ॥ **उदकमि**ति । पिण्डाधारदर्भदत्तोदकशेषं उदकं पिण्डसमीपे पुनः उत्तरयोत्सृजेत् । तांश्चपिण्डान्येनैव क्रमेण दत्तान् तेनैवक्रमेणानन्यमनाजिघ्रेत् ॥ २१८ ॥ **पिण्डेभ्य**इति । पि-ण्डेभ्योऽत्यन्ताल्पभागंपितृपिण्डक्रमेणगृहीत्वा तानेव पित्राद्यर्थोपवेशितान्विप्रान्विधिवन्मयेत्यानुपूर्व्याभोजनकालेन्या-

( १ ) त्रीनप्यस्मादित्यपिपाठः

भोजनापूर्वान्भोजयेत् ॥२१९॥ **ध्रियमाणइति**। जीवतिपितरि पितामहादीनामेवत्रयाणांश्राद्धंकुर्यात् नपितुः। अथवा पितृस्थाने **तमेवस्वकंपितरंश्राद्धे** भोजयेत्पितृपितामहप्रपितामहयोश्चब्राह्मणौभोजयेत् पिण्डौच दद्यात् ॥२२० ॥ **पितायस्य-तुवृत्तइति**।पितृजीवनपक्षापेक्षोवाशब्दःयस्य पुनःपितामृतःस्यात् पितामहश्चजीवेच्च सपितुर्ब्राह्मणभोजनपिण्डदानादौ **नामोच्चार्य** प्रपितामहंकीर्तयेत । ताभ्यांद्वाभ्यांश्राद्धंकुर्यात प्रपितामहस्यच पितुः । यथाहविष्णुः ॥ यस्यपिताप्रेतःस्यात्सपित्रेपिण्डंविधाय पितामहात्पराभ्यांद्वाभ्यांदद्यादिति ॥ २२१ ॥ **पितामहइति** । पितामहविप्रस्थानेपितामहंवाभोजयेत् । **पितृपितामहयोः**पिण्डदानंब्राह्मणभोजनंच कुर्यात् । अथवा पित्रा पितामहेन वा जीवताअहंन भुञ्जे यथेच्छमेवानुज्ञातःस्वयमेव **यथारुचिः**समाचरेत । उक्तपक्षेभ्यःपक्षान्तरं यथा गृह्यउक्तंजीवत्पितृकस्यानारंभःकर्माणीतिहोमान्तः ॥ २२२ ॥ **तेषामिति**। तेषांब्राह्मणानांहस्तेषु सदर्भतिलोदकंदत्वा पिण्डेभ्यःस्वल्पिकांमात्रामित्यनेन यन्निर्दिष्टं तत्पिण्डाग्रंपित्रेस्वधास्त्वित्येवमादिब्रुवन् क्रमेणदद्यात ॥ २२३ ॥ **पाणिभ्यामिति** । अन्नपूर्णपात्रंस्वयंकराभ्यांगृहीत्वा पितॄन्स्मरन् विप्रसमीपे परिवेषणार्थंशनैःस्थापयेत् ॥ २२४ ॥ **उभयोरिति** । उभाभ्यांहस्ताभ्यामगृहीतंयदन्नंब्राह्मणान्तिकमानीयते दीयते वा तदसुरादेवद्विषोदुष्टबुद्धयःआछिन्दन्ति तस्मान्नैकेन स्मरनहस्तेनान्नमानेतुंपरिवेष्टव्यम् ॥ २२५ ॥ **गुणानिति** । **भक्ष्यंभोज्यंचविविधंसुरसानिफलानिचेति** । सूपादीनि व्यञ्जनानि क्षीरादीनि चोपसेचनानि प्राधान्यात्पृथक्पृथक् यथोपदिष्टानि प्रयतःशुचिःसमाहितोऽनन्यमनाःसन् यथा नविशीर्यन्ते तथा भूमावेव नान्यत्रस्थापयेत्तथा भक्ष्यंखरविशदंमोदकादि भोज्यं पायसादिना यथा प्रकारंमूलंफलंचहृदयस्य प्रियाणि मांसानि पानकादीनि च सुरभीणि भवन्ति भूमावेव विन्यसेत् ॥ २२६ ॥ २२७ ॥ **उपनीयसर्वमेतदिति** । सर्वमेतदन्नादि **ब्राह्मणसमीपे** आनीय इदंमधुरमिदंश्लक्ष्णं इत्येवंसर्वान्माधुर्यादीन्गुणान्कथयन् सुचिरमन्यमनाः शनैःयथोपयोगं नतु युगपदेव सर्वंपरिवेषयेत् ॥ २२८ ॥ **नास्रमिति** । रोदनक्रोधासत्यभाषणानि न कुर्यात । पादेन चान्नंनस्पृशेत् नाप्युत्क्षिप्योत्क्षिप्यसंत्यजेत् । क्रोधादनृतंनवदेत् । क्रोधानृतयोरपुरुषार्थत्वात् निषिद्धयोःश्राद्धाङ्गत्वार्थइहोपदेशः ॥ २२९ ॥ **अस्रंगमयतिप्रेतानिति** । अश्रुक्रियमाणंप्रेताख्यान्भूतविशेषान्श्राद्धान्नादि प्रापयति क्रोधःशत्रून् अनृतंशनःपादस्पर्शोरक्षांसि अवधूननंपापकारिणं तस्मादेतन्नकुर्यात ॥२३०॥ **यदिति** । ब्राह्मयाद्याश्चेति । यद्यदन्नंव्यञ्जनादि भवति तत्तदहृष्टःसनदद्यात् । तथापरमात्मनिरूपणंपुण्यकथास्तोत्रंकुर्यात् यदेतत्पितॄणामभिप्रेतम् ॥२३१॥ **स्वाध्यायंश्रावयेत्पित्र्यमिति** । वेदंमानवादिशास्त्राणि आख्यानानि सौपर्णमैत्रावरुणादीनि पृथक्वेदो दितानि भारतादीनि वाय्वादिप्रोक्तानि शिवसंकल्पादीनि श्राद्धेब्राह्मणान्श्रावयेत् ॥२३२॥ **हर्षयेद्ब्राह्मणान्हृष्टोभोजयेच्चाशनंशनैः॥ अन्नाद्येनासकृच्चैतान्गुणैश्चपरिबोधयेत्** ॥ हृष्टोभूत्वा तैस्तैःप्रियवचनादिभिःब्राह्मणान् तोषयेत् अन्नंचात्वरयाभोजयेत् । पायसादिनाघृतपूरादिभिरेतान्ब्राह्मणानिदंगृह्यतामित्येवंपुनःपुनःप्रबोधयेत् ॥ २३३ ॥ **व्रतस्थमपि दौहित्रमिति** । ब्रह्मचारिणमपि सदादौहित्रं श्राद्धे यत्नेन भोजयेत । दौहित्रस्यचानुकल्पिकमध्यादाम्नातेसतिपुनःइदंयत्नवचनमानुकल्पिकमध्येजाड्यत्वंख्यापयति सत्कृतं चारु आसंनदद्यात् । नदौहित्रएव चदद्यादपितु सर्वब्राह्मणेषु त्रीणि श्राद्धे पवित्राणिाणीति आदिवचनात् तिलांश्च भूमौ प्रक्षिपेत् ॥ २३४ ॥ यस्मात् **त्रीणीति** । दौहित्रादीनि त्रीणि श्राद्धे पवित्र

---

( १ ) सत्कृतं=अजलोमकृतं ( गो०२,५ )

त्रीणि चैववस्तूनि शौचाक्रोधविश्रंभाख्यानि श्राद्धेऽतिशयेनेच्छन्ति ॥ २३५ ॥ **अत्युष्णमिति** । उष्णमन्नं द्विजाग्र्येभ्यःश्रद्धयाविनिवेदयेत् । अन्यत्रफलमूलेभ्यःपानकाद्यन्नएवचेति ॥ शङ्खस्मरणात् फलादिव्यतिरेकेण सर्वमुष्णं दद्यात् । संयतवाचश्चब्राह्मणाः अश्नीयुः । दात्राचत्वाद्दत्वाद्वेत्येवमन्नगुणान्पृष्टाःकथयेयुः । अतिशयेनापिचाग्नि प्रशस्योक्तत्वात् ॥ २३६ ॥ **यावदूष्माभवत्यन्नइति** । यावदन्ने औष्ण्यंभवति विप्रामौनेनाश्नन्ति हविर्गुणांश्च नाभिदधति तावत्पितरस्तदन्नंब्राह्मणमुखेनभुञ्जते ॥ २३७ ॥ **यदिति** । उष्णीषादिना वेष्टितशिरायदन्नंब्राह्मणोभुङ्क्ते तथा दक्षिणामुखसोपानत्कपादश्च तदन्नंरक्षांस्यश्नन्ति नपितरः । तस्मादेतत्परिहरणीयम् ॥ २३८ ॥ तथाच कार्यंयथा **चण्डालश्च वराहश्चकुक्कुटइति** । चण्डालवराहग्रामसूकरकुक्कुटश्वोदक्यानपुंसकानि द्विजभोजनकाले ततोपसारयेत् ॥ २३९ ॥ **यस्मात् होमइति** । अग्निहोत्रादिहोमे दाने धर्मार्थंब्राह्मणभोजने हव्यकव्ययोश्च यत्कर्मचण्डालादिभिरवेक्ष्यते यद्यदर्थंक्रियते तन्नसाधयति ॥ २४० ॥ **घ्राणेनेति** । सूकरस्तदन्नादिघ्रात्वा तत्कर्मनिष्फलइति । कुक्कुटःपक्षपातेनवायुना । श्वाप्यक्षिनिरीक्षणेन । अवरवर्णेन शूद्रेण ब्राह्मण्यांजातोऽवरवर्णजश्चाण्डालोनदीतीरादिश्राद्धकृत्स्पर्शनेन तत्र वायुजशुचित्वाशङ्कायामिदंन दातुर्नचान्नादिस्पर्शविषयं येन चण्डालस्य सामान्यस्पर्शनिषेधेनैव सिद्धमन्नवचनमनर्थकंस्यादित्येवमनर्थक्याशङ्कायांयच्छूद्रस्पर्शनिषेधार्थत्वमस्याहुस्तदसत् उक्तनीत्यार्थवत्वादवरजशब्देन च शूद्रस्यानभिधानात् । सूकरादीनांच स्वभावानुवादोयं प्रकृतविशेषतयोच्यते न त्वेतत्क्रियाव्यतिरेकेण दुष्टमिति ॥ २४१ ॥ **खञ्जइति** । खञ्जः पादविकलः काणः एकेक्षणविकलः दातुर्वादासशूद्रस्यैव प्रेष्यत्वात् । अपिशब्दादन्योपि शूद्रोयोवाकुनखिषण्ढकादिस्तमपि ततः प्रदेशादपोत्सारयेत् ॥ २४२ ॥ **ब्राह्मणंभिक्षुकंवापीति** । ब्राह्मणमतिथिरूपं अन्यंवा भिक्षुकंभोजनार्थंतत्कालमागतं श्राद्धब्राह्मणैरनुज्ञातोदाता यथाशक्त्या अन्नदानेन पूजयेत् ॥ २४३ ॥ **सार्ववर्णिकमिति** । सर्वप्रकारमन्नाद्यं एकीकृत्य उदकेन प्लावयित्वा भुक्तवतांब्राह्मणानामग्रे विक्षिपन् भूमौ दर्भेषु विकिरश्चयइतिवक्ष्यमाणलिङ्गाद्दर्भेषु समुत्सृजेत् ॥ २४४ ॥ **असंस्कृतप्रमीतानामिति** । नास्यकार्योऽग्निसंस्कारइत्यादिना निषिद्धाग्निकारिणांमृतानांकुलस्त्रीणांच कुलंत्यक्त्वा गतानांपात्रस्थमुच्छिष्टंदर्भेषु योविकिरः सभागः स्यात् कुलयोपितामितिविशेषाभिधानंसंस्कृतंभैक्षमितिवत् ॥ २४५ ॥ **उच्छेषणमिति** । भूमिपतितंयदुच्छिष्टंतदकुटिलस्यानल [ स ] स्यदासगणस्य भागधेयंभागंमन्वादयःप्राहुः ॥ २४६ ॥ **आसपिण्डक्रियाकर्मेति** । अचिरमृतस्य द्विजातेरेकादशाहादावासपिण्डक्रियाधिष्ठानंकर्तव्यम् । नामावास्यावत्पूर्वाभ्यांसहपिण्डदानंकार्यम् । किंतर्हि वैश्वदेवब्राह्मणभोजनरहितंश्राद्धार्थमन्नंब्राह्मणंच भोजयेदेकंपिण्डंतस्माएवदद्यात् । तस्माद्यावद्ब्राह्मणंभोजयेत् साधितंचैतत् सविस्तरंस्मृतिमञ्जर्यांमृजुपञ्जिकायांच इह तु ग्रन्थभारभयान्न प्रतार्यते ॥ २४७ ॥ **सहपिण्डक्रियायामिति** । अस्येत्युपादानाद [ न ] न्तरंप्रस्तुतस्यैकोद्दिष्टक्रियासंप्रदानभूतस्याचिरमृतस्य सपिण्डीकरणे शास्त्रव्यवस्थयाकृते सति यथा याज्ञवल्क्यउक्तम् ॥ गन्धोदकतिलैर्युक्तंकुर्यात्पात्रचतुष्टयं ॥ अर्घार्थंपितृपात्रेषु प्रेतपात्रंप्रसिञ्चयेत् ॥ येसमानाइतिद्वाभ्यां शेषंपूर्ववदाचरेत् ॥ यथा च उशनसोक्तम् ॥ सपिण्डीकरणंश्राद्धंकुर्यात्पार्वणवत्सदा । पृथक्चकल्पयेदन्यदेकोद्दिष्टविधानतइति । तथा च शातातपेनोक्तम् ॥ सपिण्डीकरणंश्राद्धंदेवपूर्वंनियोजयेत् ॥ पितृनावाहयेत्तत्र पुनःप्रेतंच निर्दिशेत् इति ॥ तथा च गृह्यपरिशिष्टउक्तम् ॥ दत्त्वापिण्डानपितृभ्यस्तुपश्चात्प्रेतायपार्श्वतः ॥ तंतुपिण्डंत्रिधा कृत्वा आनुपूर्व्यर्थंसंततं ॥ निदध्यात्त्रिषु पिण्डेषु एषसंसर्जनोविधिरिति । प्रेतपात्रंच सर्वपितृपात्रेषु प्रसेक्तव्यमपितु पृथक्प्रेतब्राह्मणोपदेशसामर्थ्यात्तदर्घार्थंतत्रकिंचिदनुशेषणीयम् । साधारणत्वाविभक्तभ्रातृधनोपयोगवत्तस्मादर्घोदेयः ॥ एवंच यत्कैश्चित्सपिण्डीकरणे प·

अन्नाह्मणभोजनंप्रपितामहपितृसंबन्ध्यर्घ्यपात्रंपिण्डत्रिधाधारणंचोक्तंतदसदुक्तवाक्यविरोधादेव शास्त्रतःकृते सत्यनयैवावृता आमावास्यप्रक्रियया पुत्रैःप्रतिसंवत्सरंमृताहे कर्तव्यम् । नतुसंनिहितपरामर्शकत्वात्सर्वनाम्नोऽनयैवेत्येकोद्दिष्टातिदेशो-न्याय्यः । नैवं । एवंभेदनिर्देशेन शास्त्रनिर्देशंनकुर्यात् । असपिण्डक्रियायामेषविधिः । सहपिण्डक्रियायांपुनःकृता यां अयमिति तस्मादमावास्येतिकर्तव्यतानिर्देशएवन्याय्यः । इतिसपिण्डकरणसांवत्सरिकेपि स्मृतिमञ्जर्यामृजुपञ्जि-कायांविस्तरतोनिरूप्यते ॥ २४८ ॥ श्राद्धमिति । श्राद्धेभोजनोच्छिष्टंयःशूद्राय ददाति समूर्खःकालसूत्राख्य-नरकमध्येऽधोमुखोव्रजति । आश्रितसशूद्रत्वादुच्छिष्टमन्नंदातव्यमिति प्रामोयंप्रतिषेधः ॥ २४९ ॥ श्राद्धभुगिति । आमन्त्रितस्तुयःश्राद्धे भोजनात्प्राक्ब्रह्मचर्यभुक्तमनेनतु तदुत्तरकालंतदहोरात्रमुच्यते । वृषलोचव्याख्याता । श्राद्धं-भुक्त्वा तदहोरात्रंयःस्त्रीसंप्रयोगंभजते तस्यतद्विष्ठायांमासंपितरो ऽवतिष्ठन्तइत्यतश्च इयानस्याधर्मयोगोभवति ॥ २५० ॥ पृष्ट्वास्वदितमित्येवमिति । तानब्राह्मणान् तृप्तानबुद्ध्वा स्वदितमित्येवंपृष्ट्वा ततउपस्पर्शयेत् । कृताचमनाश्च इहवास्तगृ-हेवास्यतामित्येवमनुज्ञातव्याः ॥ २५१ ॥ स्वधेत्येवंचतंब्रूयुरिति । अनुज्ञानन्तरंदातारंस्वधेत्येवंब्राह्मणाब्रूयुर्यस्मात्स-र्वेषु कृतान्नाकृतान्नश्राद्धोदकतर्पणादिषु पितृकर्मसु स्वधाशब्दोच्चारणं प्रकृष्टा आशीः ॥ २५२ ॥ ततइति । सहकृतभो-जनानांविप्राणांस्वधाकारादनन्तरंशेषं अन्नमित्येवंगृह्योक्तविधिना अन्नशेषंनिवेदयेत् । तैश्चद्विजैरिदमनेनान्नेनक्रियता-मिति दत्तानुज्ञोयथातैरुक्तंतथाविनियुञ्जीत ॥ २५३ ॥ पित्र्येस्वदितमित्येवंगोष्ठेवाच्यमितिश्रुतमिति । अन्येना-पि श्राद्धकालोपस्थितेन स्वदितमित्येवंगोगणमध्येच श्रुतमिति संपन्नमिति विवाहादौ देवतार्थेरोचितमिति ॥ २५४ ॥ अपराह्णस्तथादर्भाइति । अपराह्णविष्टरार्थेदर्भावास्तुसंपादनंसुधागोमयादिना गृहसंशोधनं तिलाश्चान्तर्भूविकरणा-यर्थासृष्टिरकार्पण्येनान्नविसर्गः मृष्टिरन्नसंस्कारः अग्र्याब्राह्मणाइत्येताःश्राद्धेसंपदइत्यङ्गान्तरेभ्यएषांप्रशस्यत्वज्ञापनार्थ-मेतत् ॥ २५५ ॥ दर्भाइति । विष्टरार्थदर्भाः पवित्रंदाभे प्राधान्यात्पृथगुपदिष्टं पूर्वाह्णकालीहविष्याणि मुन्यन्नादीनि । सर्वाणियच्चवास्तुसंपादनादिपावनंपूर्वमुक्तं एतावदेवार्थकर्मणःसिद्धयः॥ २५६॥ मुन्यन्नानीति । आरण्यान्नंक्षीरंसोमोमां-संचानतितीक्ष्णं बिडलवणादिवर्जितंलवणंसैन्धवंस्वभावतएवैतद्धविरिति मन्वादिभिरुच्यते ॥ २५७ ॥ विसृज्येति । तान्-ब्राह्मणानविसृज्यानन्यमनाःशुचिःसनदक्षिणांदिशमीक्षमाणइमान्वक्ष्यमाणान् अभिलषितार्थान्पितॄन्प्रार्थयेत् ॥ २५८ ॥ दातारइति । श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्त्विति ॥ अस्मत्कुले बहवोदानशीलाभवन्तु वेदाश्चाध्ययनाध्याप-नावबोधेज्यारूपेण वर्धन्तां संततिपुत्रादिवर्धन्ताम् । हव्यकव्यविषयाय श्रद्धास्माकंमाव्यपगमत् । बहुदेयंचनोस्त्विति दानार्थंच धनंबहस्माकंभवतात् ॥ २५९ ॥ एवमिति । एवंत्रींस्तु तस्माद्धविःशेषादित्यादि प्रक्रियया पिण्डनिर्वपणंकृत्वा तानपिण्डाननन्तरंप्रक्रान्तवरमाचनानन्तरंगोविप्राजानामन्यतममाशयेदग्नावुदकेवाक्षिपेत् ॥ २६० ॥ पिण्डनिर्वपण-मिति । पिण्डदानं केचिदाचार्याःब्राह्मभोजनादर्वाक्कुर्वते । अन्येपक्षिभिःखादयन्तीदंपूर्वप्रतिपत्तिवैकल्पिकम् । अप्यन्ये-अप्युदकप्रक्षेपं पक्षिभक्षणंवैकल्पिकमिच्छन्ति ॥ २६१ ॥ पतिव्रताधर्मपत्नीति । मनोवाक्कायकर्मभिर्धर्मार्थकामेषु प-तिरेव मया चरणीयइतिव्रतं यस्याः सा पतिव्रता धर्मपत्नी प्रथमोढा सवर्णा श्रद्धावती पुत्रार्थिनी तेषां- पिण्डानांमध्यपि-ण्डंसम्यगाधत्तपितरोगर्भमित्यादिसूत्रकारोक्तमन्त्रेणाद्यात् ॥ २६२॥ आयुष्मन्तमिति । धर्मानुष्ठानरतंद्वादशाध्यायवक्ष्य-माणसत्त्वाख्यगुणयुक्तं चिरायुषं ख्यातिमन्तमतीतार्थस्मरणयुक्तं हिरण्यादिधनयुक्तंसंततिवन्तं एवंविधगुणयुक्तंपुत्रंजनय-ति ॥ २६३ ॥ प्रक्षाल्यहस्तावाचम्येति । ज्ञातिभ्यःसत्कृतंदत्वाब्राह्मणानपिपूजयेत् ॥ तदनु ह-स्तौप्रक्षाल्याचम्य ज्ञातीन्पितृपक्षान् प्रति गच्छतीति ज्ञातिप्रायमन्नंकुर्यात् । तेभ्यःपूजापूर्वकंदत्वामातृपक्षोदिभ्योपिसंपू-

जांदद्यात् ॥ २६४ ॥ **उच्छेषणमिति** । तद्ब्राह्मणोच्छिष्टंतावन्नमार्ष्टव्यंयावद्ब्राह्मणाननिर्गताः । संपन्नेच श्राद्धे वैश्वदेवायान्वहिकंसमग्रंकुर्यात् । यथाव्यासेनोक्तम् ॥ यदाश्राद्धंपितृभ्यस्तुदातुमिच्छतिमानवः ॥ वैश्व- देवंतदाकुर्यान्निवृत्तेश्राद्धकर्मणि इतिधर्मोव्यवस्थितः ॥ २६५ ॥ **हविर्यच्चिररात्रायेति** । यत्पितृभ्योयथा- चदत्तंहव्यकव्यमन्नंदीर्घकालतृप्तये सम्यक्प्रतिपद्यते यच्चान्नंतत्तृप्तयेतन्निःशेषेण प्रवक्ष्यामि ॥ २६६ ॥ **तिलैरि-** ति । **द्वौमासौमत्स्यमांसेनेति** । **षण्मासांश्छागमांसेनेति** । तिलधान्ययवमाषोदकमूलफलानांश्राद्धेन दत्तेन मनु- ष्याणांमासंपितरस्तृप्यन्ति । द्वौपाठीनादिमत्स्यमांसेन त्रीन्मार्गेणमांसेन चतुरोमेषसंबन्धिनापञ्चभक्ष्यपक्ष्योद्भवेन षड्छा- जेन सप्तचित्रमृगसंबन्धिना अष्टौसारङ्गमांसेन नवशंबराख्यमृगजेन ॥ २६७ ॥ २६८ ॥ २६९ ॥ **दशमासांस्तु-** **तृप्यन्तीति** । दशमासानारण्यसूकरमहिषमांसैस्तृप्यन्ति । एकादशशकशशकच्छपमांसेन ॥ २७० ॥ **संवत्सरं-** **तुगव्येनेति** । संवत्सरंपुनर्गव्येनक्षीरेण वार्ध्रीणसस्यच ॥ त्रिःपिबंत्विन्द्रियक्षीणंश्वेतंवृद्धमजापतिं । वार्ध्रीणसं- तुतंप्राहुर्याज्ञिकाःपितृकर्मणि ॥ इत्येवंनिगमे पठितस्य मांसेनद्वादशवार्षिकीतृप्तिर्भवति । पिबतःकर्णजिव्हंयस्य जलंस्पृशतिसत्रिःपिबइत्रिःपिबः ॥ २७१ ॥ **कालशाकंमहाशल्कमिति** । कालशाकाख्यंशाकं महाशल्का- ख्योमत्स्यभेदः शकलीचितचिमइत्यायायुर्वेदप्रसिद्धः । खड्गोगण्डकोलोहोरक्तच्छागः । तयोरामिषंमांसंमधुमाक्षिकं- मुन्यन्नानि आरण्यानि सर्वाण्येतान्यनंततृप्त्युत्पादनाय संपद्यन्ते ॥ २७२ ॥ **यत्किंचिन्मधुसंयुक्तमिति** । यत्किंचिदप्र- तिषिद्धंमधुसंयुक्तंवर्षाकालेमघात्रयोदश्यांहस्तसंधिनीछायायस्मिनप्रदेशेप्राचींदिशंगतातत्रतस्यांछायायांमधुयुक्तं पायसं- दद्यादिति ॥२७३॥ **अपीति** ॥२७४॥ **यद्यद्ददातिविधिवत्सम्यक्श्रद्धासमन्वितं ॥ तत्तत्पितृणांभवतिपरत्रानं-** **त्यमव्ययं** । यद्यदप्रतिषिद्धंसम्यक्रूपश्रद्धायुक्तोयथाशास्त्रंदद्यादिति तत्र सर्वकालमनपचयंपरलोके पितॄणांभवति अन्नंचस- त्यपि द्विमासाद्यनन्ततावधितृप्तिवदेवंकुर्वन्मासानुमासिकमितिनोदनात्।शास्त्रिकगोचरत्वेन चामुष्यार्थस्य स्थेतृप्तानामाप्या- यनकपुत्रोअपहृतकव्यतृप्तिसामर्थ्यात् प्रतिमासमेतदवश्यंकर्तव्यम॥२७५॥**कृष्णपक्षइति** । कृष्णपक्षे दशमीप्रभृतिचतुर्दशीं वर्जयित्वा तिथयःश्राद्धे प्रशस्ताः युक्तामहाफलाःपवित्राःप्रशस्तानतथेतराइति ॥ २७६ ॥ **युक्ष्विति** । युग्मासु तिथिषु- द्वितीयाचतुर्थ्यादिषु युग्मेषु नक्षत्रेषु भरणीरोहिण्यादिषु श्राद्धंकुर्वन्सर्वानभिलषितान्कामानवाप्नोति । अयुग्मासु तिथिषुप्रतिपत्तृतीयाद्यासु अयुग्मेषु नक्षत्रेषु अश्विनीकृत्तिकादिषु श्राद्धेषु पितॄन्पूजयन्श्रुतधनादिपरिपुष्टांसन्ततिंप्राप्नोति ॥ २७७ ॥ **यथेति** । चैत्रसिताद्यामासाइति ज्योतिःशास्त्रदर्शनेनापरपक्षः शुक्लपक्षाच्छ्राद्धे विशिष्टफलोभवति एवं । श्राद्धसं- बन्धिपूर्वाह्णभागादपराह्णभागोविशिष्टफलोभवति । विशिष्यतइतिवचनात् कदाचित् पूर्वाह्णेपिश्राद्धंकर्तव्यमिति प्रतीयते दृष्टान्तस्यच दृष्टान्तदानाद्यथानुपपत्त्यैवसिद्धिर्बोद्धव्या । नह्यसिद्धस्यदृष्टान्तंनोपपद्यते ॥ २७८ ॥ **प्राचीनावीतिने-** ति । सर्वेण प्राचीनावीतीत्युक्तप्राचीनावीतयुक्तेनानलसेन दर्भपवित्रहस्तेन अपसव्यपितृतीर्थेन यथाशास्त्रंसम्यक्पित्र्यं कर्मयावज्जीवंकार्यम् ॥ २७९ ॥ **रात्राविति** । रात्रौश्राद्धंनकुर्वीत श्राद्धस्यध्वंसनसामान्याद्राक्षसीचासौ मन्वादिभिःक- थिता । तथासन्ध्ययोरादित्येचिरोदितइति रात्र्यादौ निषेधंकुर्वन्नपराह्णादन्यत्रापितिथिच्छेदग्रहणाद्यपेक्षया श्राद्धमस्ती तिज्ञापयति मासानुमासिकश्राद्धाद्यसंभवेन ॥ २८० ॥ **अनेनेति** । अनेनोक्तविधानेन संवत्सरस्य मध्ये त्रीन्वारान्हेमन्त ग्रीष्मवर्षासु श्राद्धंकुर्वीत । पञ्चयज्ञमहायज्ञमयभवंपुनःप्रत्यहंकुर्वीत ॥ २८१ ॥ **नपैत्र्ययज्ञियोहोमइति**

अग्नेःसोमयमाभ्यामित्येवंपितृयज्ञाङ्गभूतोहोमोलौकिके श्रौतस्मार्तव्यतिरिक्तेग्नौ शास्त्रेण न चोद्यते। आहिताग्नेश्च द्विजातेरामावास्यकर्मणा विना कृष्णपक्षदशम्यादौ श्राद्धंन विधीयते। मृताहश्राद्धादेस्त्वनिषेधः तस्य नैय्यमिकत्वेन चोदितत्वात् ॥ २८२ ॥ पूर्वोक्तपाञ्चयज्ञिकश्राद्धासंभवे **यदेवेति**। स्नात्वोदकतर्पणंयत्पितॄणांब्राह्मणः करोति तेनैव सर्वपितृयज्ञानुष्ठानफलंप्राप्नोति। द्विजोत्तमग्रहणंप्रदर्शनार्थं त्रयाणांप्रकृतत्वात् ॥ २८३ ॥ **वसूनिति**। यएते पितृपितामहप्रपितामहाः तान्वसुरुद्रादित्याख्यानदेवानिति मन्वादयोवन्दति। यस्मात्पित्रादयोवस्वादयइत्येतानादिभूताश्रुतिः। पितृद्वेषान्नास्तिक्याद्यःपितृकर्मणि न प्रवर्तेत तंप्रतिप्रवर्तनार्थंदेवतात्वाध्यारोपेण पितॄणां स्तुतिवचनम् ॥ ३८४ ॥ **विघसाशीति**। सर्वदाविघसभोजनःस्यादित्येतत्यज्ञशेषभुक्तुल्यत्वापादने स्तुत्यर्थमस्यपुनर्वचनम्। सर्वदा चामृतभोजनःस्यादित्योतद्यज्ञशेषभुक्तुल्यत्वापादनेन स्तुत्यर्थमस्यपुनर्वचनम। सर्वदा चामृतभोजनःस्यादप्रसिद्धत्वाद्विघसामृतेनिरूपयति। आतिथ्यादिभुक्तशेषंविघसमुच्यते यज्ञावशिष्टंपुरोडाशाद्यमृतमिति ॥ २८५ ॥ **एतदिति**। एतत्पञ्चयज्ञभवमनुष्ठानंसर्वंयुष्माकमुक्तं इति। पितृकर्मणोनन्तरंव्यवहितकरणोपसंहारोमङ्गलार्थत्वादिदानींब्राह्मणसंनिधिमीनां अमृतादीनांजीविकानां अनुष्ठानंश्रूयतामिति ॥२८५॥ इतिश्रीभट्टमाधवात्मजगोविन्दराजविरचितायांमनुटीकायांमन्वानुसारिण्यांश्राद्धविधिनामतृतीयोध्यायः ॥ ३ ॥ श्रीकृष्णार्पणमस्तु ॥

---

# ॥ अथचतुर्थोऽध्यायः ॥



**ॐनमःशिवाय ॥** ॥ ब्रह्मचर्यपूर्वकंगृहाश्रममनुतिष्ठतोवक्ष्यमाणावृत्तयो भवन्तीत्येतत्प्रतिपादयितुमुक्तंब्रह्मचर्यकालं वक्ष्यमाणंचगार्हस्थ्यकालमनुवदितुमाह **चतुर्थमिति** । वक्ष्यमाणमाश्रमसमुच्चयपक्षमाश्रितोब्राह्मणआद्यमायुश्चतुर्भागात्प्राक् षट्त्रिंशदाब्दिकं इत्यादि विशेषनोदनादूनातिरिक्तमपि गुरुकुलआसित्वा ततोद्वितीयमायुश्चतुर्थभागं गृहस्थस्तुयदापश्येद्वलीपलितमित्यादि वक्ष्यमाणविशेषादूनाद्यधिकमपि कृतभार्योगार्हस्थ्यमनुतिष्ठेत् । न चास्य कालसमर्पणार्थत्वंयुक्तमनियतत्वेन आयुषोस्यसाकांक्षत्वात् ॥ १ ॥ **अद्रोहेणेति** । वक्ष्यमाणवृत्तीनांमध्यात्भूतानुपपीडनेन याजीविकाशिलोञ्छादिना तदलाभेल्पोपपीडनेन याचितादिना या तां आश्रित्य भार्यादिभरणनित्यानुष्ठानसंपत्तौसत्यांविप्रोजीवेन्नचात्राल्पजिघांसाभ्यनुज्ञानंहिंसायानिषिद्धत्वात् । विप्रग्रहणंक्षत्रियादि व्युदासार्थम तयापिजीवेत् ॥२॥ **यात्रामात्रप्रसिध्यर्थमिति** । शास्त्रोक्तैःकर्मभिर्वक्ष्यमाणैर्ऋतादिभिरनिन्दितैः शरीरक्लेशपरिहारेण भार्याभरणनित्यानुष्ठानपूर्वकं प्राणवृत्तिसमाप्तपरिमाणमर्थसंग्रहंकुर्वीत । नाधिकमितिनियमः ॥ ३ ॥ कैस्तैःकर्मभिरित्यतआह **ऋतामृताभ्यामि** । ऋतादिभिरनापदि जीवेन्नत्वनापदि कदाचिदपि सेवयेत ॥ ४ ॥ ऋतादीनिअप्रसिद्धत्वाद्याख्यातुमाह **ऋतमिति** । **सत्यानृतमिति** । धान्यादिकणोच्चयनंशिलोच्चयनंच सत्यतुल्यफलत्वादृतंवक्तव्यम् । अप्रार्थितोपनतममृतवन्सुखहेतुत्वादमृतम् । प्रार्थितंपुनर्भैक्ष्यंमरणकल्पपीडानुभवान्मृतम् । कर्षणंच भूमिंभूमिशयांश्चैव हन्ति काष्ठमयोमुखमार्तं बहूनांमरणनिमित्तत्वात्प्रकर्षणमृतम् । वाणिज्याच्च सत्यासत्यव्यवहरणसाध्यत्वात्सत्यानृतं तेनापि कृषिवाणिज्येचास्वयंकृतेकुसीदंचेति गौतमस्मरणात् । अस्वयंकृतेनजीव्यन्ते सेवाचदीनदृष्टिसंदर्शनादिरूपतया श्ववृत्तिरित्युक्ता तस्मात्तांप्रकृतोब्राह्मणःपरिवर्जयेत् ॥ ५ ॥ ६ ॥ सच ब्राह्मणःशौचसङ्कोचधर्मतारतम्यापेक्षया **कुशीलधान्यकइति** । कोष्टकप्रमाणधान्यादिसंचयीवास्यात् द्वादशाहमात्रपर्याप्तधनः । उष्ट्रिकाप्रमाणधान्यादिसङ्ग्रहोवा षडहमात्र पर्याप्तधनः । त्र्यहमात्रपर्याप्तमीहायांचेष्टायांभवंधान्यादि यस्य तथावास्यात् । श्वोभवंधान्यादियस्य नाद्याह्निकधनोवास्या१ । एवंयात्रामात्रप्रसिध्यर्थं नित्यस्य सञ्चयसङ्कोचधर्मतारतम्यापेक्षयायमपवादः ॥ ७ ॥ **चतुर्णामिति** । एषांकुशूलधान्यकादीनांचतुर्णामपिब्राह्मणानांगृहस्थानांमध्याद्यःपश्चात्पठितःसप्रशस्यतरोबोद्धव्योयतोसौवृत्तिसङ्कोचसंयमधर्मातिशयेन स्वर्गादिलोकजिद्भवति ॥ ८ ॥ **षट्कर्मेति** । एषांगृहस्थानांमध्यात्कश्चिद्गृहस्थःपरिग्रहभूयस्त्वाद्यपेक्षया प्राकृतऋतादिकर्मा भवति । अन्यःपुनर्याजनाध्यापनप्रतिग्रहाणांब्राह्मणस्यनोदितत्वादेतैस्त्रिभिर्जीवितुंप्रवर्तते । अपरःपुनःप्रतिग्रहः प्रत्यवरइतिवक्ष्यमाणत्वात् तत्त्यागेन द्वाभ्यांयाजनाध्यापनाभ्यांजीवितुंप्रवर्तते । उक्तत्रयापेक्षया चतुर्थःपुनरध्यापनेन जीवति ॥ ९ ॥ **वर्तयन्निति** । शिलोञ्छाभ्यांजीवन्कर्मान्तरासंभवेसायंप्रातर्होमनिष्ठःसन् दर्शपूर्णमासानपार्वणाख्यान्यागान् केवलान्सर्वकालंकुर्यात् ॥ १० ॥ **नलोकवृत्तिंवर्तेतेति** । जीविकार्थंच विचित्रपरिहासादि न कदाचिदपि कुर्यादपितुशास्त्रनोदितत्वेनापापांश्रद्धावतींदंभादिव्याजशून्यां-

---

(१) पार्वणाख्यान्=पार्वायणाख्यान् ( गौ० २,५ )

ब्राह्मणवृत्तिमनुतिष्ठेत् ॥ ११ ॥ संतोषमिति । यःसमः स्वर्गादिदृष्टादृष्टसुखार्थी सोपगतविशेषस्पृहःसन्नात्मकुटुंबनित्यानुष्ठानमात्रपर्याप्तसंचयएव धने प्रकृष्टांनिवृत्तिमाश्रित्य धनार्जनंसचंयकुर्यात् । यस्मात्सन्तोषप्रभवंसमस्वर्गादिदृष्टादृष्टसुखं असंतोषःपुनर्दृष्टादृष्टदुःखस्यमूलम् ॥ १२ ॥ अतइति । आसांमृतादीनांमध्यादन्यतमया वृत्त्या केवलया षट्कर्मैकोभवत्येषामित्याद्युक्त्वात् वृत्त्यन्तरसहितया वाजीवन् स्नातकोब्राह्मणःस्वर्गायुःख्यातिनिमित्तानीमानि वक्ष्यमाणानि व्रतानीदंमया कर्तव्यमिदंनेत्येवंमनःसंकल्पविशेषात्मकानि सर्वदा धारयेत् । न च फलश्रवणेप्येषामनित्यतापत्तिरेतावताहैनसा अयुक्तोभवतीतिश्रुतौ नित्यत्वेनाम्नानात् ॥ १३ ॥ वेदोदितमिति । श्रौतंवेदोदितंस्मार्तमपिचवेदमूलत्वाद्वेदोक्तंस्वकं यद्यस्यच उदितंकर्म नित्यं न काम्यं तदनलसःसन्कुर्यात् यस्माद्यथाशक्ति कुर्वन्नित्यकरणात्पापक्षयानुत्पत्तिःस्यात् काम्याकरणाच्चाफलेहेतुधर्माभावेसति शुभाशुभकार्याभावान्मोक्षंप्राप्नोति ॥ १४ ॥ नेति । नकल्पमानेष्वर्थेष्विति । गीतादिनार्थान्नार्जयेत् । नाप्ययाज्ययाजनादिना नचावश्यकर्तव्यसमर्थेषु धनेषु सत्सु नाप्यात्मकुटुंबधर्मावसादेपि उपायान्तरसंभवे सति जातिकर्मदुष्टादुपायान्तराभावे वापद्यसत्प्रतिग्रहंवक्ष्यति ॥ १५ ॥ इन्द्रियार्थेष्विति । चक्षुरादि ग्राह्येषु रूपादिषु सर्वेषूपभोगहेतोःसङ्गंनकुर्यात् । अप्रतिषिद्धानामपिचैतेषांस्वदारगमनादीनामतिशयप्रसङ्गमस्थिरत्वादिदोषसंभावनया मनसा सम्यक् निवर्तयेत् ॥ १६ ॥ सर्वानिति । यथातथापियत्नस्त्विति । येनकेनचिदुपायेनात्मादीन् बिभ्रद्वेदाध्ययनविरुद्धानप्रतिषिद्धानपि विषयोपभोगादीनर्थान् परित्यजेत् । यस्मात्साब्राह्मणस्यकृतकृत्यता यत्स्वाध्यायपरत्वम् ॥ १७ ॥ वयसइति । वयसोनष्टानस्यधनस्यश्रुतस्य कुलस्य आनुरूप्येण वेषकथाबुद्धीराचरन् लोकेव्यवहरेत् । तद्यथा स्नानस्रगनुलेपनादिकरणंत्रिवर्गानुसारिणीच वाङ्मनसीत्येवंकर्मादिष्वपि योज्यम् ॥ १८ ॥ बुद्धिवृद्धिकराणीति । वेदाविरुद्धन्यायशास्त्रादीनि क्षिप्रंबुद्धिपाटवजनकानि धनार्थानि चौशनस्यादीनि हितानि च दृष्टोपकारकादीन्यायुर्वेदादीनि अनवगतशब्दार्थपर्यायकथनेन वेदार्थबोधकान्निगमाख्यान्ग्रंथान्नित्यंपर्यालोचयेत् ॥ १९ ॥ यथेति । यस्माद्यावत्पुरुषःशास्त्रंसम्यक्विविनक्ति तावत्तनद्विशेषेण जानाति शास्त्रान्तरविषयमपि चास्य विज्ञानमुज्ज्वलंभवति॥२०॥ ऋषियज्ञमिति। स्वाध्यायादीन्यथाशक्ति न परित्यजेदिति उक्तपञ्चयज्ञाभिधानंवक्ष्यमाणेन्द्रियसंपाद्यत्वकथनार्थम्॥२१॥ एतानिति। बाह्याभ्यन्तरयज्ञोपदेशकशास्त्रज्ञाःकेचिन्मनुष्याः ज्ञानबलान्नित्यानुष्ठानार्थमप्युप रतधनचेष्टाएतान्महायज्ञानिन्द्रियेष्वेव सर्वकालंसंपादयन्तीन्द्रियाण्यग्न्यातिथ्यादिरूपतया तत्सङ्गंवागाहुत्यादिरूपत्वेन भावयन्तित्वैतानसंपादयन्ति ॥ २२ ॥ वाचीति । अन्येपुनर्वाचिप्राणाख्येच वायावक्षयफलांयज्ञसंपत्तिमन्यमानाअभिधानकाले वागग्नौप्राणाहुतिंजुहति तूष्णींभावकाले च प्राणाग्नौ वागाहुतिजुह्वत्येवमनवरतंभावयन्तआसते । तथाचकौषीतकिरहस्यब्राह्मणम् ॥ यावद्वैपुरुषोभाषते नतावत्प्राणितुंशक्नोति प्राणंतदावाचि जुहोति यावद्वैपुरुषःप्राणिति नतावद्भाषितुंशक्नोति वाचंतदाप्राणेजुहोति एतेअनन्तेअमृतेआहुतीजाग्रत्स्वपंश्चसततंजुहोत्यथयाअन्याआहुतयोन्तवत्यस्ताः कर्ममय्योहिभवन्त्येवंतद्धस्मैतत्पूर्वेविद्वांसोग्निहोत्रंजुहवांचक्रुरिति ॥ २३ ॥ ज्ञानेनेति । अपरे पुनर्विप्राएषांयज्ञानांविद्वान्यजते विद्वान्याजयतीत्येवमवबोधमूलमनुष्ठानं ज्ञानचक्षुषा शास्त्रेणपश्यन्तोविज्ञानबलादेतान्यज्ञानेतद्विषयसम्यगवबोधेनैव यावज्जीवंसंपादयन्ति ।

---

( १ ) ष्ये=ष्वे ( गो० ५ ) ( २ ) स्यात्=स्यां ( गो० ३,५ )

तथा च योह्येवंविद्वानेतत्कर्मकुरुते योवै तदेवंवेदेतिब्राह्मणम् ॥ २४ ॥ **अग्निहोत्रंचेति** । उदितहोमिपक्षेदिनादौ दिनान्तेहोमंकुर्यात्तथा अनुदितहोमिपक्षेरात्र्यादौ रात्र्यन्तेच होमंकुर्यात् । तथाकृष्णपक्षान्ते दर्शाख्येन कर्मणा शुक्लपक्षान्तेपौर्णमासाख्येनयजते ॥ २५ ॥ **सस्यान्तइति** । प्राक्संचितधान्यादिक्षये यदावर्षस्यतृप्तः स्यादथाग्रयणेनयजेत शरदिनवान्नाचितिसूत्रकारवचनाद्द्रियमानधान्योपि चाग्रयणेन यजेत । ऋतुःसंवत्सरइत्यस्मिन्दर्शनेनचतुर्षुचतुर्षुमासेष्वृत्वन्तेऽध्वरैः चातुर्मास्याख्यैःकर्मभिर्यजेत । पशुबन्धाख्येनकर्मणा उत्तरायणदक्षिणायनादौ यजेत । वर्षान्तेचज्योतिष्टोमादिना सोमयागेनेति ॥२६॥ **नेति** । आहिताग्निर्द्विजोदीर्घायुर्जीवितुमिच्छुराग्रयणमकृत्वा नवान्नंपशुयागंवाकृत्वा मांसंनाश्नीयात् ॥२७॥ **नवेनेति** । यस्मान्नवसस्येन पशुदानेनचानिष्ट्वा अग्नयोनवान्नमांसानि कांक्षिणोस्याग्न्याहितस्य प्राणानेव भक्षयितुमिच्छन्ति । तस्मादाग्रयणपशुयागौ कर्तव्यौ ॥ २८ ॥ **आसनाशनशय्याभिरिति** । आसनादनादिभिर्यथाशक्ति अतिथिपूजयेदित्युक्ताऽऽतिथ्यनुवादोमहायज्ञप्रसङ्गेन वक्ष्यमाणःपाखण्ड्यादिनिषेधार्थः ॥ २९ ॥ तथाचाह **पाखण्डिनइति** । रक्तांबरादिलिङ्गधारिणःपरवृत्तिजीवनरतान्बिडालवृत्तिकान्बकवृत्तिकान्वक्ष्यमाणलक्षणानशठानश्रद्दधानान्वेदबाह्यतर्कव्यवहारिणोवाङ्मात्रेणापि पूजयेदिति पूजापूर्वकान्नदानानिषेधोदानमात्रंतुशक्तितोऽपचमानेभ्योदातव्यमितिवक्ष्यति ॥ ३० ॥ **वेदविद्याव्रतस्नातानिति** । वेदविद्याव्रतस्नातानित्यनेन वेदस्नातकव्रतस्नातकविद्याव्रतस्नातकत्वेनत्रिःप्रकाराअपि स्नातकागृह्यन्ते । यथाहारीतः ॥ समाप्यवेदमसमाप्यव्रतानियःस्नाति सः वेदस्नातकः । असमाप्य वेदंसमाप्यव्रतानि यः स्नातिसव्रतस्नातकः । उभयंसमाप्ययःस्नाति सविद्याव्रतस्नातकः । इतितांस्तथास्नातकग्रहणेन गृहीतानप्यतिशयार्थित्वेनपृथङ्निर्दिष्टान् श्रोत्रियानगृहस्थानहव्यकव्येन पूजयेदेतद्विपरीतांस्तुवर्जयेदितीदंपाखण्ड्यादिनिषेधदार्ढ्यार्थम् । श्रोत्रियादीनांपुनरभिधानंपूजापूर्वकमन्नंपाखण्ड्यादिभ्योनदेयम् ॥ ३१ ॥ अन्नमात्रंपुनः **शक्तितइति** । गृहस्थेन पाकरहितेभ्यःपाखण्ड्यादिभ्योयथाशक्त्याऽन्नंदेयं स्वकुटुंबानुपरोधेन वृक्षपर्यन्तेभ्योदोहृदादिदानेन संविभागः कर्तव्यः ॥ ३२ ॥ **राजतइति** । स्नातकः क्षुधावसादंगच्छन् अन्यजातिप्रतिग्रहसंभवेपि क्षत्रियाद्राज्ञः शास्त्रानुवर्तिनोयाज्यशिष्याभ्यांवा प्रथमंलिप्सेत नत्वान्यस्माद्द्विजातेरपि तदसंभवेपुनरन्यस्माद्द्विजातेर्गृह्णीयात् अनापद्विहितोपायासंभवे पुनः सर्वतः प्रतिगृह्णीयादित्यापद्धर्मंवक्ष्यति । राज्ञोमहाधनत्वाद्याज्यान्तेवासिनोः सुकृतोपकारत्वादिदंप्रथमधनग्रहणंनियम्यते । एवंचानापदि प्रथमराजयाज्यशिष्यव्यतिरिक्तधनग्रहणनिषेधार्थमिदंवचनमतएवोक्तंनत्वन्यतइति यत्तु संसीदन्नितिलिङ्गादापद्विषयतामस्याहुस्तदसत्प्रकरणान्न च धनाभावमात्रमापदुच्यतेऽपि तु धनाभावे सति विहितोपायपरिक्षयोन्यथा सद्यःप्रक्षालकस्यापद्धर्माआविर्भवेयुरापद्विषये चास्य न त्वन्यतइति । एतत्सर्वतः प्रतिगृह्णीयादित्यनेन विरुध्येत । यत्तु ॥ सीदद्भिः कुप्यमिच्छद्भिर्धनंवा पृथिवीपतिर्याच्यः स्यादिति ॥ तदापत्प्रकरणात् क्षत्रियाद्राज्ञः प्रतिग्रहार्थमतएवतत्रपृथिवीपतिग्रहणं इह तु राजग्रहणम् । एवंच राजादिधनसंभवेसति ॥ ३३ ॥ **नेति** । स्नातकोब्राह्मणोविद्वत्त्वात्प्रतिग्रहसमर्थोराजादिधनसंभवे सति क्षुधावसादं कदाचित् गच्छेन्न च संभवे सति जीर्णमलिनवसनःस्यात् ॥ ३४ ॥

---

(१) जाति=द्विजाति (गौ० २, ५).

**कृत्तकेशनखश्मश्रुरिति** । लूनकेशनखश्मश्रुः शमनान शुक्लवासाबाह्यान्तरशौचोपेतोवेदाभ्यासशीलऔषधोपयोगाद्विरतः स्यात् ॥ ३५ ॥ **वैणवीमिति** । वेणुदण्डमुदकसहितकमण्डलुंयज्ञोपवीतंदर्भमुष्टिरुचिरसौवर्णकुण्डले धारयेत् । यज्ञोपवीतकमण्डल्वोरग्नीन्धनंभैक्षचर्यामित्यनेन च गृहस्थादीनामनुवृत्तिसिद्धौ स्नातकव्रतार्थंपुनर्ग्रहणमेवमन्येषामपि न चोच्छिष्टः कचिद्व्रजेदित्येवमादीनांपुनर्ग्रहणंविज्ञेयम् ॥ ३६ ॥ **नेति** । उदयास्तमनराहुग्रस्तोदकप्रतिबिंबमध्याह्नवर्तिनं आदित्यं कस्मिंश्चिदपि नेक्षेत ॥ ३७ ॥ **नलङ्घयेदिति** । वत्सबन्धनरज्जुंन लङ्घयेत् । वर्षति न धावेन्नशीघ्रंगच्छेत् । उदके च स्वप्रतिबिंबंनेक्षेतेत्येवंनिश्चयः ॥ ३८ ॥ **मृद्गामिति** । प्रस्थितःसन्मस्वोपस्थितानुद्धृतमृद्गोपशादिकृतदेवताब्राह्मणघृतमाक्षिकचतुष्पथाश्वत्थादिख्यातवृक्षान्दक्षिणहस्तमार्गेण कुर्यात् ॥ ३९ ॥ **नोपगच्छेदिति** । कामार्त्तोपि उदक्यांन यायान्नाप्येकशय्यायांतया सह शयीत ॥ ४० ॥ **रजसेति** । यस्माद्रजस्वलांस्त्रियंपुंसः उपगच्छतः प्रज्ञावीर्यादीनि नश्यन्ति तस्मात्तांनोपेयात ॥ ४१ ॥ **तामिति** । तांपुनः रजस्वलांन गच्छतः प्रज्ञादीनि वर्धन्ते तस्मात्तांन व्रजेदिति ॥ ४२ ॥ **नाश्नीयादिति** । भार्यया सह नाद्यात् । यत्पुनर्नित्यमास्यंशुचिस्त्रीणां इति तत्स्त्रियश्चरतिसंसर्गइतिगौतमस्मरणात् रतिकालविषयमेव । न चाप्येनांभुञ्जानांक्षुवन्तींवायुनाचास्यविकाशंकुर्वाणां प्रसृतचरणत्वादिना वाऽनियत्रगावस्थांपश्येत् ॥ ४३ ॥ **नाञ्जयन्तीमिति** । तथास्वनेत्रयोरञ्जनददतींघृताभ्यक्तांनग्नांचान्यत्र मैथुनादित्यापस्तंबस्मरणात् नेक्षेतापत्यंच प्रसुवतींवीर्यकामोब्राह्मणोन पश्येत् ॥ ४४ ॥ **नान्नमिति** । एकवस्त्रोनाश्नीयात् न च कौपीनाच्छादनंविना स्नायात् । मूत्रपुरीषे च मार्गभस्मगोष्ठेषु न कुर्यात् ॥ ४५ ॥ **नफालकृष्टइति** । तथा फालकृष्टे उदके इष्टिकाचिते चाग्न्यधिकरणे पर्वते देवाङ्गणे पिपीलिकाकृष्टे च मृत्संचये च न कदाचित्कुर्यात् ॥ ४६ ॥ **नससत्त्वेष्विति** । तथा सप्राणिषु बिलेषु न कुर्यान्न व्रजन्नस्थितो वा नापि नदीतीरमाश्रित्य कुर्यात् पर्वतशृङ्गेवा पर्वतग्रहणादेव च पर्वतमस्तकनिषेधसिद्धौ पुनर्वचनंशृङ्गादन्यत्र पर्वते विकल्पार्थंन च तुल्यविकल्पः तथाविधस्वेच्छासिद्धत्वात्सामान्यप्रतिषेधानर्थक्यंतस्मादत्यन्तार्त्तस्य पर्वते नदोषोऽन्यदा तुदोषइतिव्यवस्थितोयंविकल्पः ॥ ॥ ४७ ॥ **वाय्वग्निब्राह्मणादित्यमिति** । वाय्वग्निब्राह्मणादित्योदकगाअवलोकयन् नकदाचिन्मूत्रपुरीषोत्सर्गंकुर्यात् । वायोश्च सन्मुखीभावोवलोकनम् ॥ ४८ ॥ **तिरस्कृत्येति** । काष्ठपत्रलोष्टतृणैर्भूमिमन्तर्धाय मौन्युच्छिष्टचाण्डालादिस्पर्शप्रायश्चित्तरहितः आच्छादितगात्रः प्रावृतशिरामूत्रपुरीषे कुर्यात् ॥ ४९ ॥ **मूत्रोच्चारसमुत्सर्गमिति** । मूत्रपुरीषोत्सर्गंदिवासन्ध्ययोश्चोत्तराभिमुखोरात्रौ दक्षिणाभिमुखः कुर्यात् ॥ ५० ॥ **छायायामिति** । रात्रावहनि वा छायायांरात्रावन्धकारेऽहनिवानीहाराद्यन्धकारएतेषु दिङ्मोहे सति तथाच वाय्वादिकृतप्राणाविनाशसंशयेषु[1] यथेष्टमुखोमूत्रपुरीषे कुर्यात् ॥ ५१ ॥ **प्रत्यग्निमिति** । अग्न्यादित्यसोमांभोब्राह्मणगोवाय्वभिमुखंमूत्रपुरीषे कुर्वतः प्रज्ञानश्यतएव तन्नकर्तव्यमिति वाय्वग्निविप्रमित्यस्य फलकथनंसोमाभिमुखंच अतएव निषेधसिद्धिः पूर्वत्रापठितत्वात् ॥ ५२ ॥ **नाग्निमिति** । मुखवायुनाग्निंन धमेन्न नग्नांपरयोषितमीक्षेतेतिगौतमस्मरणात् । मूत्रादि अग्नौ न निक्षिपेत् । पादौनतत्रतप्रतापयेत् ॥ ५३ ॥ **अधस्तादिति** । नचैनंपादतःकुर्यान्नप्राणिवधमाचरेत्॥

---

(१) संशयेषु=संभयेषु ( गौ० ५ )

तथाखट्वादिष्वग्निमधस्थान्नस्थापयेत् । नाप्येनमुल्लङ्घयेत् । न च पाददेशतः कुर्यात्प्राणिपीडाकरंचनाचरेत् ॥ ५४ ॥ नाश्नीयादिति । सन्ध्याकालेऽशनगमनस्वापान्नकुर्यात् । भूमिंसर्वदा नखादिना न लिखेत् । मालांचशिरसःस्वयंनापनयेत् ॥ ५५ ॥ नाप्स्विति । मूत्रपुरीषश्लेष्मामेध्यलिप्तरुधिरविषाण्युदके न क्षिपेत् ॥ ५६ ॥ नैकःस्वप्यादिति । उद्वसितगृहे एकोन शयीत । वित्ताद्यभ्यधिकंसुप्तंच न प्रबोधयेत् । रजस्वलया सह संभाषणंन कुर्यात् । यज्ञंचाकृतवरणऋत्विक् नगच्छेत् । दर्शनायतुकाममिति गौतमः ॥ ५७ ॥ अग्न्यागारइति । अग्निशालायांगवांगोष्ठे निवासे ब्राह्मणसमीपे स्वाध्यायभोजनकालयोर्दक्षिणंपाणिमाबाहोर्वासस उद्धरेत् ॥ ५८ ॥ नवारयेदिति । गांपिबन्तीनंनिवर्तयेन्नापिपरकोयक्षीरादिपिबन्तींतस्य कथयेन्नच द्युलोके इन्द्रधनुर्दृष्ट्वा शारूज्ञोन्यस्य दर्शयेत् ॥ ५९ ॥

[ नमस्कृत्वंव्रजेत्कामंदिदृक्षुर्यज्ञकर्मच ॥ कुलाकुलरहस्यार्थंसंचरेन्ननिमित्ततः ॥ १ ॥ ]

नाधार्मिकइति । अधर्मबहुलजनग्रामादौ अत्यर्थंव्याधिबहुले न वसेदेकश्चाध्वानंन यायात् । पर्वतेचदीर्घकालंन तिष्ठेत् ॥ ६० ॥ नशूद्रराज्यइति । शूद्रराज्यके देशे अधार्मिकजनैश्च बाह्यतःपरिवृते श्रुत्यादिबाह्यलिङ्गधारिभिश्चवशीकृते चाण्डालादिभिश्चोपद्रुते न निवसेत् ॥ ६१ ॥ नभुञ्जीतेति । उधृतस्नेहंपिण्याकादि नभुञ्जीत । तृप्तिंचनाचरेदतिप्रातर्दिनान्तेनभुञ्जीत । सायंप्रातश्च नतृप्तः स्यादपि तु एकस्मिन्काले तृप्तोपरस्मिन्साकाङ्क्षमश्नीयात् ॥ ६२ ॥ नकुर्वीतेति । दृष्टादृष्टानुपकारफलंव्यापारंनकुर्यात् । उदकंचाञ्जलिना न पिबेत् ऊर्वोश्चोपरिविन्यस्य मोदकानि न भक्षयेत् । निष्प्रयोजनंच किमेतत्स्यादितिकुतूहलपरोनकदाचित्स्यात् ॥ ६३ ॥ ननृत्येदिति । अशास्त्रितानि नृत्यगीतवादित्राणि न कुर्यात् । पाणिनाबाहुंनाभिहन्यात् । अव्यक्तदन्तध्वनिं न कुर्यात् चहर्षितः सन् खराविरावंनकुर्यात् ॥ ६४ ॥ नपादाविति । कांस्यपात्रे न कदाचिदपि पादौ प्रक्षालयेत्ताम्ररजतसुवर्णानांभिन्नमभिन्नंचेति न दोषइति पैठीनसिस्मरणात् । ततोऽन्यत्रभिन्नभाजने नाभिभुञ्जीत नापित्तल्लेखोत्पादके ॥ ६५ ॥ उपानाहाविति । उपानद्वस्त्रयज्ञोपवीताभरणमाल्यकमण्डलूनन्योपयुक्तान् नधारयेत् ॥ ६६ ॥ नाविनीतैरिति । अश्वमहिष्यादिभिर्गत्यादिधुर्वहनविनियुक्तैरदान्तैर्बुभुक्षाव्याध्यार्तैर्भिन्नशृङ्गाक्षिखुरैश्छिन्नपुच्छैर्नयायात् ॥ ६७ ॥ विनीतैरिति । सुशिक्षितैः पुनः क्षिप्रगामिभिर्देवमण्याद्यावर्तादियुक्तैः ककुदादिशून्यैः शोणादिवर्णसंपन्नैः स्वाकृतिभिः प्रतोदनात्यर्थं अव्यथयन् व्रजेत् ॥ ६८ ॥ बालातपइति । प्रथमोदितादित्यातपः शवधूमभग्नपीठाद्युपवेशनानि वर्ज्यानि नखलोमानि चात्मना नच्छिन्द्यात् दन्तैश्च नखान्नोत्पाटयेत् ॥ ६९ ॥ नमृल्लोष्टमिति । नाकारणंमृल्लोष्टंगृह्णीयात्तृणानि वा छिन्द्यादित्यापस्तंबस्मरणात् । निर्निमित्तंमृल्लोष्टंनगृह्णीयात् नखैस्तृणंनछिन्द्यात् यतःस्वकर्मणोदृष्टमदृष्टंफलंनोत्पद्यते यच्चागामिनि असुखावहंतन्नकुर्यात् ॥ ७० ॥ लोष्टमर्दीति । लोष्टतृणनखानांमर्दनच्छेदनखादनकृत्सूचकोऽशुचिश्चमनुष्योविनाशंक्षिप्रंयाति तस्मादेतानि न कर्तव्यानि भक्षणशुचित्वयोरतएवनिषेधः ॥ ७१ ॥ नविगृह्येति । साभिनिवेशंकथांनकुर्याद्वासश्च बहिर्माल्यंन धारयेत् । गोपृष्ठारोहणेन च गमनं पर्याणव्यवधानादि प्रकारेणापि धर्मापहम् ॥ ७२ ॥ अद्वारेणेति । प्राकाराद्यावृतंग्रामंगृहंवा द्वारव्यतिरिक्तप्रदेशेन नातिक्रम्य प्रविशेत् ॥ रात्रौच वृक्षतलावस्थानंदूरात्परिवर्जयेत् ॥ ७३ ॥ नाक्षैरिति । अक्षादिभिः केल्यर्थमपि नक्रीडेतात्मनाचोपानहौ पादव्यतिरेकेण न गृह्णीयात् । खट्वाव्यवस्थितश्च न भुञ्जीतनापि पा-

( १ ) महिष्यादिभिः=वृषभादिभिः ( गो०२,५ )

व्याप्यवहितहस्तमन्नमासने च पात्रमवस्थाप्य भुञ्जीत ॥ ७४ ॥ **सर्वमिति** । यत्किञ्चित्तिलसंयुक्तंकृशरादि तदस्त-मितेर्कैनाद्यात् । कौपीनाच्छादनरहितश्चास्मिन्लोकेनसुप्यादुच्छिष्टश्चनक्कचिद्यायात् ॥ ७५ ॥ **आर्द्रपादइति** । जलार्द्रपादो भोजनमुपक्रामेत् । आर्द्रपादःपुनर्नस्वप्यात् । आर्द्रपादोह्यश्नन्दीर्घमायुःप्रामुयादिति फलकथनमेतन्नचानित्य-तापत्तिः ॥ पञ्चार्द्रो भोजनंकुर्यात्प्राङ्मुखोमौनमास्थितः ॥ ननिन्देद्दत्तभक्ष्यांश्च स्वाद्वस्वादु न कुत्सयेत् ॥ इतिव्यासेन नित्यस्मरणात् ॥ ७६ ॥ **अचक्षुर्विषयमिति** । चक्षुर्गोचरेयोन भवति दुर्गमोदेशस्तंकदाचिदपि न गच्छेत् मूत्रपुरी-षेचनोदीक्षेत बाहुभ्यांनद्यादिनतरेत् ॥ ७७ ॥ **अधितिष्ठेदिति** । दीर्घमायुर्जीवितुमिच्छुः केशभस्मास्थिकपालिकाः कार्पासबीजतुषान्नाधिरोहेत् ॥ ७८ ॥ **नसंविशेदिति** । पतितचाण्डालपुल्कसाल्पबुद्धिगर्हितान्त्यावसायिभिः ग्रामा-न्तरनिवासिभिरपि कार्यार्थमेकप्रदेशे मुहूर्तमपि नासीतेति । नाधार्मिकेवसेद्ग्रामे इत्यादिभ्योभेदःपतितादयश्च दशमैका-दशाध्यायेवक्ष्यन्ते ॥ ७९ ॥ **नशूद्रायेति** । मतिरत्रधर्मस्यपृथगुपदेशात् दृष्टोपकारकोच्छिष्टहविष्कृतसाहचर्यात् वा ऽदृष्टार्थहितोपदेशंशूद्रस्य नकुर्यात् । उच्छिष्टंवादासशूद्राय न देयं यतोदासविषये उच्छिष्टमन्नंदातव्यमिति वक्ष्य-ति । यत्तु द्विजोच्छिष्टंतुभोजनमिति सभोक्तुरुपदेशोनदातुस्तथाहविरर्थंयच्चपुरोडाशादि तस्यदेवान्नानि हवींषि चेतिप्रतिषेधमुक्त्वातच्छेषस्य हविःशेषंचयद्भवेत । द्विजातीनांभक्ष्यतांवक्ष्यत्यतश्च तद्धविःशेषीभूतंशूद्रायनदेयं । तथेद मिदमदृष्टार्थंत्वयाकर्तव्यमितिशूद्रस्य धर्मनोपदिशेत् ॥ व्रतंचास्य प्रायश्चित्तंसाक्षान्नोपदिशेत्तथा चात्यन्तधार्मिकशूद्र-विषयेप्यङ्गिराः ॥ तथाशूद्रंसमासाद्य सदाधर्म पुरःसरं । अन्तराब्राह्मणंकृत्वाप्रायश्चित्तंसमादिशेदिति ब्राह्मणो-पदेशप्रणालिकया प्रायश्चित्तदानमाह नसाक्षादिति ॥ ८० ॥ **यइति** । यस्माद्यःशूद्रस्य धर्मंव्रते उपदिशति सब्राह्मणः-पापोत्पत्तिनिमित्तभूतेन तेनैव शूद्रेण सहातिमहत्त्वादसंवृताख्यंतमोन्धकारंप्रविशति । पञ्चके प्रकृते द्वयोः फलथनंप्रायश्चि-त्तगौरवार्थम् ॥ ८१ ॥ **नसंहताभ्यामिति** । संश्लिष्टाभ्यांपाणिभ्यांस्वशिरोन कण्डूयेत् । संहत वचनादसंहताभ्यांन-निषेधः एवंच सर्वत्र व्यावर्त्य ज्ञेयम् । उच्छिष्टहस्तादिना येन केनचिदपि शिरोन स्पृशेत् ॥ शिरसा विना च नि-त्यनैमित्तिक स्नाने न कुर्यात् । दृष्टार्थे त्वनिषेधः स्नानविधिनास्यैकवाक्यत्वात् ॥ ८२ ॥ **केशग्रहानिति** । केशग्रह-णप्रहारौ कोपेन मूर्धनि न कुर्यात् । सशिरस्कः स्नातस्तैलेन किंचिदप्यङ्गंनस्पृशेत् ॥ ८३ ॥ **नराज्ञइति** । राज्ञो-पत्ये जातिग्रहणमिति क्षत्रियएव राजन्यउच्यते तस्य संततिरपत्यंविशेषवचनात् क्षत्रियएव राजन्यप्रसूतिर्नराजन्यप्र-सूतिरराजन्यप्रसूतिरक्षत्रियस्तस्मादक्षत्रियाद्राज्ञः प्रकरणादनापदि न प्रतिगृह्णीयात् । तथा सौनिकतैलिकमद्यवणिजांप-ण्यस्त्रीव्यवहारेण च जीवतांनप्रतिगृह्णीयात् ॥ ८४ ॥ **दशसूनासममिति** । **दशध्वजसमावेश्यादशवेश्यासमोनृपः** ॥ सूना आघातनस्थानं दशसुसूनासु यावान्सौनिकस्य दोषस्तावान् चक्रवर्तिनि तैलिके । दशसु च तैलिकेषु या-वांस्तावान्ध्वजिनि । मद्यवणिजि दशसु ध्वजिषु यावांस्तावान्वेशवति । दशसु वेशवत्सुयावांस्तावान्नृपे । एवंचोत्तरोत्तर-निन्द्यातिशयदर्शनेनापदि पूर्वदातृसद्भावे उत्तरःपरिहरणीयः एवंचोक्तकलनया ॥ ८५ ॥ **दशसूनासहस्राणीति** । दशसू-नासहस्राणि यः सौनिकः स्वार्थे व्यापारयति तेन तुल्योराजा मन्वादिभिः स्मृतोऽतस्तत्संबन्धी प्रतिग्रहोनरकपातहेतु-त्वात् भीषणीयः॥८६ ॥ **क्षत्रियस्यापि च यइति** । कृपणस्य शास्त्रातिक्रमवर्तिनः राज्ञोयः प्रतिग्रहंकरोति सइमान् वक्ष्य-माणान् नरकान् यातनास्थानानि क्रमेण प्राप्नोति ॥८७ ॥ **तामिस्रमिति** । **संजीवनमिति** । **लोहशङ्कुमृचीशमिति** ।

अत्र यातीत्यनुवर्तते । तत्रान्धकाररूपस्तामिस्रोनिबिडान्धकारात्मकान्धतामिस्रोमहारौरवरौरवौ महाकलकलकल-कलात्मकौ । कालसूत्राख्योनरकोयत्र सर्पैर्बाधः । महानरकोयत्र महती सर्वप्रकारापीडा । संजीवनंयत्र बहुशः संजीव्यव्यापाद्यन्ते । महावीचिर्यत्र महाकल्लोलैर्नीयते । तपनोऽग्न्यादिसन्तापात्मकः । संप्रतापनः कुंभीपाकः । संघातोत्यन्तसंवृते प्रदेशे बहूनामवस्थानम् । काकोलंयत्र काकैर्भक्ष्यन्ते । कुड्मलंयत्र रज्जुभिः पीडनम् । पूतिमृत्तिकः पुरीषगन्धमृत्तिकः । लोहशङ्कुःसूचीभेदनंयत्र । ऋचीशंपिष्टपवनप्रक्षेपोयत्र । पन्थायत्राव्यते । शाल्मलीयत्र शाल्मलिकण्टकैस्तुद्यते । नदीयत्रनद्यापह्रियते । असिपत्रवनंयत्र करपत्रैर्विदार्यते । लोहचारकोयत्र निगडबन्धः ॥ ८८ ॥ ८९ ॥ ९० ॥ **एतदिति** । एतत् राजप्रतिग्रहफलंशास्त्रज्ञावेदाध्यायिनोब्राह्मणाजानन्तः परलोकदुःखाभावार्थिनोराज्ञोधनंनप्रतिगृह्णन्ति ॥ ९१ ॥ **ब्राह्मइति** । रात्रेः पश्चिमे मुहूर्ते प्रतिबुध्येत । ततोधर्मार्थावितरेतराविरोधेनार्जनार्थंविचारयेत्तथाधर्मार्थंतन्मूलभूतंकायक्लेशमियता कायाक्लेशेन इयान् धर्मोवार्ज्यतइत्येवंचिन्तयेत् वेदस्य च कः परमार्थिकोऽर्थः स्यादित्येवं तमपिचिन्तयेत् ॥ ९२ ॥ **उत्थायेति** । ततउषःकालेशयनादुत्थाय सति संभवे मेहनादि कृत्वा कृतवक्ष्यमाणशौचः संयतमनाउक्ते काले पूर्वापरे सन्ध्येअर्कदर्शनादावूर्ध्वमपि जपंकुर्वन्नुदितहोमी वर्तेतानुदितहोम्यपि होमंकृत्वा चासीत । आयुरादिदीर्घसन्ध्याफलविधानार्थमिदंपुनःसंध्याभिधानम् ॥ ९३ ॥ तथाचाह **ऋषयइति** । **प्रजामिति** । यस्मादृषयोदीर्घसन्ध्यानुष्ठानाद्दीर्घमायुः प्रजावन्तश्च यशः स्वर्गाताश्च कीर्तिमध्ययनादिसंपत्तीश्च प्राप्तवन्तः तस्मादेतत्कामेन दीर्घसन्ध्यानुष्ठानंकर्तव्यम् ॥ ९४ ॥ **श्रावण्यामिति** । श्रावणस्य भाद्रपदस्य वा पौर्णमास्यां उपाकर्माख्यंगृह्योक्तविधानेन कृत्वा ततः सार्धांश्चतुरोमासान् ब्राह्मणोयत्नवान् वेदानधीयीत ॥ ९५ ॥ **पुष्यइति** । येन श्रावण्यामुपाकर्मकृतंसद्विजोऽर्धपञ्चमेषुमासेषु पौषमासेतुपुष्यनक्षत्रे ग्रामाद्बहिर्निष्कम्यछन्दसामुत्सर्गाख्यंगृह्योक्तंकर्म कुर्याद्येन प्रौष्ठपद्यांकृतंसमाप्यशुक्लपक्षस्य प्रथमेहनि प्राप्ते पूर्वाह्णे वा कुर्यात् ॥ ९६ ॥ **यथाशास्त्रमिति** । एवमुक्तशास्त्रानतिक्रमेण छन्दसामुत्सर्गाख्यंकर्म ग्रामाद्बहिः कृत्वा ततउभयतोहनी पक्षाविव यस्यामध्यवर्तिन्याराज्यास्तांरात्रिंतमेवैकमहोरात्रमनध्यायंकुर्यात् ॥ ९७ ॥ **अतइति** । उत्सर्गानध्यायादूर्ध्वंशुक्लपक्षेषु संयमवान् वेदानधीयीत कृष्णपक्षे तु वेदाङ्गानि व्याकरणादीनि नियमितःपठेत् ॥ ९८ ॥ **नाविस्पष्टमिति** । सर्वदाविस्पष्टमव्यक्तंनपठेत् तथाशूद्रजनसंनिधौनाधीयीत तथा सुप्तोत्थितो नरात्रेःपश्चिमे भागे वेदानधीत्य श्रान्तः सन् पुनःसुप्यात् ॥ ९९ ॥ **यथोदितेनेति** । अध्यापकस्य कर्मान्तरव्यग्रत्वमात्मनश्च बहुवेदनेच्छापत्तदभावे पूर्वोक्तविधिना द्विजोयत्नवान् सर्वदा गायत्र्यादिछन्दोयुक्तमृक्सामाख्यंब्रह्मपठेत्तथाब्रह्मब्राह्मणं गायत्र्यादिछन्दोयुक्तंमन्त्रमिश्रंयजुर्वेदाख्यंमन्त्रब्राह्मणयोर्मिश्रपाठाद्वैलक्षण्येसत्ययंपृथग्निर्देशः ॥ १०० ॥ **इमानिति** । पूर्वोक्तविधानेनाधीयानः शिष्यांश्चाध्यापयन् वक्ष्यमाणाननध्यायान् सर्वदा वर्जयेत् ॥ १०१ ॥ **कर्णश्रावइति** । कर्णाभ्यामेवश्रवणोपपत्तेरतिशयविवक्षया कर्णश्रावइत्युक्तंतेन रात्रावतिशब्दवति वायौ दिवा च रजःसमाहरणसमर्थे वात्येतौवर्षाकाले तावत्कालिकावनध्यायावध्ययनविधिज्ञाःकथयन्ति ॥ १०२ ॥ **विद्युत्स्तनितवर्षेष्विति** । विद्युद्गर्जितवर्षेषु युगपदुपस्थितेषु महतांचदिव्यज्योतिर्विशेषेणपुनःस्थानतश्चपातेसत्येतेषु निमित्तकालादारभ्यापरेद्युर्यावत्सएवकालस्तावत्प्रकृतासुवर्षास्वनध्यायंमनुराह ॥ १०३ ॥ **एतानिति** । एतान्विद्युदादीन् जहूषया प्रकटीकृतामिषु सन्ध्यालक्षणेषु कालेषु यदोपजातान् जानीयात्तदानध्यायंकुर्यान्न सर्वदा वर्षासु । एतदुत्पाते तथा वर्षाभ्योअन्यत्राभ्रदर्शने सत्यनध्यायः ॥ १०४ ॥ **निर्घातइति** । अंतरिक्षउत्पातध्वनौ भूकम्पे आदित्यादीनांपरिवेषणे सत्यनृतावपि वर्षा-

स्वपि । अपि शब्दादन्यदाप्याकालिकाननध्यायान् जानीयात् ॥ १०५ ॥ **प्रादुष्कृतेष्विति** । अग्नीनांपुनरपासितभस्मतया प्रकटीकरणवेलायांसन्ध्याकाले विद्युद्गर्जितशब्दाविव यदा भवतोन वर्षंतदा यावज्योतिस्तावदेवानध्यायोनाकालिकंदिवादित्योज्योतीरात्रौ तारकाअतः पूर्वसन्ध्यायामेतदुत्पाते दिवैवानध्यायः । पश्चिमायांचोत्पातेरात्रावेव शेषेषु च पुनर्वर्षाख्येतृतीयउपजाते यथा दिवा तथारात्रावप्यनध्यायइत्युक्तानुवादः ॥ १०६ ॥ **नित्यानध्यायइति** । धर्मातिशयार्थिनांग्रामनगरयोः सर्वदानध्यायः स्यात् । कुत्सितगन्धेचसर्वस्मिन्नुपलभ्यमानेऽनध्यायः । अस्मिन्ननध्यायप्रकरणे नित्यशब्दादीनांकचित्कचिदभावात्तत्र तत्र नित्यत्वमन्यत्र विकल्पः सचधर्मनैपुणविद्यानैपुणकामभेदेन व्यवस्थितोज्ञेयःद्विविधाह्यध्येतारोधर्मनैपुणकामाविद्यानैपुणकामाश्च तत्र ये स्वीकृतप्रायवेदाः केवलंनियमानुष्ठानजन्यमदृष्टातिशयं अर्थयन्ते ते धर्मनैपुणकामास्तेषां अशेषानध्यायादरणम् । ये पुनः प्रथमाध्येतारस्ते विद्यातिशयार्थिनएषांनित्यत्वलिङ्गव्यतिरिक्तानध्यायादरणंनास्ति ॥ १०७ ॥ **अन्तर्गतशवइति** । विद्यमानशवे वृषलस्य चाधार्मिकस्य च संनिधौ न शूद्रजनसंनिधौ इति शूद्रस्योक्तत्वात् रोदने च । जनानांकार्यार्थमेकत्र सन्निधाने सत्यनध्यायः ॥ १०८ ॥ **उदकइति** । जलमध्ये मध्यमे च प्रहरद्वये महानिशाख्ये ॥ महानिशाचविज्ञेयामध्यस्थंप्रहरद्वयं ॥ इतिदेवलस्मरणात् मूत्रपुरीषकाले च प्रागाचमनादुच्छिष्टः श्राद्धभुक् निमन्त्रणात् प्रभृति श्राद्धभोजनाहोरात्रंयावन्मनसापि वेदस्य नस्मरेत् ॥ १०९ ॥ **प्रतिगृह्येति** । शास्त्रविद्ब्राह्मणोनवश्राद्धे च निमन्त्रणपुरस्कृत्य नृपस्य च पुत्रजन्मादौ राहुणावार्केन्दुग्रासे सति त्र्यहं वेदं नाधीयीत ॥ ११० ॥ त्र्यहादूर्ध्वमपि वा **यावदिति** । यावदेकोद्देशेन निमन्त्रितस्य शास्त्रविदोब्राह्मणस्य श्राद्धगतस्रक्चन्दनादिगन्धलेपौ गात्रे भवतः तावद्वेदंनाधीयीत । त्र्यहाधिकवैकल्पिकमिदम् ॥ १११ ॥ **शयानइति** । शय्योत्सृष्टाङ्गप्रसारितपादः पादारोपितपादोवा पर्यस्तिकांच कृत्वा मांसमाशौचान्नंच भुक्त्वा नाधीयीत ॥ ११२ ॥ **नीहारइति** । धूमिकायांबाणशब्दे सन्ध्ययोरमावास्याचतुर्दशीपौर्णमास्यष्टमीषुच नाधीयीताष्टकानामुत्तरत्राभिधानादिहामावास्यादिसाहचर्याष्टकाग्रहणमष्टम्यर्थम् ॥ ११३ ॥ यस्मात् **अमावास्येति** । अमावास्या गुरुंहन्ति शिष्यंच चतुर्दशी हन्ति वेदंचाष्टमीपौर्णमास्यौ विस्मारयतः । तस्मादेतासु नित्यमध्ययनंपरिहरेत् ॥ ११४ ॥ **पांसुवर्षइति** । रजोवर्षेदिग्दाहे च यत्र ज्वलिताइव दिशोलक्ष्यन्ते । शृगालश्वखरविरुते पङ्क्त्याकारेण चोपविश्य द्विजो न पठेत् ॥ ११५ ॥ **नाधीयीतेति** । श्मशाने सर्वतः शम्यापातान्नाधीयीतेत्यापस्तंबस्मरणात् । तथाविधश्मशानसमीपगोष्ठयोश्च स्त्रीसंप्रयोगप्रावृतंचवासः प्रावृत्य श्राद्धार्थेचाकृतान्नाद्यर्थविप्रतिगृह्यनाधीयीत ॥ ११६ ॥ **प्राणीति** । गोहिरण्यादि यत्किंचित् श्राद्धार्थंतत् स्पृष्ट्वाप्यनध्यायः । किमुत प्रतिगृह्य यस्मात्पाणिरेवास्यमस्येति पाण्यास्योब्राह्मणः ॥ ११७ ॥ **चौरैरिति** । चौरैरुपप्लुते ग्रामे अग्निदाहकृते च भये दिव्यान्तरिक्षभौमेषु चाश्चर्यरूपेषु उत्पातेषु रुधिरवर्षणादिष्वाकालिकमनध्यायंजानीयात् ॥ ११८ ॥ **उपाकर्मणीति** । उपाकर्मोत्सर्गाख्ययोर्गृह्योक्तकर्मणोः कृतयोस्त्रिरात्रमध्ययनेन क्षपणंस्मृतम् । तत्रोत्सर्गे पक्षिण्यहोरात्राभ्यां उक्ताभ्यांसहानेनविकल्पः । **ऊर्ध्वमाग्रहायण्याः** कृष्णपक्षाष्टमीषु तिसृषु चतसृषु वाहोरात्रमनध्यायः । पौर्णमास्यष्टकास्वपि सिद्धे पुनर्वचनंकालमात्रसद्भावेप्यष्टकास्वहोरात्रमेवानध्यायोष्टमीषु पुनः यावदष्टमीत्येवं अर्थतथा च तत्राष्टकासुनाधीयीतेत्युक्तमिह **पुनरष्टकासुत्वहोरात्रमिति** । यत्तु पुनर्वचनंनित्यार्थमित्याहुस्तदसत्तत्राप्यमावास्या गुरुंहन्तीति अर्थवा-

देननित्यत्वस्य समर्थितत्वात् । ऋत्वन्तेषुचाहोरात्रमनध्यायः ॥ ११९ ॥ **नाधीयीतेति** । अश्ववृक्षहस्तिनौ-
खरोष्ट्रारुढस्तथोषरप्रदेशस्छोगम्यादिभिर्यानेन च गच्छन्नाधीयीत ॥ १२० ॥ **नविवादइति** । ध्याक्रो-
शायांप्रवृत्तायांदण्डादण्डि वा यदोत्पन्नंभवत्यप्रवृत्तयुद्धायांवा सेनायांमवृत्तयुद्धे वा स्थितोभोजनसंमनन्तरंच ।
यावदार्द्रपाणिरितिवसिष्ठस्मरणात् । अपरेद्युश्चाजीर्णे वमित्वा चान्नानि शुक्तकेवोद्गारेनाधीयीत ॥ १२१ ॥ **अतिथि-
मिति** । अतिथिरगीष्वेत्येवंयावदननुज्ञापितोवायौ चाध्ययनश्रमेणातिकुप्यति । रुधिरेण च शरीराच्छ्रुते शस्त्रेणचा-
रुधिरोत्पादिनापिक्षतउत्पन्नेनाधीयीत ॥ १२२ ॥ **सामध्वनाविति** । सामध्वनौ श्रूयमाणे ऋग्यजुषोर्न कदाचिदप्य-
ध्ययनंकुर्यात् । तथावेदंसमाप्यारण्यकाख्यंच वेदैकदेशं अधीत्य तस्मिन् अहोरात्रे अन्यत् नाधीयीत ॥ १२३ ॥
**ऋग्वेदइति** । देवादेवतायस्यासौ दैवदैवत्यऋग्वेदः । मनुष्यदेवताकत्वात् यजुर्वेदोमानुषः । सामवेदःपितृदेवताकःस्मृतः
पित्र्यंकर्मकृत्वाचमन्यन्ते । तस्मात्तस्याशुचिरिवध्वनिरतस्तस्मिन्श्रूयमाणे ऋग्यजुषीनाध्येयेइतिपूर्वविध्यर्थवादः ॥ १२४ ॥
**एतद्विति** । एतद्देवपितृमनुष्यादे त्वात्कथंवेदत्रयस्यनानाशास्त्रज्ञाऋग्यजुःसामात्मिकाया त्रय्याः सारभूतंप्रणव-
व्याहृतिसावित्र्याख्यंप्रत्यहं प्रणवव्याहृतिसावित्र्यात्मकेन द्वितीयाध्यायोक्तक्रमेण प्रथमभ्यस्यपश्चाद्वेदमधीयते ॥ यथा-
नध्यायेषुनाध्ययनमेवंप्रणवाद्यभ्यासंविनाध्येयमित्यतदर्थस्येहपुनर्वचनं ॥१२५॥ **पशुमण्डूकमार्जारश्वसर्पनकुलाखु-
भिरिति** । शिष्योपाध्याययोरधीयानयोर्गवादिपशुमण्डूकबिडालश्वसर्पनकुलमूषकैर्मध्यगमनेकृतेसत्यहोरात्रमनध्यायंजानी
यात् । विद्यानैपुण्यकामंप्रतिपूर्वोक्तानध्यायविकल्पार्थमाह ॥१२६॥ **द्वाविति** । अध्ययनभूमिमशुद्धामात्मानंचाशुचिंअपेक्ष्य
द्वौवानध्यायौ तावेवप्रयत्नेन नित्यंद्विजोवर्जयेत् । ताभ्यांमन्त्रोपियत्रनित्यग्रहणमर्थवादादित्वान्नित्यत्वंलिङ्गमस्तितानपि·
नित्यमेव जर्वयेत् अन्यत्रतुविकल्पः ॥ १२७ ॥ **अमावास्यामिति** । अमावास्यादिषु स्नातकोद्विजःऋता-
वपि नित्यंस्त्रियंनोपेयात् । पर्ववर्जंव्रजेच्चैनामित्यनेनपौनरुक्त्यंतत्रैवपरिहृतं । स्नातकव्रतप्रायश्चित्तांगत्वेनास्येहाभिधा-
नम् ॥ १२८ ॥ **नस्नानमिति** । भुक्त्वानित्यंयादृच्छिकंच स्नानंन कुर्यान्नैमित्तिकंपुनःमुहूर्तमपि शक्तिविषये नाप्रम-
त्तःस्यादित्यापस्तम्बस्मरणान्ननिषिध्यते । तथा व्याधितोनैमित्तिकमपिस्नानंनकुर्यादपितु यथासंभवंमन्त्रवन्मार्जन-
हिरण्योदकाभ्युक्षणगोस्पर्शनादीन् स्नानप्रतिनिधीन् पटपरिवर्तंचनकुर्यात् ॥ महानिशातुविज्ञेयामध्यस्थंप्रहरद्वयं ।
तस्यांस्नानंनकुर्वीतकाम्यनैमित्तिकादृते इतिदेवलस्मरणात् । तत्र न स्नायात् । बहुवासस्कश्चसततंनस्ना-
यान्नैमित्तिकेत्वनिषेधः । गाधागाधग्रहाद्याकीर्णतयावाऽज्ञातजलाधारेनस्नायात् ॥ १२९ ॥ **देवतानामिति** । देव-
तानांचित्रपुस्तकादिकृतानां । गुरोःपित्रादेः नृपतेः स्नातकाचार्यस्य च प्राधान्याद्गुरुतःपृथगुपदिष्टस्यकपिलस्य
यज्ञार्थंकृतदीक्षस्येच्छातःछायां नाक्रमेत् ॥ १३० ॥ **मध्यंदिनइति** । मध्याह्नार्धरात्रसन्ध्यासु समांसंच
श्राद्धंभुक्त्वा चतुष्पथे चिरंनतिष्ठेत् ॥ १३१ ॥ **उद्वर्तनमिति** । उद्वर्तनस्नानोदकमूत्रपुरीषरुधिरश्लेष्मवान्तानी-
च्छातोनाक्रामेन्निष्ठ्यूतंचताम्बूलाद्यंश्लेष्मरूपमपि ॥१३२॥ **वैरिणमिति** । शत्रुं[तं]म्मित्राधर्मशीलचौरपरदारान्नोपसेवेत ।
चोरस्यात्यन्तकुत्सितत्वादधार्मिकात्पृथक्ग्रहणं । शत्रुसेवनादौ च यद्यपि दृष्टएवदोषस्तथापि शास्त्रनिषेधसामर्थ्या-
ददृष्टोपिभवतीत्यवसीयते । एवमन्यत्रापिविज्ञेयं ॥ १३३ ॥ **नहीदृशमिति** । यस्मात्पुंसएवंविधमायुः-
क्षयकरंलोकअन्यंनकिंचिदस्ति यादृक्लोकेपरदारगमनंतस्मादेतन्नकार्यं ॥ १३४ ॥ **क्षत्रियंचैवेति** ।

---

( १ ) पट=जल ( गी० २,५ ) ( २ ) मूलटीकायांशत्रुव

**योभवनशीलक्षत्रियसर्पविद्वद्ब्राह्मणां**स्तदानींदुर्बलानपि कदाचिन्नावजानीयात् ॥ १३५ ॥ **एतत्त्रयमिति** । यस्मादेतत्त्रयमवज्ञातंपुरुषंविनाशयति क्षत्रियसर्पौदृष्टशक्त्या ब्राह्मणस्त्वभिचारादिना तस्मात्प्रशस्तबुद्धिरेतत्त्रयंसर्वदा न तिरस्कुर्यात् ॥ १३६ ॥ **नात्मानमिति** । प्रथमोत्पन्नाभिरसंपद्भिरात्मानं नावजानीयात् । अपित्वामृत्योःश्रियमुद्यमंकुर्यात् । नदुर्लभाश्रीरितिबुध्येत ॥ १३७ ॥ **सत्यमिति** । केन चित्पृष्टः सन् सत्यमेवब्रूयात् । सत्यंप्रियंचाप्यपृष्टोपि पुत्रजन्मादिकथयेत् । अप्रियंपुनःसत्यमपिबन्धुवियोगादिनवदेदपितुसत्यांगतौतूष्णीमासीत । प्रियमपिचासत्यंनाभिब्रूयादित्येषनित्योधर्मः ॥ १३८ ॥ **भद्रमिति** । अभद्रंभद्रमिति गौतमस्मरणादिह वृत्तवशात्प्रयुक्तं । तत्राध्याहारेण व्याख्येयमकल्याणरूपंयत्तद्भद्रंकल्याणंश्रेयइत्येवमादिभिः शब्दैरिति करणस्यप्रकारार्थत्वात् ब्रूयाद्भद्रमित्यनेनैव वा शब्देन तद्वादनिमित्तौ वैरकलहौ चासमर्थेनापि सह नैव कुर्यात् ॥ १३९ ॥ **नातिकल्पमिति** । उषप्रदोषयोरतिमध्याह्ने च जाते अविज्ञातेन पुरुषेण शूद्रैश्चाध्वानंन गच्छेत् । नैकःप्रपद्येताध्वान मित्युक्तेपीहैकइति पुनर्वचनं प्रायश्चित्तविशेषार्थं ॥ १४० ॥ **हीनाङ्गानिति** । हीनाङ्गाधिकाङ्गमूर्खातिवृद्धविरूपदरिद्रवैधवेयादीन् काणादिशब्दाह्वानादिना नोपहसेत् ॥ १४१ ॥ **नस्पृशेदिति** । आचमनाद्यर्हौब्राह्मणोहस्तादिना गोब्राह्मणानग्नीन् न स्पृशेत्तथाऽशुचिःसन्ननातुरोद्युलोकगतमादित्यादिज्योतिःसमूहं अपि नपश्येत् ॥ १४२ ॥ **स्पृष्ट्वेति** । अशुचिःसन्गवादीन्स्पृष्ट्वाऽद्भिःप्राणायतनानि चक्षुरादीन्यङ्गानि च सर्वाणि स्पृशेन्नाभिमद्भिर्हस्तमध्येनस्पृशेदिति प्रकरणपठितंप्रायश्चित्तंलाघवार्थं तत्र हिक्रियमाणे गवादिस्पर्शेकर्तव्यंस्यात् ॥ १४३ ॥ **अनातुरइति** । स्वस्थःसन् स्वानि छिद्राणि रोमाणि च पायूपस्थगतानि अनिमित्तं न स्पृशेत् ॥ १४४ ॥ **मङ्गलाचारयुक्तइति** । अभिप्रेतसिद्धिरूपमङ्गलहेतुत्वात् गोरोचनाचन्दनादौमङ्गलेप्रत्युत्थानादौ आचारे यत्नवान्श्रद्धात्मावशीकृतजिह्वादीन्द्रियःस्यादनलसश्चसन् जपहोमौ नित्यंकुर्यादत्रचाचारादीनामुक्तानामपिविनिपातविनिवृत्त्यर्थेविवक्षया पुनरभिधानं ॥ १४५ ॥ यथाचाह **मङ्गलाचारयुक्तानामिति** । मङ्गलाद्यनुष्ठानशीलानांशुद्धानांजपहोमपरायणानांदैवपुरुषकृतउपद्रवोन विद्यते ॥ १४६ ॥ **वेदमेवजपेन्नित्यमिति** । यस्मिन्यस्मिन्कालेदृष्टार्थकर्मपरोधोभवति तत्रनित्यंवेदमेवानलसःसन्जपेत् । यस्मात्तंब्राह्मणस्य परंधर्ममन्वादयआहुस्तदन्यस्त्वमुख्योधर्मस्तैरुच्यते । उक्तस्यापिवेदाभ्यासस्य यदर्थंपुनरभिधानंतदाह ॥ १४७ ॥ **वेदाभ्यासेनेति** । नित्यंवेदाभ्यासशौचतपोऽहिंसाभिः पूर्वभवस्य जन्मस्मरति ॥ १४८ ॥ ततःकिमतआह **पूर्विकीमिति** । पूर्वजातित्वांसंस्मरन्ईदृगयवेदाभ्यासोयेनजन्मान्तरंस्मर्यतइति मत्वा भीक्ष्णंवेदाभ्यासमेवकरोति तेन चानवरतमाचार्यमाणो वेदार्थावबोधार्थज्ञाने सति ब्रह्मप्राप्यापरमात्मरूपमक्षयंसुखंप्राप्नोति ॥ १४९ ॥ **सावित्रानिति** । सवितृदेवताकान् अनिष्टनिवृत्त्यर्थांश्चहोमान् पक्षसंधिष्वामावास्यादिषु चाज्यं हविरनादेशइतिसूत्रकारस्मरणात् आज्येन नित्यंकुर्यात्तथाष्टकाख्येनकर्मणा अष्टकापश्चाद्भाविनीषुच नवमीषु अन्वष्टकाख्येनकर्मणा प्रमीतान्पित्रादींस्तर्पयेत् ॥ १५० ॥ **दूरादिति** । क्षिप्रंगत्वा क्षेपमात्रंशरस्येति पुराणस्मरणादेवंविधाद्गृहस्य दूरान्मूत्रपुरीषपादधावनोदकोच्छिष्टपरिषेकोदकाद्युत्सृजेत् ॥ ॥ १५१ ॥ **मैत्रमिति** । मैत्रंपायुरिति पश्वङ्गसंस्तवे पायौ मित्रादेवताकथनश्रवणादिहापि अभेदोपचारेण मैत्रःपायुस्तत्रभवउत्सर्गे सति शौचं तथानुलेपनादि शरीरसंस्कारनित्यस्नानदन्तधावनाञ्जनदेवार्चनानि पूर्वाह्णएवकुर्वीत ॥ १५२ ॥ **दैवतान्यभिगच्छेदिति** । दैवतानि सुवर्णमण्यादिकृतानि धर्मप्रधानांश्च ब्राह्मणान्पालनसमर्थंच रक्षादिकंरक्षार्थंगुरूंश्चापि पित्रादीनमावास्यादिषु पक्षसन्धिषुचद्रष्टुंगच्छेत् ॥ १५३ ॥ **अभिवादयेदिति** । गृहागताञ्ज्यायांसोऽभिवादयेत् । तेषांचात्मीयमासनमुपवेशनार्थंदद्यात् । बद्धाञ्जलिश्चतत्समीपमासीत । गच्छतश्चप

श्वादनुव्रजेत् । उक्तमपीदमभिवादनादि वक्ष्यमाणफलाभिधित्सयापुनरुच्यते ॥ १५४ ॥ श्रुतिस्मृत्युदितमिति । श्रुतिस्मृतिभ्यांसम्यगुक्तंस्वेषु चाध्ययनयागादिष्वङ्गत्वेन संबद्धंधर्मस्य मूलभूतंसाध्वाचारमनलसःसन् अभीक्ष्णमनुतिष्ठेत् ॥ १५५ ॥ यदर्थमाचारस्यपुनर्वचनंतदाह आचारादिति । आयुरिष्टापत्याक्षयधनान्याचारात्तदनुष्ठानाल्लभते दुष्टलक्षणंच प्रियभार्याविनाशसंसूचकंतिलकाद्याचारोनिष्फलीकरोतीत्याचारफलकथनं । नचानित्यतापत्तिःसावित्रीसारमात्रोपीत्यादिनानित्यत्वस्य समर्पितत्वात् ॥१५६॥ दुराचारइति । यस्माद्दुराचारःपुरुषोलोकेच गर्हितःसर्वदाच दुःखितोव्याधितोल्पायुर्भवति तस्मात्स्वाचारेणभाव्यं ॥१५७॥ सर्वलक्षणहीनइति । यःसम्यगाचारवान्श्रद्दधानोऽकुत्सकःसआजानुबाहुत्वादिसर्वप्रशस्तलक्षणशून्योपि वर्षशतंजीवति । प्रथमेऽध्याये शास्त्रस्तुत्यर्थाचारस्तुतिरिहत्वाचारफलसमर्पणार्थमेतत् ॥ ॥१५८॥ यद्यत्परवशमिति । यद्यत्परायत्तं अयाचितलाभादिना विशेषदानादि कर्म तत्तद्यत्नतोवर्जयेत् । यद्यत्पुनरात्माधीनंस्वधनलेशेनापि केनचित्स्वलाभपरोपकारादिना तत्तत् यत्नेन अभ्यसेत् ॥ १५९ ॥ यस्मात् सर्वमिति । यत्परप्रार्थनादिसंसाध्यंतत्सर्वंदुःखहेतु यच्चात्मैकसाधनंतत्सर्वंसुखनिमित्तमित्येतत् संक्षेपतःसुखदुःखलक्षणंजानीयात् । अशिष्टाप्रतिषिद्धंवैकल्पिकंवा ॥ १६० ॥ यत्कर्मेति । यत्कर्मानुतिष्ठतःपुंसोन्तरात्मनःपरितोषोभवति तद्यत्नतःकुर्वीत । आत्मतुष्टिकरं पुनर्वर्जयेत् ॥ १६१ ॥ आचार्यंचेति । आचार्यमध्यापयितारंचोपनयनमात्रकारिणंलोकवत्पितरंमातरंगुरुं अल्पंवाबहुवायस्येत्युक्तं गोब्राह्मणतपोनिष्ठांश्चाततायिनोपिनहिंस्यादन्यथा सामान्यहिंसानिषेधेसतीदंपृथक्त्ववचनंअनर्थकंस्यात् ॥ १६२ ॥ नास्तिक्यमिति । द्वेषंस्तंभंवमानंचक्रोधंतैक्ष्ण्यंचवर्जयेत् ॥ नास्त्यदृष्टमित्येवंबुद्धित्वं वेददेवतागर्हणं मात्सर्याऽनम्रत्वश्रुतादाभिमानक्रोधक्रौर्याणिवर्जयेत् ॥ १६३ ॥ परस्येति । परस्य दण्डादिनोद्यं क्रुद्धश्च सन्नात्मनःपुत्रशिष्यभार्याकनीयान् सोदर्यभ्रातृदासान् वक्ष्यमाणानवर्जयित्वा न प्रहारेण तान्पुनरनुशासनार्थंरज्ज्वावेणुदलेनवेत्यादि वक्ष्यमाणप्रकारेण ताडयेत् ॥ १६४ ॥ ब्राह्मणायेति द्विजातिरपि हननेच्छया ब्राह्मणस्यदण्डाद्युद्यम्यैव वर्षशतंतामिस्राख्ये नरके परिभ्राम्यति ॥१६५॥ ताडयित्वेति क्रोधेन बुद्धिपूर्वंतृणेनापि प्रहत्यैकविंशतिजन्मानि पापनिमित्तासुश्वादियोनिषु जायते । आजातीरित्याङ्पादपूरणः ॥१६६॥ अयुध्यमानस्येति । युद्धंविना ब्राह्मणशरीरतोमौर्ख्यात्तरुधिरंनरउत्पाद्यपरलोके महद्दुःखंप्राप्नोति ॥ १६७ ॥ शोणितमिति । प्रहतब्राह्मणोत्पन्नंरुधिरंक्षितिपृष्ठात्यत्संख्याकान् रजःकणान्पिंडीकरोति तत्संख्यानि वर्षाणि रुधिरस्योत्पादकः परलोके श्वादिभिर्भक्ष्यते ॥ १६८ ॥ नकदाचिदिति । यतएवंब्राह्मणावगोरणादिनाभवति तस्माच्छास्त्रविन्नकदाचिदपि ब्राह्मणस्य दण्डाद्युद्यच्छेन्नापि तंतृणेनापि हन्यान्न च शरीरात् रुधिरमुत्पादयेत् ॥ १६९ ॥ अधार्मिकइति । यस्माद्योनरोऽधर्माचरणशीलोयस्य वाऽसत्यमेव धनं तत्प्राधान्येनव्यवहाराख्यं सर्वदा हिंसानिरतः सइहलोकेपि न सुखंवर्धते । तस्मादितन्नकार्यं ॥ १७० ॥ नसीदन्निति । यथाधर्मशब्दोयागादौ तज्जन्येचात्मसंस्कारेऽदृष्टप्रयोगएव धर्मशब्दोपि हिंसादौ तज्जन्येचात्मसंस्कारौ दृष्टप्रयोगौ तौ-अधार्मिकाणांपापानामित्येवंव्याख्यायते । हिंसाद्यधर्मचरणशीलानांतज्जन्यपापाख्यानां असंस्कारयुक्तानामिह लोके राजोपद्रवंक्षिप्रंपश्यन्परलोकेच शास्त्रदृष्ट्या नरकंपश्यन् धर्मानुष्ठानेनात्मसंयमातिशये सत्यत्रसादंगच्छन्नपि मनोऽधर्मे न नियोजयेत् ॥ १७१ ॥ नाधर्मइति । यथागौ वाहनदोहादिना सद्योलोकेफलति तथा अधर्मश्चरितःसद्योनफलति । किंतर्हिशनैःशनैःकालान्तरेणफलदानोन्मुखीभवन्कर्तुर्मूलानि इव छिनत्ति । कृतमूलपादपवत्कर्तारंनिरन्वयंनाशयति ॥ १७२ ॥ यदीति । यदिस्वशरीरव्याध्यायुत्पादनद्वारेणाधर्मोनफलति तदा पुत्रपौत्ररोगाद्युद्भवमु-

( १ ) स्वलाभ=स्वल्प ( गो०५ )

खेनफलति । नन्वसौकृतःकदाचित्कर्तुर्निष्फलोभवति येश्च दुष्कृतवशेन व्याध्याद्युपेतैर्भवितव्यं । तथाविधस्तस्यात्मदुष्कृतबलात्तद्विपत्यादिदर्शनपीड़ानुभवार्थं पुत्रपौत्राइहजन्मनि जन्मान्तरेवा जायन्ते ॥ १७३ ॥ अधर्मेणेति । अधर्मेण परस्वहरणादिना संप्रतिधनवृद्ध्यादियुक्तोभवति । तदनन्तरंतद्धनाद्युपभोगद्वारेण सुखान्यनुभवति तदनुभवाच्च सुखितत्वादिनाशत्रूनभिभवति । ततोस्मिन्नेव जन्मनि सर्वनाशंनश्यति । मृतोवा अपुनर्भवंनरकमुपैति ॥ १७४ ॥ यतएवमतः सत्यधर्मार्यवृत्तेष्विति । सत्यधर्मसाध्वाचारशौचेषु सर्वदा रतिंभावयेत् । शासनीयांश्च भार्यादीन्पृष्ठतस्तुशरीरस्येत्यादि शास्त्रमर्यादा वाग्बाहूदरसंयमयुक्तोनियमयेदित्युक्तपुनर्वचनमशिष्टानाभिनिवेशदार्ढ्यार्थं । सत्यपि च त्रिवर्गस्य पुरुषार्थत्वाभिधाने ॥ १७५ ॥ परित्यजेदिति । धर्ममप्यसुखोदर्कंलोकसंक्रुष्टमेवच । धर्मविरुद्धावर्थकामौ असुखोत्तरकालंचाशक्तस्य तीव्रतपश्चरणादिरूपंधर्मंलोकाभिशापजनकंच मधुपर्कगोवधादिरूपंनाचरेत् ॥ १७६ ॥ नपाणिपादचपलइति । हस्तपादचक्षुर्व्यापारान्निष्प्रयोजनान्नकुर्यादनार्जवश्चक्रूरकृत् परोपघातकर्मबुद्धियुक्तश्च न स्यादिति पुनर्वचनंउक्तप्रयोजनम् ॥ १७७ ॥ येनेति । द्विधावाक्यार्थप्रतिभावनेवैकल्पिकपदार्थेषु वा यएवपितृपितामहादिभिस्तस्यानुसृतोमार्गोयदेवतैरनुष्ठितंतेनैव साधुमार्गमनुसरेत्तदेवाचरेत्तदाचरन्धर्मेणनहिंस्यते ॥१७८॥ ऋत्विगिति । मातापितृभ्यामिति । ऋत्विगादिभिःसहवाक्कलहंनकुर्यात् । पुरोहितःशान्त्यादिकर्ता । संश्रिताःउपजीविनः । आतुरोरोगी । ज्ञातयःपितृपक्षसंबन्धिनोवैवाह्याबान्धवामातृपक्षाजामिर्भगिनीस्नुषाद्याः दासवर्गोदासगणः ॥१७९॥१८०॥ एतैरिति । एभिःसहविवादानपरित्यज्यासावतिकृतप्रतनुभिः सर्वपापैः प्रमुच्यते । तथैतैर्विवादैर्न्यकृतैः इमान् वक्ष्यमाणान् सर्वान् लोकान्गृहस्थःस्वीकरोति ॥१८१॥ आचार्यइति । यतआचार्यादयोदृष्टया शक्त्या ब्रह्मप्रजापतीन्द्रदेवलोकानांप्रभवोऽतःपरित्ततद्विवादस्य गृहस्थस्यैतान्लोकान्ददन्ति । तद्विवादपरित्यागेनब्रह्मलोकादि प्राप्यतइत्येतदनयाभंग्योक्तमेव उत्तरत्रापिविज्ञेयम् ॥१८२॥ जामयइति । जामयोप्सरसांलोकेप्रभवन्ति बान्धवावैश्वदेवलोके मातृमातुलौभूलोके ॥१८३॥ आकाशेशाइति । बालवृद्धसंश्रितातुराअन्तरिक्षलोकेप्रभवन्ति ज्येष्ठोभ्रातापितृतुल्योअतोसावपि प्रजापतिलोकेप्रभुः । भार्यापुत्रौअर्धोह्यवाएषआत्मनोयज्जायाआत्मावैपुत्रनामासीतिश्रुतेः । स्वमेवशरीरमतआत्मनासहकथंचिद्वदेत् ॥ १८४ ॥ छायेति । स्वोदासवर्गोनीचैर्गामित्वादात्मछायेवातोनासौविवादास्पदंदुहिताच कृपणंकृपापात्रमतएतैराक्रुष्टोसंतप्तःसर्वदा क्षमेत ॥ १८५ ॥ प्रतिग्रहसमर्थइति । श्रुताध्ययनादिना प्रतिग्रहेण समर्थोपि तत्र पुनःप्रवृत्तिंवर्जयेत् । यस्मात्प्रतिग्रहेणास्याध्ययनादिनिमित्तमभावःक्षिप्रमेवप्रलीयते । याचामात्रप्रसिध्यर्थमित्यादिनोक्तमप्येतत्तेजःप्रशमफलकथनार्थंपुनरुच्यते ॥१८६॥ नद्रव्याणामिति । प्रतिग्रहमन्त्रद्रव्यदेवतादिकंधर्मादनपेतंप्रतिग्रहविधानमबुध्वा क्षुधावसादंगच्छन्नपि न प्राज्ञः प्रतिग्रहंकुर्यात्किंपुनरनापदीति ॥१८७॥ हिरण्यमिति । श्रुताध्ययनशून्यः सुवर्णादीन्प्रतिगृह्णन्नग्निसंयोगेन दारुवद्भस्मीभवति ॥ १८८ ॥ तथाचाह हिरण्यमायुरन्नंचभूर्गौश्चैवात्मनस्तनुमिति ॥ हिरण्यान्ने प्रतिगृहीते अविदुषश्चायुर्दहतः । गोभूमीचशरीरम् । अश्ववस्त्रघृततिलाः यथाक्रमंचक्षुश्चर्मतेजोपत्यानिदहन्ति । नकेवलमविद्वान् प्रतिग्रहेण सर्वदा तंदहते यावत् ॥ १८९ ॥ अतपस्त्वनधीयानइति । यस्तपःस्वाध्यायशून्यः प्रतिग्रहेभिलाषुकोभवति सदातेनत्रानर्हप्रतिग्रहदानपापयुक्तेन सह पाषाणमयेन नावाविना तरन्नुदकइवनरकेन्तर्धीयते दाताह्यत्रप्रतिग्रहसंबन्धादज्ञौ दातृप्रतीच्छकाविति वक्ष्यमा णदर्शनात्तेनेति परामृश्यते ॥ १९० ॥ तस्मादिति । यस्मादसारद्रव्यप्रतिग्रहेपि अज्ञः कर्दमे गौरिव नरके मज्जति तस्मादविद्वान्यतःकुतश्चिद्धिरण्यादिव्यतिरिक्तप्रतिग्रहादपित्रस्येत् ॥ १९१ ॥ नवारीति । उदकंकिल सर्वदेयं त-

दपि बैडालव्रतकादिभ्योधर्मज्ञोन दद्यादित्यतिशयेनास्या द्रव्यान्तरदानंनिषिध्यते। नतु वारिदानम्। पाखंड्यादिलोकसिद्धोपि बैडालवृत्तिके दाननिषेधस्तल्लक्षणविवक्षयेहपुनरुच्यते। अविद्वद्दाननिषेधः पुनर्विद्वत्संभवे सत्यविद्वद्दानप्रतिषेधार्थः। एवंच श्रोत्रियायैव देयानीत्येतत्तविद्वच्छ्रोत्रियासंभवे सति द्रष्टव्यम् ॥ १९२ ॥ त्रिष्विति । न्यायोपार्जितमपि धनंबैडालव्रतिकादिषु त्रिष्वपि दत्तंदातृप्रतिग्रहीत्रोः परलोकेनरकपातहेतुत्वादनर्थाय संपद्यते ॥ १९३ ॥ यथेति । तथानिमज्जतोविप्रावज्ञोदातृप्रतीच्छकौ ॥ यथाश्ममयेन नावादिना तरंस्तेनैव सह नरकेन्तर्धीयते एवं दातृप्रतिग्रहीतारौ मतिग्रहशास्त्रानभिज्ञावनर्हदानप्रतिग्रहकर्तारौ नरकंयातः । दाताकिलप्रतिग्रहीतृपोतावतरणमार्गेण संसारार्णवपारमुत्तितीर्षुर्यदि वालिशतयोपप्लवे प्रख्यप्रतिग्रहीतृसमवलंबनमुररीकरोति तदा प्रत्युत तेनैव सममगाधोदध्यन्तर्दानवेदनासंनिहितमधिकतरामर्थान्तरतयानर्थान्तरं अधिकमपिमज्जतइत्युपमार्थः। अतएवत्वनधीयानः प्रतिग्रहीतृप्राधान्येनोक्तमिदंतु दातृप्राधान्येनेत्यपौनरुक्त्यं अप्रसिद्धाद्यत्नतः परिहारार्थम्॥१९४॥ बैडालव्रतिकादिलक्षणमाह धर्मध्वजीति। धर्मः चिन्हमिवलोकख्यापनार्थंप्रकाशदेशावरणाद्यस्य सधर्मध्वजी। लुब्धः कृपणः च्छाद्मिकोगूढपापोलोकदंभकोवंचकोहिंस्रोहिंसाशीलः सर्वाभिसंधकः परगुणासहनतया सर्वापेक्षकः सबिडालव्रतेन चरतीति बैडालव्रतिकोब्राह्मणोज्ञेयः॥१९५॥

[ यस्यधर्मध्वजोनित्यंसुराध्वजइवस्थितः॥ प्रच्छन्नानिचपापानिबैडालंनाम ....॥ ]

अधोदृष्टिर्नैकृतिकइति । अधोदृष्टिविनीतत्वख्यापनार्थम् अधएव निरीक्ष्यतेनैकृतिकोनैष्ठुर्यव्यवहारी स्वार्थसाधनतत्परः स्वार्थसाधनतन्निष्ठःशठः परानस्योपेक्षकोमिथ्याविनीतः कपटप्रश्रयवान् यः सबकवृत्तेनचरति इति बकव्रतधरोब्राह्मणः ॥ १९६ ॥ यइति । येब्राह्मणाबकव्रतबिडालचिन्हयुक्तास्तेन पापहेतुना कर्मणान्धतामस्राख्ये नरके पतन्ति॥१९७॥ नधर्मस्येति। पापंकृत्वा धर्मार्थंव्रतख्यापनव्याजेन धार्मिकोयमितिशूद्रादिमूर्खलोकमोहनंकुर्वन् तंनधर्मव्रतव्याजेन पापमवच्छाद्य प्रायश्चित्तं कुर्यात् ॥ १९८ ॥ प्रेत्येति। एवंविधाब्राह्मणाजीवन्तोमृताश्चात्मस्वरूपनिरूपणपरैर्निन्द्यन्ते तच्च व्याजचरितं व्रतंरक्षांसिगच्छति॥१९९॥ अलिङ्गीति। अब्रह्मचारी ब्रह्मचार्यादिवेषेण यस्तद्वृत्त्याजीवति सब्रह्मचार्यादीनांयत्पापंतदात्मन्याहरति। श्वादियोनौ च जायते। तस्मादेतन्न कर्तव्यम् ॥ २०० ॥ परकीयनिपानेष्विति । परकीयपुष्करिण्यादिषु न कदाचिदपि स्नायात् । तत्र स्नात्वा तत्पुष्करिण्यादिषु यत्पापंकर्तुस्तच्चतुर्थांशेन वक्ष्यमाणेन संबध्यते । धार्मिकाणामपि संचितकृतजन्मान्तरकृतंदुष्कृतंभवत्येवातोन धार्मिकनिपानस्नानेन पापाभावमसंगः ॥ २०१ ॥

[ सप्तोद्धृत्यततःपिण्डान्कूपेस्नायीतपंचवा॥ उदपानात्स्वयंगृह्यबहिः ......॥]

यानशय्यासनानीति । यानशय्यासनानि रथखट्वामंचकादीनि कूपारामगृहाणि च परस्यसंबन्धीनि अदत्तान्युपभुञ्जानस्तत्पापस्य चतुर्भागंप्राप्नोति अत्रचपरकीयग्रहणाददत्तग्रहणाच्च सर्वार्थोस्पृष्टानुज्ञातस्नानेनास्तिदोषः ॥ २०२ ॥ नदीष्विति। नदीष्वकृतकेषु तडागेषु सरःसुच महत्सु उदकाधारेषु छिद्रश्रोतःसु च सर्वदास्नानंसमाचरेत् अनेनैव परकीयनिपानव्यावृत्तिसिद्धौ च पृथग्वचनं तदात्मीयोस्पृष्टानुज्ञातेषुस्नानाभ्यनुज्ञानार्थंतत्रापीह नित्यग्रहणात् प्रथमंनद्यादिस्नाने यतितव्यं। तदभावेआत्मीयादिषु ॥ २०३ ॥ यमानिति । हिंसादयोवर्जनीयायमाः सन्ध्यानुष्ठानादयः कर्तव्यात्मकाःनियमास्तत्र गुरुलाघवज्ञोनियमलोपेनापि सर्वदा यमाननुतिष्ठेत् न यमत्यागेन नियमान्यस्मात्केवलान्

कर्तव्यरूपाननुतिष्ठन् वर्जनीयान् ब्रह्महत्यादीनवर्जयन्पतति नियमानुष्ठानेष्यनधिकृतोभवति । यथोक्तंगौतमेन द्विजातिकर्मभ्योहानिः पतनमित्येतच्च यमगौरवख्यापनार्थमुच्यते न नियमनिषेधार्थं । तेषांशास्त्रेण कर्तव्यतया चोदितत्वात् ॥ २०४ ॥

[ आनृशंस्यंक्षमासत्यमहिंसादममस्पृहा ॥ ध्यानंप्रसादमाधुर्यंआर्जवं चयमादश ॥ १ ॥
शौचमीज्यातपोदानंस्वाध्यायोपस्थनिग्रहः ॥ व्रतोपवासमौनंचस्नानंचनियमादश ॥ २॥ ]

**नाश्रोत्रियततइति** अनधीतवेदेन प्रारब्धे यज्ञेऽग्नीषोमीयादूर्ध्वमपि ब्राह्मणोन भुञ्जीतार्थात्पुनः अग्नीषोमीयादीक्षितस्य कदर्यस्येत्यनेनैवप्रतिषेधसिद्धिः। सूत्रकारेणाग्नीषोमीयावधिकंदीक्षितस्याभोज्यान्नत्वमुक्तं अतोदीक्षितस्यकदर्यस्येत्ययंप्रतिषेधस्तदवधिकएव सदाबहूनांयाजकेन ऋत्विजा स्त्रिया वा नपुंसकेन वा यत्र गृहे वैश्वदेवादिहोमः कृतः न तत्र कदाचिदपि ब्राह्मणोभुञ्जीत ॥२०५॥ **अश्लीलमिति** । यत्रपूर्वोक्ताहोमंकुर्वन्ति तच्छिष्टानांतदश्लीलमयुक्तंदेवानांच प्रतिकूलंतस्मादेतान् होमंन कारयेत् ॥ २०६ ॥ **मत्तक्रुद्धातुराणामिति** । क्षीबक्रुद्धव्याधितान्नंकेशादिमलद्वादशकृमिसंसर्गदुष्टंपादेन चेच्छातः स्पृष्टंनभुञ्जीत ॥ २०७ ॥ **भ्रूणघ्नावेक्षितमिति** । ब्रह्महादिपतितावेक्षितंरजस्वलाद्यस्पृश्यस्पृष्टंपक्षिणा काकादिनाऽऽस्वादितंशुना स्पृष्टंन भुञ्जीत ॥ २०८ ॥ **गवेति** । गवाघ्रातंकोभुङ्क्तइतिच यद्वाघुष्य दीयते मठब्राह्मणादिसंघान्नंच तथा वेश्यान्नंशास्त्रविदा चैतत् कुत्सितमिति यदुक्तंतन्नाश्नीयात् विशेषतइति प्रायश्चित्तविशेषार्थम् ॥ २०९ ॥ **स्तेनगायनयोरिति** । चौरगेयजीवितक्षकवृद्धयुपजीव्यन्नं भुञ्जीत । यज्ञार्थेदीक्षितस्य प्रागग्नीषोमीयाद्बद्धस्य बन्धनेन विनाप्ययोनिगडैर्निगडस्य दत्तायोनिगडस्याबन्धनेपि च ॥ २१० ॥ **अभिशस्तस्येति** । महापातकित्वेनोत्पन्नाभिशापस्यानिश्चितपापस्यापि नपुंसकस्य पुंश्चल्या व्यभिचारिण्या अगणिकाया अपि दांभिकस्य व्याजधर्मचारिणोन्नं भुञ्जीत । तथा शुक्तंयत् प्रातः स्वरसंकालान्तरेणोदकादि संसर्गकालान्तराभ्यांचाम्लीभवति पर्युषितंच राच्यन्तरितं शूद्रस्य चोच्छिष्टंनाश्नीयात् । शुक्तपर्युषितयोरभक्षणंपञ्चमे वक्ष्यतीहतु स्नातकव्रतत्वार्थमभिधानम् ॥ २११ ॥ **चिकित्सकस्येति** । वैद्यस्य चिकित्साजीविनः तथा लुब्धकानार्जवमकृत्युच्छिष्टादिनां उग्रस्य क्षत्रियेण शूद्रायांउत्पन्नस्य सूतिकोद्देशेन अनाशौचिभिरपि यत्कृतंकृतान्तराचमनंचतथा अनिर्गतदशाहिकंसूतिकान्नंमेतान्नस्य वक्ष्यमाणत्वान्न भुञ्जीत अन्ये तूग्रंराजान्नमाहुस्तदसद्याज्ञवल्क्येनोभयपाठात् ॥ २१२ ॥ **अनर्चितमिति** । अर्चार्हस्य यदकृतार्चंदीयते अकृतदेवताद्यर्चनंयन्मांसं अतिथ्यादेर्दीयते कल्पयितुंदेवान् पितॄंश्चार्चयित्वेत्येवमादेर्वक्ष्यमाणत्वान्नभुञ्जीत ॥ २१३ ॥ **पिशुनानृतिनोश्चेति** । भषकासत्यवादिक्रतुपुण्यविक्रयिनटसौविकानामुपकृतापकारिणश्चान्नंनाश्नीयात् ॥ २१४ ॥ **कर्मारस्येति** । कर्मारस्य निषादवेणयोश्च दशमाध्यायवक्ष्यमाणयोर्नटगायनव्यतिरिक्तस्यापि च रङ्गावतरणजीविनः सुवर्णकारशस्त्रविक्रयिणोश्चान्नंनाद्यात् ॥ २१५ ॥ **श्ववतामिति** । श्वक्रीडिमद्यविक्रयिवस्त्रधावनपटरागकृन्निष्ठुराणांजायाजारश्च यस्याविज्ञातोगृहेऽस्ति तेषामन्नंन भक्षयेत् ॥ २१६ ॥ **मृष्यन्तीति** । भार्याजारंये सहन्ते तदन्नमभोज्यमेव च गृहाद्रतायांजारिण्यां उपेक्षितायामपि प्रतिषेधः । सर्वकर्मसु कुयायत्नानामनिर्गताशौचंचमृतकान्नमप्रीतिकरंच न भुञ्जीत ॥ २१७ ॥ **राजान्नमिति** । राजान्नंतेजोनाशयति अतएव च राजान्नप्रतिषेधोबोद्धव्यः । नाद्याच्छूद्रस्य पक्वान्नं अधिकुलमित्रंचेतिशूद्रान्नप्रतिषेधंवक्ष्यत्यतस्तदन्नम-

ध्ययनादिनिमित्तंतेजोपहन्ति सुवर्णकारचर्मच्छेद्यन्ने आयुःख्याती हतइति व्यतिक्रमफलकथनम् ॥ २१८ ॥ कारुकान्नमिति । सूपकाराद्यन्नमपत्यानिहन्ति अस्याप्यतएव निषेधः । चर्मकारादीनांचान्नंगोबलीवर्दन्यायेन निर्देशोद्रष्टव्यः । एवमिह शास्त्रे सर्वत्र विज्ञेयम् । निर्णेजकान्नंच कर्मान्तरार्जितेभ्यः स्वर्गादिलोकेभ्यः आच्छिनत्ति ॥ २१९ ॥

[ वृत्तिक्षीणस्यलुब्धस्यदीनस्यवातुरस्यच ॥ शांत्यर्थमथयोभुंक्तेबलंतस्यापहन्यते ॥ १ ॥ ]

पूयमिति । चिकित्सकान्नादनेन तथाविधायांजातावुत्पद्यते यत्र पूयभुक् भवति । एवंपुंश्चल्यान्नंशुक्रंवार्धुषिकान्नंपुरीषं शस्त्रविक्रयिणः शुक्रविष्ठादिव्यतिरिक्तंमूत्रादिमलम् ॥ २२० ॥ यइति । साक्षादुक्तफलेभ्योये अन्ये क्रमेणाभोज्यान्नाःकथितास्तत्संबन्ध्यन्नंचर्मास्थिरोमाणि प्रशस्तबुद्धयोवदन्ति ॥ २२१ ॥ भुक्त्वेति । एषामन्यतमसंबन्ध्यन्नमज्ञानाद्भुक्त्वा त्र्यहमभोजनंकुर्यादिच्छातस्तु भुक्त्वा चरेत्प्राजापत्यंकृच्छ्रं । रेतोविण्मूत्रंचामत्या भुक्त्वा गौतमस्मरणात्तप्तकृच्छ्रमाचरेत् । तथाचाह । सुरायाअमत्या पाने पयोघृतमुदकंवायुप्रतिभ्यहंतप्तानि सतप्तकृच्छ्रः ततोस्यसंस्कारोमूत्रपुरीषरेतकुणपांप्राशने चैवमितिअत्र चान्यतमस्येति यद्यपिश्रुतंनथापि ॥ स्वभावकालसं सर्ग निमित्तःपरिणामतः ॥ भावाश्रयप्रदुष्टंचनित्यमन्नंविवर्जयेदिति ॥ सप्तविधस्यात्रपठितस्यापि दुष्टस्येदमेव प्रायश्चित्तमेकप्रकरणोपदेशादास्मिंश्च प्रकरणे एषांप्रायश्चित्तान्तरानाम्नानात् । शुक्तपर्युषितयोश्च पञ्चमाध्यायवक्ष्यमाणनिषेधयोरपीह प्रायश्चित्तविशेषार्थमेवान्नमित्याहुस्तदसदेवमभिप्रेतमुक्तत्रातोन्यतमदुष्टमित्येवमवक्षत्यपौरुषेयेषु हि ग्रन्थेषु लिङ्गमात्रमपि व्यवस्थाहेतुर्भवति । तावतैव वक्त्रानुशयानुमानात् एकप्रकारेणोपदेशश्च स्नातकव्रतत्वख्यापनार्थइह प्रायश्चित्तानाम्नातेपि चैषां एकादशाध्यायोक्तानि प्रायश्चित्तानि भविष्यन्ति । शुक्तपर्युषितयोश्चेह स्नातकव्रतत्वार्थमेवाभिधानम् । तस्माद्यथाश्रुतमेवत्याज्यंतत्र स्वभावदुष्टंमूत्रादि कालदुष्टंपर्युषितादि संसर्गदुष्टंदुष्टान्नादि परिणामदुष्टं शुक्तादि भावदुष्टं सद्यःपीडितद्राक्षारसादिआश्रयदुष्टंमत्तादिसंबन्धि अप्रकरणे चप्रायश्चित्तोपदेशोलाघवार्थंतत्रहि क्रियमाणेमत्तादिग्रहणकर्तव्यंस्यात् ॥ २२२ ॥ नाद्यादिति । श्राद्धादिक्रियाशून्यस्य सच्छूद्रस्य शास्त्रवित् द्विजः पक्वान्नंन भुञ्जीत अपि स्वन्नान्तराभावे आममेव न पक्वं एकाहोरात्रपर्याप्तंनाधिकमस्मात्प्रतिगृह्णीयात् ॥ २२३ ॥ श्रोत्रियस्येति । एकोऽधीतवेदः कृपणः परउदारोवृद्धिजीवी वा तयोर्गुणमुभयंविचार्य देवास्तुल्यमन्नमनयोरिति कल्पितवन्तःउभयोरपि गुणयोगात् ॥ २२४ ॥ तानिति । तान् देवान् ब्रह्मा आगत्य विषमंयत्तन्मासममिति व्याचष्ट यस्माद्वदान्यान्नं श्रद्धया पवित्रीकृतंभवति; कदर्यान्नंपुनरश्रद्धयावूषितमित्युभयप्रतिषेधेपि श्रद्धावद्वार्धुषिकान्नप्रतिप्रसवर्थमिदम् ॥ २२५ ॥ यतएवमतः श्रद्धयेति । दानधर्ममिति । आन्तर्वेदिकोबहिर्वेदिकश्च योदानाख्योधर्मस्तंश्रुताध्ययनादिसर्वगुणोपेतैर्ब्राह्मणंप्राप्यपरितोषाख्येनचित्तधर्मेणयथाशक्ति नित्यंकुर्यात् ॥ २२६ ॥ २२७ ॥ यत्किंचिदिति । प्रार्थितेनाकृतदोषविचारेण स्वल्पमपि यथासंभवंदातव्यं यस्मादनवरतंदानप्रवृत्तस्य कदाचिदवश्यंतथाविधंपात्रमागमिष्यतियद्दृष्टादृष्टदोषेभ्यो मोचयति ॥ २२८ ॥ वारिदइति । उदकप्रदः सौहित्यं अन्नदोऽनन्तसुखं तिलप्रदईप्सितान्यपत्यानि दीपदस्तिमिराद्यनुपहतंचक्षुः प्राप्नोति ॥ २२९ ॥ भूमिदइति । भूमिदोभूम्याधिपत्यंच सुवर्णदोदीर्घमायुः गृहदः श्रेष्ठानिगृहाणि रूप्यदउत्कृष्टंरूपंलभते ॥ २३० ॥ वासोदइति । वस्त्रदश्चन्द्रेण सह समानलोकतांचन्द्रलोकं अश्वदः अश्विभ्यांसमानलोकतां वृषदोमहतींश्रियं गोप्रदआदित्यलोकंप्राप्नोति ॥ २३१ ॥ यानशय्याप्रदइति । य-

खड्गादिमदो भार्या आर्त्तत्राणकृत्प्रभुत्वं धान्यप्रदः सार्वकालिकंसुखं वेदप्रदः परंब्रह्मसमानगतित्वंप्राप्नोति । सर्वत्रचात्रदेयद्रव्यसाराल्पभूयस्त्वाद्यपेक्षया दृष्टवत्यल्पस्याल्पबहुत्वकालादितारतम्यंविज्ञेयम् ॥ २३२ ॥ सर्वेषामिति । जलान्नगोभूवस्त्रतिलसुवर्णघृतादीनांसर्वेषांयानि दानानि तेषांमध्याद्वेददानंफलाधिक्याद्विशिष्यते ॥ २३३ ॥ येनेति । यादृशेन राजसेन सात्त्विकेन तामसेन वा शुद्धेन वा मध्यमेनाशुद्धेन वाचित्तधर्मेण च यद्यदेव द्रव्यंददाति तत्तद्द्रव्यंफलद्वारेण तु तेनैव दानगतभावेन भावानुरूपेणैव सुखंमध्यमदुःखंवताचितेन न जन्मान्तरेपूजितःसन्प्राप्नोति ॥ २३४ ॥ तस्माद्यत्नतः करेण देयम् यइति । यावदर्चापूर्वकंदानप्रतिग्रहौ कुरुतस्तौ द्वावपि दातृप्रतिग्रहीतारौस्वर्गंगच्छतोऽनर्चितकरेण पुनर्नरकंव्रजतः । प्रतिग्रहीतुःसत्यपि वृत्त्यर्थत्वे न दृष्टार्थत्वे प्रतिग्रहस्यार्चितमेव मया ग्राह्यंनान्यथे त्येवंनियमाददृष्टद्वारेण वचनान्नायुक्तः स्वर्गलाभः ॥ २३५ ॥ न विस्मयेतेति । महतापि कृच्छ्रचान्द्रायणादितपसा कृतेन मयाकियत्तपः कृतमित्येवमाश्चर्येनभजेत यागंचकृत्वा असत्यंनवदेत्सत्यपि पुरुषार्थत्वेनानृतनिषेधे यागाङ्गत्वार्थः पुनरुपदेशस्तथापीडितोपि ब्राह्मणान्ननिन्देद्दानंकृत्वाइदंमयादत्तमिति न कथयेत् ॥ २३६ ॥ यस्मात् यज्ञइति । यस्मात् यज्ञादीन्यनृतादिभिः कृतैरकृतसमानि भवन्ति तस्मादेतन्न कर्तव्यम् ॥ २३७ ॥ धर्मंशनैःसंचिनुयाद्वल्मीकमिवपुत्तिकाः ॥ परलोकेसहायार्थंसर्वभूतान्यपीडयन् ॥ सर्वप्राणिपीडांपरिहरन् परलोकोपकारार्थंमृद्राशिंयथा पिपीलिकाः संचिन्वन्त्येवंधर्मंशनैःशनैरर्जयेत् ॥ २३८ ॥ नामुत्रेति । यस्मात्परलोके सहायकार्यसंपत्यर्थंमातृपितृपुत्रभार्याबान्धवान तिष्ठन्त्यपि तु धर्मएव केवलउपकारार्थमास्ते तस्मान्न मात्राद्यपेक्षयाधर्ममुत्सृजेत् ॥ २३९ ॥ एकइति । एकएव सन् प्राण्युत्पद्यते नबान्धवैः सहैव एकएव म्रियतेसुकृतदुष्कृतफलेचैकएव भुङ्क्ते अतोमात्रादीनांजननमरणदुष्कृतपीडांश भोक्तृत्वाभावान्न तदपेक्षयाधर्मंजह्यात् ॥ २४० ॥ मृतमिति । मृतस्य शरीरंकाष्ठवदवज्ञयाभूमौ परित्यज्यपराङ्मुखाबान्धवागच्छन्ति नतत्साहार्थंवर्तन्ते । धर्मः पुनस्तंपरलोके यान्तंपश्चाद्गच्छति ॥ २४१ ॥ तस्मादिति । यस्माद्धर्मेण सहायेन सता दुस्तरनरकादि दुःखं तरति तस्माद्धर्मंसहायार्थंसर्वदा शनैरर्जयेत् ॥ २४२ ॥ धर्मप्रधानमिति । धार्मिकंपुरुषंकथंचित्प्रमादकृते च व्यतिक्रमे प्रायश्चित्तेनापगतपापं स्वतेजःपुंजोज्वलितविचरत्वात्ब्रह्मवदाकाशात्मकंसतंप्रकृतोधर्मः क्षिप्रंपरलोकंनयति । तस्माद्धर्मंशनैःसंचिनुयात् ॥२४३॥ उत्तमैरुत्तमैःसार्धमिति । कुलमुत्कृष्टतांनेतुमिच्छन्श्रुताभिजनायुत्कृष्टैःसहानवरतंकन्यादानादिसंबन्धान्नाचरेदवकृष्टांस्ततसंबन्धेषुपरिहरेत । उत्तमविधानादेवाधर्मन्यावृत्तिसिद्धौपृथग्वचनमुत्तमाभावेसमाप्यनुज्ञानार्थं ॥ २४४ ॥ उत्तमानुत्तमानेवगच्छन्हीनांश्चवर्जयन्निति । उत्तमसंबन्धेषूत्तमाननुसरन्निकृष्टांश्चवर्जयन्ब्राह्मणःश्रेष्ठत्वंप्राप्नोति । विपर्ययनपुनर्जातेरनपायाच्छूद्रतुल्यतांप्राप्नोति ॥ २४५ ॥ दृढकारीति । आरब्धसंपादनशीलोऽक्रूरः शीतातपादिद्वन्द्वसहिष्णुर्निर्दयाचारैः सहावसन् अहिंसकोयः सएवंनियमः सदमेनोपशमेनेन्द्रियसंयमाख्येन दानेन च स्वर्गंप्राप्नुयात् ॥ २४६ ॥ एधोदकमिति । काष्ठोदकफलमूलमाक्षिकमन्नंचायाचितोपनतमनापत्प्रकरणात्पतिताद्यत्यन्तकुत्सितवर्जं सर्वतःप्रतिगृह्णीयात्तथाभयंचात्मपरित्राणंअत्यन्तप्रीतिकरंमत्वादक्षिणातुल्यंआत्मभयरक्षणसमर्थमितिसर्वतश्चाण्डालादेरप्यङ्गीकुर्यात ॥ २४७ ॥ आहृताभ्युद्यतामिति । प्रतिगृहीतदेशमानीतांदातुंचोद्यमितांइदंतुल्यंदास्यामीत्येवंपूर्वकमकथितां गोहिरण्यादिभिक्षां दुष्कर्मकारिणोपि अनापत्प्रकरणात्पतिताद्यत्यन्तकुत्सितवर्ज्यंहिरण्यगर्भोग्राह्यं मन्यतेस्म ॥ २४८ ॥

[ चिकित्सककृतघ्नानांशिल्पज्ञस्यचवार्धुषेः ॥ षंढस्यकुलटायाश्चषण्णामेषांविवर्जयेत् ॥ १ ॥ ]

**नाश्नन्तीति** । तदीयंकव्यंपंचदशवर्षाणि पितरोनादन्ति हव्यंच पुरोडाशादिदेवान्प्रत्यग्निर्नप्रापयतियस्तांभिक्षांप्रत्याचष्टे ॥ २४९ ॥ **शय्यांगृहमिति** । शयनगृहदर्भोदकपुष्परत्नदधिधानामत्स्यक्षीरमांसशाकानि गन्धवन्तिच कर्पूरादीन्ययाचितोपस्थिता नि न प्रत्याचक्षीत । एधोदकादिवाक्यपठितस्योदकस्येहपुनःपाठः श्लोकद्वयस्यपठितयोः प्रत्याख्याने तुल्यत्वज्ञापनार्थः । तथाच गौतमः एधादीनिशय्यादिभिःसहैकस्मिन्सूत्रेपठितवान् ॥ २५० ॥ **गुरून्भृत्यानिति** । मातापित्रादीन्गुरून् भृत्यान्भार्यापुत्रादीनवश्यंभरणीयान् क्षुधावसन्नानुद्धर्तुमिच्छन्देवतातिर्थींश्च पूजयिष्यन्ननापत्प्रकरणात् पतिताद्यत्यन्तकुत्सिवर्जंसर्वतःप्रतिगृण्हीयान्नरूपान्तरसद्भावे सति तेन धनेनात्मनस्तृप्तिंकुर्यात् । मुख्योपायपरिक्षयेहवृत्तिकर्शितःसंसीदन्नित्यापद्धर्ममेवक्ष्यति ॥ २५१ ॥ **गुरुष्विति** । मात्रादिष्वतीतेषुतैर्वाविनागृहे पृथक्कृवसन्आत्मजीवमन्विच्छन्नापदि सर्वदा साधुभ्यएव प्रतिगृह्णीयात् ॥ २५२ ॥ **अधिकइति** । शूद्रेषु मध्यात्कर्षककुलमित्रगोपालदासनापिताभ्योज्यान्नाः यश्च त्वदाश्रितोहमित्येवमात्मानंसमर्पयेत् । शूद्रश्च नापितादिकर्मणा जीवेत्कारुककर्मभिरिति वक्ष्यति यथात्मनिवेदनंतेन कार्यम् ॥ २५३ ॥ तथाह **यादृशइति** । यादृशोस्य भवेदात्मा कुलशीलादिभिर्यादृशंच दृष्टार्थमदृष्टातिशयार्थंचोपचरणंकर्तुमिष्टंयेन वा प्रकारेण मृदुदकाद्याहरणादिनिमित्तंब्राह्मणंसेवेत । अनेन प्रकारेणात्मानंनिवेदयेत् ॥ २५४ ॥ यस्मात् **यइति** । यः कश्चित् प्रकृताच्छूद्रादन्योपि कुलादिभिरन्यथाभूतमात्मानंइत्थंभूतोहमित्यन्यथासाधुषु कथयति सआत्मरूपापलापतएव चोरोलोकेऽतिशयेन पापकृत्सर्ववस्तुप्रधानात्मापहारित्वात् ॥ २५५ ॥ **वाच्यर्थाइति** । सर्वेऽर्थाः शब्देषु संबद्धाःशब्दार्थसंबन्धस्यनियतत्वात् शब्दमूलकाश्च यतः शब्देभ्यः प्रतीयन्ते शब्दप्रतीतिपुरःसरंचार्थसंव्यवहारप्रतीतेः । शब्दविनियताइवातस्तांवाचंयश्चोरयेत् । अन्यदुक्त्वान्यदनुतिष्ठेत्ससर्ववस्तुस्तेयकृन्नरोभवति ॥ २५६ ॥ **महर्षिपितृदेवानामिति** । महर्षिपितृदेवानांस्वाध्यायप्रजायज्ञसंपादनेन यथाशास्त्रमृणसंशुद्धिंकृत्वा ततः पुत्रे सर्वांगृहधुरंच संन्यस्य धनार्जनाद्दानादीनाश्रितः सन् वाच्येके जुह्वति प्राणमित्यादि नीत्या ज्ञानबलान्महायज्ञादीन् संपादयन् गृहएवंकंचित्कालंवसेत् ॥ २५७ ॥ तथा च वसन् **एकाकीति** । निर्जने प्रदेशे एकाकी सन्नुपनिषदुक्तोपासनादिभिः परमात्मस्वरूपनिरूपणमात्महितं चिन्तयन् प्रकृष्टंश्रेयोमोक्षाख्यंप्राप्नोति ॥ २५८ ॥ **एषेति** । एषा ऋतादिकाजीविका नित्या अनित्या या आपदि विधानाद्गृहस्थस्य ब्राह्मणस्योक्ता । तथा स्नातकव्रतविधिश्च सत्त्वाख्यगुणवृद्धिकरप्रशस्तस्यैवोक्तः ॥ २५९ ॥ **अनेनेति** । अनेनोक्तशास्त्राचारेण वेदार्थविद्ब्राह्मणोनित्यकर्मानुष्ठानेनोपक्षीणपापः सन् ब्रह्मलोके महिमानमश्नुते ॥ २६० ॥ ॥ इतिश्रीभट्टमाधवात्मजगोविन्दराजविरचितायांमन्वाशयसारिण्यांटीकायांगार्हस्थ्यसदाचारश्चतुर्थोध्यायःसमाप्तः ॥

---

# ॥ अथपञ्चमोऽध्यायः ॥

**ॐनमःशिवाय ॥** ॥ श्रुत्वैतानिति । **इदमूचुर्महाभागमिति** । तान् यथोक्तान् स्नातकधर्मान् ऋषयःश्रुत्वा अग्नेर्जातंपरोपकारिणंभृगुमिदंवक्ष्यमाणमुक्तवन्तः । प्रथमेऽध्याये मनुप्रभवत्वंभृगोरुक्तमिहतु श्रौतार्थवादवश्याग्निप्रभवत्वमुच्यते । तत्र हि तस्य यद्रेतसःप्रथममुदीप्यत तदसावादित्योभवत् । यत्द्वितीयमासीत्तद्भृगुरितिश्रूयते ऽतएव [ भ्र ] ष्टाद्रेतसउत्पन्नइति भृगुरित्येवंचैकस्मिन्जन्मनि तस्यैकंकारणमन्यस्मिंश्चापरमिति नकदाचिदनुपपत्तिः ॥ १ ॥ **एवमिति** । एवमतिक्रान्तं शास्त्रोक्तंस्वधर्ममाचरतांवेदशास्त्रज्ञानां ब्राह्मणानांकथंप्रभोमृत्युराक्रामति । न तेषांवेदोक्तायुषांपुराम्रत्युनाभाव्यं आयुःक्षयकारणस्य धर्मपरिलोपादेरभावात् ॥ २ ॥ **सतानुवाचेति** । **अनभ्यासेनेति** । वेदानभ्यासाचारलोपालस्यान्नदोषाख्यायुःक्षयकारणान्येवंच वेदाभ्यासाचारानुष्ठानानालस्येषूक्तशास्त्रप्रमेयभूतेषु कृतेष्वपि यदावक्ष्यमाणान्नदोषेन परिह्रियते तदा तेन हेतुभूतेनाकालमृत्युर्विप्रान्हन्तुमिच्छति ॥ ३ ॥ ४ ॥ कःपुनःरसावन्नदोषइत्याशङ्कितमाह **लशुनमिति** । लशुनगृञ्जनपलाण्डुवाख्यानि शाकानि । कवकंछत्राकविशेषः । खुकुखण्डकमित्यायुर्वेदप्रसिद्धममेध्यप्रभवानिच मनुष्यादि जग्धप्रबीजपुरीषनिर्गतत्वेन केवलामेध्योत्पत्तिकानि पुरीषस्थानोत्पन्नानि चामेध्यसंसर्गप्रभवानि तण्डुलीयकादीनि द्विजातीनामभक्ष्याणि । द्विजातिग्रहणंशूद्रपर्युदासार्थं चातुर्थ्यत्वभक्ष्यप्रकरणं । ब्राह्मणस्यैव नाश्रोत्रियततेयज्ञइत्युपक्रम्यभुञ्जीतब्राह्मणःक्वचित् इत्यभिधानादतएवप्रकरणभेदः ॥ ५ ॥ **लोहितानिति** । लोहितान्यत्रपुष्पादिव्यतिरिक्तान्प्रश्चावादिना वृक्षेभ्योनिर्गतांस्तथा । वृक्षेगुन्दप्रदेशोद्भवांशेलुंच श्लेष्मातकं शेलुःश्लेष्मातकःस्मृतइतिअभिधानकोशादायुर्वेदप्रसिद्धेः । ननु क्षीरसूतक्षीरसंतानिकायथान्यैर्व्याख्यातमसिद्धेः । **गौसंबन्धिच पीयूषं** । नचप्रसूतायागोःक्षीरंयदग्निसंयोगात्कठिनीभवति तद्यत्नतोवर्जयेदेतच्चदशाहात्परेणापि यदिकदाचित्स्यात्तदानिषिध्यते । दशाहीनवर्तिनस्त्वनिर्दशायागोःक्षीरमित्यनेनैवसिद्धत्वात् ॥ ६ ॥ **वृथाकृशरसंयावमिति** । कृशरंतिलमुद्गसिद्धमोदनं संयावंघृतगुडक्षीरादिकृतं पुष्करिकेतिप्रसिद्धं । पायसमपूपंच । वास्तुयक्षादिविशिष्टदेवतायागोद्देशमन्त्रेणकृतं । कृतान्वाह्निकवैश्वदेवकार्यमपि न भक्षयेत्तथोपाकरणाख्यश्रौतसंस्कारविशेषार्हाणांगोष्यजानांयान्यनुपाकृतानिमांसानि तानि कल्पयता न भक्षयेदतिथ्यादेस्त्वनर्चितंवृथामांसमित्युक्त्वा देवान्नानिच निवेदकादीनि **हवींषिच** प्राग्घोमाद्वर्जयेद्धविः । शेषस्याहभक्ष्यत्वंवक्ष्यति ॥ ७ ॥ **अनिर्दशायेति** । प्रसूतायाश्चअनिर्गतदशाहायागोःसंबन्धिक्षीरं ततोष्ट्रसंबन्धिअश्वायेकशफैडकसंबन्धिच तथा ॥ अदुग्ध्यादोहकालेवृषसन्धिनीसद्भिरिष्यतइति त्रिकाण्डाभिधानाद्वक्षक्षीरायाअपिसन्धिन्याःक्षीरं तथामृतवत्सायाश्च गोःपयोवर्जयेत् । वत्सपदग्रहणादेव गविलब्धायांगोग्रहणंगोरेव नत्वजामहिष्योरिति ज्ञापनार्थं । अत्रक्षीरग्रहणे प्रकृते सन्धिनीक्षीरंविवत्सायाश्चगोःपयइति पुनःक्षीरग्रहणपयोग्रहणाच्च सन्धिनीविवत्सायाश्चगोःपयइति । पुनःक्षीरग्रहणपयोग्रहणाच्च सन्धिनीविवत्सायाश्च क्षीरमेव प्रतिषिध्यते । ननु तद्विकाराइतिकश्चिदाह तदसत् । स्वभावाशुचिनोविकाराभ्यनुज्ञानस्याभ्याप्यत्वात्तथाचाशुभान्नेषु तस्य निषेधदर्शनं । शङ्खश्चाह ॥ क्षीराणियान्यभक्ष्याणितद्विकाराशनेबुधः ।

(१) [भ्र] = भृ ( मूले ) । (२) भ्रष्टात् = स्रष्टुः ( गो० ५ )

समरात्रव्रतं कुर्यात्प्रयत्नेनसमाहितः ॥ इति सन्धिन्याश्च तद्धितनिर्देशस्याकृतत्वाच्च क्षीरग्रहणंकर्तुमुपयुज्यते सन्धिनीक्षीरमिति च समासान्तवर्तित्वात्क्षीरशब्दस्य गोःपयइति पयोग्रहणमुपयुज्यते ॥ ८ ॥ **आरण्यानामिति** । माहिषवर्जमारण्यानांसर्वेषां हस्त्यादीनांमृगाणांसंबन्धिक्षीरंस्त्रैणंचवर्जयेत्तथा यानि ग्रामत्वरसानिकालान्तरेणोदकादिसंसर्गकालपरिवासाभ्यांचाम्लीभवन्ति तानि सर्वाणि शुक्तानि वर्जयेत् । चातुर्थकसूत्रे शुक्तपर्युषितप्रतिषेधःलताकव्रतार्थइत्युक्तं ॥ ९ ॥ अत्रप्रतिप्रसवमाह **दधिभक्ष्यन्तुशुक्तेतुसर्वेचदधिसंभवमिति** । शुक्तेषुमध्याद्दधितत्संभवंतुसर्वंउदश्विदादि । यानिचशुद्धैःपुष्प्यादिभिरुदकेनसहसंबध्यन्ते तानि भक्षणार्हाणि । आचारस्य च स्मृतिवाक्यव्याख्यानस्थानीयत्वाचआचाराविरोधीसस्मृत्यर्थः ।¹ कल्पयितुंन्याय्योऽतःशिष्टाचारानतिक्रमेण पुष्पादिग्रहणंद्रव्यान्तरप्रदर्शनमपिविज्ञेयं । अत्रचाभिषुतशुक्तप्रतिप्रसवात्सर्वशुक्तानीत्यप्रतिषेधोऽप्यभिषुतविषयएव । ततःस्वभावशुक्तानामामलकादीनामप्रतिषेधः इतिकेचित् तदसद्दधिभक्ष्यंनित्यनभिषुतस्यापि प्रतिप्रसवान्नामलकादीनामभक्ष्यतापत्तिर्नह्यम्लापर्ययशुक्तशब्दोपियथोक्तार्थएव ॥ १० ॥ **क्रव्यादशकुनीन्सर्वानिति** । आममांसमेवयेभक्षयन्ति तान्श्येनादीन्सर्वान्पक्षिणोवर्जयेत् । एवंचोभयभक्ष्याणांमयूरादीनामप्रतिषेधः । तथाचशङ्खः ॥ तित्तिरंचमयूरंचलावकंचकपिञ्जलं ॥ वाध्रीणसंवर्तकंचभक्ष्यानाहयमःसतां ॥ इति ग्रामनिवासिनश्च पक्षिणःपारावतादीन्वर्जयेत् । तथाश्रुतौ भक्षत्वेनचोष्ट्रंवडवमालभेत तस्यच मांसमश्नीयादितिवचनेननिर्दिष्टाएकशफाःखरादयः तान्वर्जयेद्येतुयत्रनिर्दिष्टास्तांस्तत्रैवभक्षयेद्यज्ञाङ्गत्वेन तेषांतत्रैव भक्ष्यत्वनोदनान्यान्यत्र टिट्टिभाख्यंच पक्षिणंवर्जयेत् ॥ ॥ ११ ॥ **कलविङ्कमिति** । कलाविंकोग्रामचटकोनिगमेषु पाठात्तस्य वर्षासु वनवासत्वेनोभयनिवासात् ग्रामनिवासप्रतिषेधः । वृत्याशंकायामिदंवचनं । तथाप्लवंसंकटविलाख्यंपक्षिणं हंसचक्रवाकग्रामकुक्कुटशुकसारिकांवर्जयेत् । ग्रामकुक्कुटग्रहणमारण्याभ्यनुज्ञानार्थम् । तस्य ग्रामनिवासित्वादेवप्रतिषेधसिद्धेर्जात्यैकाद्यारण्यस्याभक्षिताशङ्कास्यात्तदर्थंवचनं ननु ग्रामनिवासित्वादेवप्रतिषेधसिद्धेः ग्रामकुक्कुटप्रतिषेधसित्थ्यैग्रामकुक्कुटग्रहणमेतद्व्यतिरिक्तग्रामनिवासिविकल्पार्थं किंव्याख्यायते किमारण्याभ्यनुज्ञातपरत्वेनेति नैवं स्वपदार्थगतप्रयोजनसद्भावेसतिवाक्यान्तरगतविशेषावधारणपरत्वस्यान्याय्यत्वात् । सारसंलक्ष्मणाख्यंपक्षिणंरज्जुदालंचपायिकाख्यंदात्यूहंचवातकजल कुक्कुटशब्दाभ्यांप्रसिद्धंवर्जयेत् ॥ १२ ॥ **प्रतुदानिति** । प्रतुद्य चञ्च्वाभक्षयंतितान् दार्वाघाटादीन्जालपादांश्चकोयष्टिधूमरिकाख्यंपक्षिणंनखैर्विक्षिप्यये भक्षयंति तान्श्रद्धाभ्यनुज्ञानारण्यकुर्कुटव्यतिरिक्तांश्चकोराककुभादींश्चतथा निमज्ययेमत्स्यानदन्ति मन्वादयस्तान्सूनाघातनस्थानमित्याभिधानिकस्मरणादाघातस्थानेभवंमांसंभक्ष्याणामपिवल्लूरंशुष्कमांसंवर्जयेत् । जालपादत्वादेवप्लवहंसचक्रवाकानांनिषेधसिद्धौ पृथग्वचनंतदन्येषांमायादीनांविकल्पज्ञापनार्थम् । विकल्पश्चापदि भक्ष्याण्यनापदि नेत्येवंव्यवस्थितोविज्ञेयः । यतोबुद्धिपूर्वकारिविरचितेग्रन्थआचार्यस्यैवमभिप्रायमुन्नीयते । नूनंजालपादप्रतिषेधोनाल्पसति येनजालपदविशेषान्हंसादीन् स्वशब्देन निषेधति नचात्यन्तानास्वासस्तदा सति जालपदप्रतिषेधोनर्थकस्यात्तस्माद्विशेषोऽत्रानुमीयते । कस्यांचिदवस्थायामप्यादीनांभक्षणमभिमतं कस्यांचित्प्रतिषेधएवेति । तेनापदि तु भक्षणमनापदि तु निषेधएव प्रतिषेधद्वयार्थत्वात् । यदि पुनस्तुल्यविकल्पः स्यात्तदा जालपदनिषेधस्यानर्थक्यमेवस्यात्तद्वचनमन्तरेणैव तथाविधविकल्पस्य कदाचित् भक्ष्याणि कदाचिन्नेत्येतनफलंसंपद्यते । तच्च ज्ञापनमन्तरेणैव लौकिकत्वाद्भक्षणस्यार्थित्वानर्थित्वाभ्यांसिद्धं तस्माज्जालपदप्रतिषेधाभिधानादेव

(१) शुक्तानि इतिकुल्लूके ।

ष्यवस्थितोयंविकल्पइत्यवसीयते ॥ १३ ॥ **बकंचैवेति** । बकंबलाकंकाकोलंचद्रोणकाकं । काकोलोद्रोणका-कउदात्दतइतित्रिकाण्डपाठात् । खञ्जरीटाख्यंपक्षिणं । मत्स्यादांश्च पक्षिणोपि नक्रादीन् ग्रामशूकरांश्च मत्स्यांश्च सर्वान्वर्जयेत् ॥ १४ ॥ अस्यार्थवादः **योयस्यमांसमिति** । योयत्संबन्धि मांसमश्नाति तन्मांसादएव निन्दार्थमुच्यते । नान्यमांसादपापदेशंलभते मत्स्यादः पुनः सर्वमांसभक्षइति व्यपदेष्टुंयुज्यतेतान्मत्स्यान्वर्जयेत् ॥ १५ ॥ इदानींजातिवि-शेषक्रियाविशेषसमवलंबनेन मत्स्यप्रतिप्रसवमाह **पाठीनरोहितावि**ति । पाठीनश्चंद्रकाख्योमत्स्यभेदएव । रोहितोपि रोहितमत्स्याख्यस्तौ देवपित्र्यकर्मविनियुक्तावित्यदनार्हौ नत्वन्यत्र । राजीवाः पुनः पद्मवर्णामत्स्यविशेषास्तथा सिंहमुखाः सशल्काश्च शकलिचिलिचिमशब्दाभ्यामायुर्वेदप्रसिद्धाः सर्वदा हव्यकव्याभ्यामन्यत्रापि भक्षणार्हाः ॥ १६ ॥ **नभक्षयेदि**ति । यएककाप्रायेणाटन्ति सर्पादयस्तांस्तथा अभियुक्तैरपि नामजातिभिर्येमृगप-क्षिणोन ज्ञायन्ते तान्विशेषसामान्यप्रतिषेधानाक्रमणे सति भक्ष्यपक्षे पतितत्वा भक्षत्वेन समुद्दिष्टानेवंपञ्चनखांश्च सर्वान्नरमार्जारादीनभक्षयेत् ॥ १७ ॥ अत्रप्रतिप्रसवमाह **श्वाविकंशल्पकंगोधाखड्गंकूर्मशशांस्तथे**ति । श्वाविकंसेधाख्यंप्राणिभेदं वाल्पकं चापंगोधांच प्राणिविशेषंखड्गंगण्डकंकूर्मकच्छपंशशंच पञ्चनखेषु मध्याद्भ-क्षणार्हान्मन्वादयआहुः । तथैकदन्तपङ्क्त्युपेतेषु मध्यादुष्ट्रवर्जितानजादीनिति ॥ १८ ॥ **छत्राकमिति**[1]। कवकग्रामसूकरलशुनादीनामन्यतमंबुद्धिपूर्वप्रायश्चित्तगुरुत्वादभ्यासतोभक्षयित्वा द्विजातिःपतेत् । द्विजातिकर्मभ्यो-हानिःपतनमिति । ततश्चप्रायश्चित्तंतस्य न भवति तथा वक्ष्यति ॥ गर्हितानाद्ययोर्जग्धिःसुरापा-नसमानिषट् इति ॥ १९ ॥ **अमत्यैतानी**ति । एतानि छत्राकादीनि षट्बुद्धिपूर्वकंप्रत्येकंभक्षयित्वा एकाद-शाध्यायवक्ष्यमाणस्वरूपं सप्ताहंसान्तपनं यतिचान्द्रायणं चरेत् । एतद्यतिरिक्तेषु । लोहितनिर्यासादिषु प्रत्येकभक्षणेऽहोरात्रंनाश्नीयात् । प्रायश्चित्तस्य प्रकर्षेणोत्कर्षोलशुनादीनांवर्जनादरार्थं । शेषेषूपवसेदहरित्येत-त्पुनर्लाघवार्थम् । तत्रहि क्रियमाणे लोहितवृक्षनिर्यासादिग्रहणंकर्तव्यंस्यात् ॥ २० ॥ **संवत्सरस्यैकमपी**ति । **संवत्सरस्य मध्ये** ब्राह्मणःशेषेषूपवसेदहरिति समनन्तरप्रस्तुतलोहितवृक्षनिर्यासाद्यसंवेत्ति भुक्तप्रायश्चित्तार्थमपि कृच्छ्र-कृच्छ्रमध्येप्रथमाम्नानात् । प्राजापत्यंचरेत्कृच्छ्रमिति तस्य पुनरभक्षणविशेषतोयद्यस्यचोदितंप्रायश्चित्तं तदेव कुर्या-दतएवच ज्ञायते । असंवेत्ति तत्कृतेपि व्यतिक्रमे पापंप्रायश्चित्तंभवतीत्येवंच ॥ त्रीणि देवाःपवित्राणिब्राह्मणानाम-कल्पयन् ॥ अदृष्टमद्भिर्निणिक्तमित्येतत्प्रायश्चित्तव्यतिरिक्तविषयेऽवतिष्ठते । तथाच द्रव्यशुद्धिप्रकरणएतदार्येणा-भिहितं । ब्राह्मणग्रहणंद्विजप्रदर्शनार्थं त्रयाणांप्रकृतत्वात् । एतदुक्तंद्विजातीनामितिचोपसंग्रहात् ॥ २१ ॥ **यज्ञार्थमि**ति । यागार्थंब्राह्मणादिभिःकृतैःप्रशस्तायेच उदिताःश्रुतौ मृगपक्षिणास्तेवध्याइति श्रुत्युक्तानुवादोभृत्यानांचैवेत्येतद्विधित्सि-तं स्वाम्याद्यापनार्थं भृत्यानामवश्यभरणीयानावृद्धमात्रादीनांस्थित्यर्थंच वध्याअगस्त्योयस्मात्पूर्वमेवंकृतवानिति चोपसंग्रहात् ॥ २२ ॥ **बभूवुरि**ति । यस्माच्चिरन्तनेष्वपि संबन्धिषु यज्ञेषु ब्राह्मणक्षत्रिययज्ञेषु च भक्ष्या-णांमृगपक्षिणांसंबन्धिनामांसेन पुरोडाशाअभूवन् । तस्माद्यज्ञार्थमपिनेवध्याः ॥ २३ ॥ अधुना पर्युषितप्रति-प्रसवार्थमाह **यत्किंचिदि**ति । यद्भक्ष्यंखरविशदमभ्यवहार्यं । मोदकादि यच्चभोज्यं । पायसादिउपघातान्तररहिततंद्दधि-घृतादिस्नेहसंयुक्तंकृत्वा पर्युषितमपि राज्यान्तरितमद्यमदनार्हमित्येवं तच्छब्दव्यत्ययेनैतत्व्याख्येयं । यथाश्रुता-

(१) पक्षिणोपि=अपक्षिणोपि ( गो० २, ५ ).

याजनायांहविर्योभिघारणेसति स्नेहसंयोगात्रश्यंभावित्वाद्धविः । शेषस्य यत्किंचित्स्नेहसंयुक्तमित्यनेनैव सिद्धत्वेसति पुनरभिधानमनर्थकंस्यात् । यच्च हुतशिष्टपुरोडाशादि पर्युषितं स्यात्तद्भोजनकाले स्नेहसंयोगशून्यमप्यदनार्हं ॥२४॥ **चिररिक्तमिति** । यवगोधूमक्षीरविकाराःसर्वेनेकराभ्यन्तरिताःसन्तः स्नेहप्रोक्षणरहिताअपि द्विजातिभिरदनीयाः ॥ २५ ॥ **एतदुक्तमिति** । द्विजातीनामेतत्भक्ष्याभक्ष्यंनिःशेषेणोक्तंअतऊर्ध्वंमांसस्यभक्षणे वर्जनेच विधिविधानंवक्ष्यामि ॥ २६ ॥ **प्रोक्षितमिति** । प्रोक्षणाख्यश्रौतसंस्कारयुक्तगोव्यजसंचितिमयमांसंतद्भक्षयेदिति । श्रुतिकर्माङ्गभूतभक्षणनियमानुवादोयं ब्राह्मणक मनादिर्निमित्तभक्षणनियमसाम्यापादनार्थः । यत्तुप्रोक्षितपरिसंख्यार्थत्वमाहुस्तदसदनुपाकृतमांसानि इति अस्याप्रोक्षितप्रतिषेधार्थत्वात् । ब्राह्मणानांचेति ब्राह्मणप्रार्थनयात्यक्तप्रतिषिद्धमांसाशिनोपि च ब्रह्मचर्यादिनियमतोश्नीयात्तथाश्राद्धेमधुपर्केवा तदामिषंणकर्तव्यं । नामांसोमधुपर्कःस्यादिति स्मृतिगृह्यशास्त्रप्रयुक्तेनाब्राह्मणेनापिनियुक्तोनियमितोभक्षयेत् । तथाचनियुक्तस्त्वित्यतिक्रमदोषंवक्ष्यति प्राणात्ययेपि चक्षुर्निमित्ते व्याधिनिमित्ते च त्यक्तमांसाशिनोपिच ब्रह्मचर्यादिनियमतोभुञ्जीत ॥ २७ ॥ **प्राणस्येति** । कोष्ठ्यस्यवायोःशरीरावस्थित्यर्थमिदंसर्वंप्रजापतिरन्नंकल्पितवान् । किंतदतआह । पश्वादिजङ्गमं मूलफलादिचस्थावरं सर्वंप्राणस्य भोजनं तस्मात्प्राणात्यये मांसमदनीयमिति । प्राणात्ययमांसभक्षणार्थवादः ॥ २८ ॥ **चराणामिति** । जङ्गमानामजङ्गमाःस्थावराण्यन्नं । दंष्ट्रावतांच व्याघ्रादीनांअदंष्ट्रुर्वादयः । हस्तवतांमार्जारादीनांअहस्तामत्स्यादयः । शूराणांसिंहादीनांभीरवोहस्त्यादयः । अनिमित्तपूर्वश्लोकस्यैवायंप्रपञ्चः । इत्थंप्रजापतिकल्पनायांसत्यां ॥ २९ ॥ **नात्ताद्त्यतीति** । अदनार्हान्नमागिनोहरहरप्यश्नन्भक्षयिता न दोषान् प्राप्नोति । यस्मात्प्रजापतिनैवादनार्हाभक्षयितारश्चोत्पादिताइति । प्राणात्ययमांसभक्षणनियमदार्ढ्यार्थोयमर्थवादोनहेतुःप्राण्युपघातनिषेधोपदेशात् ॥ ३० ॥ **यज्ञायेति** । यज्ञसंपत्त्यर्थंतदङ्गभूतंयन्मांसभक्षणमेतद्देवोचितमनुष्ठानमतएवयत्नतःकार्यं । एतद्व्यतिरिक्तप्रकारेण पुनर्मांसभक्षणप्रवृत्तीरक्षःसमुचितमाचरणं मन्वादिभिरुच्यते । तस्मादेतन्नकार्यमिति प्रोक्षितभक्षणनियमादनुवादार्थः ॥ ३१ ॥ **क्रीत्वेति** । क्रीत्वात्मनाचोत्पाद्य यथोक्तंभृत्यानांचैव भृत्यर्थेइत्यनेनचानीतं यथोक्तंधानामत्स्यान्ययांमांसमित्येवंविधिमांसंदेवपितृभ्योदत्वाश्नन्पापंनप्राप्नोतीत्युपाकरणानर्हशशादिमांसविषयमिदमुपाकरणार्हगोव्यजमांसस्यानुपाकृतस्य देवाद्यर्चनशिष्टस्यानुप्यपाकृतमांसादीनि प्रतिषेधात् ॥ ३२ ॥ **नाद्यादिति** । मांसभक्षणप्रकारज्ञोद्विजोनापदि देवाद्यर्चनविधानंविना मांसंनाश्नीयात् । यस्मादविधानेनयोमांसमश्नाति समृतःसन्परलोकेतैःप्राणिभिःपरवशोभुज्यते । यन्मांसमनेन भक्षितंयुक्तंइतिपूर्वार्थवादः॥३३॥**नतादृशमिति** । मृगवधजीविशबरादिव्यतिरिक्तस्य धननिमित्तंमृगाणांहंतुर्नतथाविधंपापंभवति । यादृगकृतदेवाद्यर्चनानि खादतः परलोके भवतीति पूर्वार्थवादएव ॥ ३४ ॥ **नियुक्तस्तुयथावद्योमांसंनाश्नातिमानवइति** । श्राद्धमधुपर्कयोःशास्त्रमर्यादानतिक्रमेण नियुक्तःसन्योमनुष्योमांसंनाश्नाति समृतःसन्नेकविंशतिजन्मानिपशुत्वंप्राप्नोति । इति यथाविधिनियुक्तस्त्विति एतन्नियमव्यतिक्रमफलकथनं ॥३५॥ **असंस्कृतानिति** । पशुयागादिचोदितप्रोक्षणादिमन्त्रसंस्काररहितान् गोव्यजादिपशून् विप्रादिर्नकदाचिदप्यद्यात् । किंतर्हिनैमित्तिकंवैदिकपशुयागादिविधिमाश्रितःसन्मन्त्रसंस्कृतादेवाश्नीयादित्यनुपाकृतमांसार्थे निरूपणार्थवादमेनत ॥३६॥ **कुर्यादिति** । सङ्गेभूतादि दोषेण शरीराद्यवसादे सति तद्विनाशनार्थंघृतमयींवा पशुप्रतिकृतिमुपहरेत । न पुनर्देवाद्युद्देशमन्तरेणैवपशुंहंतुंनकदादपीच्छेत ॥ ३७ ॥ यस्मात् **यावंतिपशुरोमाणीति** । वृथाउद्देशमन्तरेणयःपशुंहंति समृतःसन् तस्य हतस्य पशोर्यत्सकाशात्संख्याकान् वारान्जन्मनिजन्मनिमारणंप्राप्नोति तस्माद्वृथा पशुंनहन्यात् । हु शब्दआगमसूचकः ॥ ३८ ॥ **यज्ञार्थमिति** । यज्ञसंपत्त्यर्थंप्रजापतिनात्मनैवादरेण पशवःसृष्टायज्ञ-

श्वाग्नौप्रास्तेति न्यायेन नास्यजगतःभूत्यभिवृत्त्यर्थंतस्माद्यज्ञेयोवधः सोधर्मःख्यवधकार्याभावादवधएव ॥ ३९ ॥ **ओषध्यइति** । ओषधयोदर्भाद्याः पशवोछागादयः वृक्षाःप्लक्षाद्याः तिर्यञ्चःकूर्मादयः पक्षिणःकपिञ्जलाद्याः यज्ञार्थंविनाशंप्राप्तास्तेततःतमधर्मार्जितंनिकर्षंहित्वा पुनरात्मज्ञानाधिकृतशरीरलाभेनोत्कर्षान् प्राप्नुवन्ति ॥ ४० ॥ **मधुपर्केचेति** । राजर्त्विकूस्नातकेत्येवमादिनोदिते गृह्योक्तस्वरूपे मधुपर्के यज्ञेच ज्योतिष्टोमादौ पित्र्ये दैवे च कर्मण्येवपशवोहिंसनीयाः नान्यत्रेत्येवंमनुरुक्तवान् ॥ ४१ ॥ **एष्वि**ति । परमार्थिक-वेदार्थज्ञोद्विजएतेषु मधुपर्कादिषु पदार्थेषु पशून्हिंसन् आत्मानंतांश्चपशूनुत्तमांगतिंस्वर्गादौ विचित्रशरीरसं-बन्धंप्रापयति । न चान्यत्रान्यदीयकर्मणः कथमन्यस्यफलप्राप्तिरिति नोदनीयशब्दप्रमाणकोर्थोयत्तशब्दोबोधयति तत्तथैवप्रतिपादनीयमन्यथाशब्दप्रमाणकधर्मार्थफललाभेपिकआश्वासः । पशुसञ्ज्ञपमन्त्रमध्येवेदआम्नायते ॥ नवाउए-तन्म्रियसेनरिष्यसिदेवाइदेषिपथिभिःसुगेभिरिति पशुंकिलहोतैवमाह ॥ नत्वैत्वंम्रियसेनापिरिष्यसिहिंस्यसेकिंतर्हिसुगैर्नि-कृष्टयोनिव्यवधानशून्यैर्मार्गे देवानेषि स्वर्गंप्राप्नोषीत्यर्थः ॥ एवंचान्यत्रस्वपरोपकारभावात् ॥ ४२ ॥ **गृह**इति । गृहस्थवानप्रस्थब्रह्मचारिभिक्षुवस्थःप्रशस्तात्माद्विजःअपाद्यपिअशास्त्रितांहिंसांनाचरेत् ॥ ४३॥ कथंपुनस्तुल्येप्राणिव्यापा-दनेलौकिक्या अधर्मःशास्त्रीयायाधर्मइत्यतआह **येति** । याशास्त्रनोदिता हिंसा स्थावरजङ्गमेस्मिञ्जगति अनादिकाल-प्रवृत्तांतांहिंसाकार्याभावादहिंसामेवविद्यादतोनान्यप्रमाणकोधर्मोवेदादेवनिर्बभौ प्रकाशतांगतः । एवंच नात्र कुता-र्किकवितर्काआक्रामन्ते ॥ ४४ ॥ **योऽहिंसकानी**ति । योनुपघातकान्प्राणिनोहरिणादीनात्मसुखाभिलाषेण हिनस्ति सइहलोके परलोके न कदाचित् सुखंवर्धते ॥ ४५ ॥ **योबन्धनवधक्लेशादि**ति । योबन्धनवधत्रासादीन्प्राणिनां-कर्तुंनेच्छति ससर्वस्यहितप्रापणेच्छार्थलोअनन्तंसुखंप्राप्नोति ॥ ४६ ॥ **यत्ध्यायती**ति । यश्चिन्तयतिभगवदीश्वरा-राधनादि यद्वाकुरुते हरिहरचरणनमस्कारादि यत्रवा भवभक्तिभावनादौ रतिंबध्नाति तत्सर्वमयत्नेनप्राप्नोति यआततायादीनपिप्राणिनोनहिनस्त्येवंमांसभक्षणप्रसङ्गेनगुणदोषानभिधायाधुनाप्रकृतमनुसर्तुमाह ॥ ४७ ॥ **नाकृत्वे**ति। प्राणिहिंसामन्तरेण न क्वचिन्मांसमुत्पद्यते । प्राणिवधश्च स्वर्गनिमित्तं न भवति प्रत्युतनरकादिहेतुस्तस्मादविधिना-मांसभक्षणंवर्जयेत् ॥ ४८ ॥ **समुत्पत्तिंचे**ति । शुक्रशोणिताभ्यांचिकित्सकोत्पादनाप्रेसरांस्यांसमुत्पत्तिंमारणकाले च सकलक्रूरकर्मायणीभूतौ वधबन्धौ पर्यालोच्य विहितमांसभक्षणादपि निवर्तेत ॥ ४९ ॥ किमुताविहितमांसभक्षणादि-त्यविहितमांसभक्षणानिन्दार्थमाह **नभक्षयती**ति । योदेवाद्यर्चनादिविधिपरित्यागेन पिशाचवन्मांसं न भक्षयति ससर्व-लोकप्रियोभवति । व्याधिभिश्चनपीड्यते ॥ ५० ॥ **अनुमन्ते**ति । अन्येन हन्यमानमवलोक्य साध्वयंहन्ता करोतीति योनुमादेतेसोनुमन्ता विशसितांगंकरोनाहंता वधकः क्रयविक्रयी क्रीत्वाविक्रीणीते संस्कर्तारन्धकः उपहर्ता परिवेष्टा खादकोभक्षयिता एतेघातकाः। इत्यत्रच निहन्तारंवर्जयित्वान्येषामघातकानांघातकवचनमशास्त्रितप्राणिवधेनुमोदनानीन्य-पि नकार्याणि इत्येवमर्थंनतुधातकत्वप्रतिपादनार्थं । कर्तव्याकर्तव्यप्रतिपादनपरत्वास्य शास्त्रस्य घातकखा-दकादीनांच पृथक्पृथक् प्रायश्चित्तदर्शनात् ॥ ५१ ॥ **स्वमांसमि**ति । स्वशरीरमांसंपरमांसेन देवार्चनर-हितेन योवर्द्धितुमिच्छति तस्मादधिकोऽन्योऽपुण्यकर्ता नास्तीत्यविधिमांसभक्षणनिन्दार्थंवादएव ॥ ५२॥ इदानीमशि-ष्टामतिषिद्धमांसनिवृत्तिधर्मायेन्येतत्प्रतिपादयितुमाह **वर्षेवर्ष**इति । प्रतिवर्षंअश्वमेधेन यजेत । तथा यो-यावज्जीवंमांसंनाश्नाति तयोरश्वमेधमांसत्यागजनितस्य पुण्यस्य संबन्धिस्वर्गादिफलंतुल्यं ॥ ५३ ॥ **फलमू-लाशनैरि**ति ॥ पवित्राणांफलमूलानांच । भक्षणैःस्तथर्षिसंबंधिनामन्नानांनीवारादिनामारण्यानांभोजने तथाविधं-

फलंनाप्नोति यावत् ॥ ५४ ॥ **मांसभक्षयितेति** ॥ ५५ ॥ **नमांसभक्षणेदोषइति** । शिष्टाप्रतिषिद्धमांसभक्षणमद्यपानमैथुनाचरणेनकश्चिद्दोषोयस्माज्जङ्गमात्मकभूतानांएषाअशास्त्रपापमैथुनात्मिकाप्रवृत्तिः स्वाभाविकोयंव्यापारोवर्जनंपुनर्महाफलं । इति मांसवर्जनफलप्रसङ्गेनाशिष्टाप्रतिषिद्धमद्यमैथुनादिनिवृत्तिफलकथनपरमेतत् ॥ ५६ ॥ **प्रेतशुद्धिमिति** । प्रेतनिमित्तांशुद्धिं द्रव्याणांतैजसादीनां शुद्धिं ब्राह्मणादीनांचतुर्णां कात्स्र्न्येन ब्राह्मणाद्यानुपूर्व्याच प्रवक्ष्यामि । तत्राशुद्धिसापेक्षत्वाच्छुद्धेरशुद्धेरपि च शास्त्रगोचरत्वात् तज्ज्ञापनार्थमेवतावदाह ॥ ५७ ॥ **दन्तजातेऽनुजातेचेति** । जातदन्तेनुजातेच जातदन्ताद्बालतरेकृतचूडाकरणेच । चकारात्कृतोपनयने च मृते सपिण्डसमानोदकाःसर्वेबान्धवाः अशुद्धास्तथा प्रसवेच सति तथैवाशुद्धाइत्युच्यते । कृतचूडइति च भूयिष्ठे तृतीयइतिगृह्योक्तचूडाकालोपलक्षणेन कृतचूडत्वंविवक्षितं । रात्रिभिर्मासतुल्याभिरितिगर्भात्प्रभृत्येव । भूयस्त्वेनाशौचवृद्धिदर्शनादिहापि च दन्तजातेनुजातेचेति वयोद्वारेणैवोपक्रमादेवदशाहाशौचेपि मुख्योपनयनकाललक्षणाविज्ञेयास्तुपंचवर्षउपनीतस्तस्यापेक्षायाअभावात्तदानीमेवपरिपूर्णमाशौचंभवति ॥ ५८ ॥ **दशाहमिति** । सपिण्डेषु प्रेतेषु शवनिमित्तमाशौचंदशाहोरात्राणांब्राह्मणस्योपदिश्यते । क्षत्रियादेर्वक्ष्यमाणत्वाद्स्थिसञ्चयनंवा यावच्चतुरोहोरात्रानाहिताग्नेःसञ्चयनं चतुर्थ्यामिति गृह्ये चतुर्थेऽहनि सञ्चयनविधानात् । त्र्यहंचैकाहंवासर्वत्राशौचप्रकरणेऽहर्ग्रहणंरात्रिग्रहणंचाहोरात्रप्रदर्शनार्थं । वृत्तस्वाध्यायाद्यपेक्षश्चायंविकल्पस्तत्राध्ययनाग्निहोत्रौ प्रतिग्रहाद्यार्तितारतम्यापेक्षयैतेविकल्पाः । यथायोगमाश्रयणीयानन्विच्छातोऽन्यतमपक्षाश्रयणं । तथाचपराशरः ॥ एकाहाच्छुध्यतेविप्रोयोग्निवेदसमन्वितः । त्र्यहात्केवलवेदस्तुनिर्गुणोदशभिर्दिनैः ॥ इतिवृत्ताद्यपेक्षयैवशौचवैचित्र्यमाह । वृत्ताद्यपेक्षेपि शौचाशौचसङ्कोचे ब्राह्मणस्यच स्वाध्यायानिवृत्त्यर्थमित्येवमादिगौतमादिवाक्यदर्शनादध्ययनादिमध्यायतएवयस्यार्तिस्तावन्मात्रानुष्ठानप्रयोजनएव तस्याशौचसङ्कोचोनकार्यान्तरे । यस्यैवच स्वाध्यायाद्यार्तिस्तस्यैवायमाशौचसङ्कोचः । न पिण्डान्तरस्याग्निहोत्रार्थंस्नानोपस्पर्शनात्तत्कालंपिताशुचिरित्येवमादिशङ्खादिवाक्यदर्शनादिति । एवंचार्तिविषये शौचसङ्कोचे स्थिते तद्व्यतिरिक्तक्रियान्तरेषूभयत्रदशाहानिकुलस्यान्नंनभुज्यते ॥ दानंप्रतिग्रहोहोमस्वाध्यायश्चनिवर्ततइत्येतत्वाक्यंभवत्येवउत्तरत्रापि वृत्ताद्यपेक्षयैव विकल्पाविज्ञेयाः ॥ ५९ ॥ अलौकिकत्वात्सपिण्डस्यलक्षणमाह **सपिण्डतेति** । षट्पुरुषान्पितृपितामहादीनतिक्रम्य सप्तमे प्राप्ते सपिण्डत्वंनिवर्तते । एवंपुत्रपौत्रादिष्वपिविज्ञेयं । समानोदकत्वंपुनरयममत्कुलेजातएवंनामश्चास्मद्वंश्योस्यादिपुरुषइत्येवं जन्मनामोभयापरिज्ञानेसति निवर्तते ॥ ६० ॥ **जननइति** । **सर्वेषामिति** । यथासपिण्डेषुदशाहंशावमाशौचमित्यादिपक्षचतुष्टयंतथैव सपिण्डजननेपि स्यात्सूतकंपुनरुपस्पृश्यत्वतत्कारणंमातापित्रोरेव नसपिण्डानांतदपिचपितुः ॥ जाते पुत्रे पितुःस्नानंसचैलंतुविधीयते ॥ माताशुध्येद्दशाहेन स्नात्वातुस्पर्शनंपितुः ॥ इतिसंवर्तदर्शनेन कृतस्नानोपस्पर्शनःपिताशुद्धोभवति । यस्त्वत्रदशाहएतैःकोतिदिश्यते नान्येकल्पाःसर्वातिदेशे मातुरप्याचारविरोधस्यैकाहादिप्राप्नोतीत्याहुः । तदसत् यअध्यनाद्यर्थात्वनेकाहादेरिष्यमाणत्वात्कुतोमातुःप्राप्तिः ॥ ६१ ॥ ६२ ॥ **निरस्यत्विति** । स्नानंमैथुनिनःस्मृतमिति मिथुनेस्नानविधानान्मैथुनादन्यत्राबुद्धिपूर्वेरेतःस्रावेसत्युपस्पृश्यैव पुमान्शुध्यति । तथाच मूत्रवद्रेतसउत्सर्गेशौचमित्यापस्तंबोब्रवीदेतच्चेहप्रसङ्गेनाह । यत्रपुनर्जनने बीजनिमित्तमात्रएवाभिसंबन्धोन शास्त्रितोयथा परपूर्वाभार्याप्रसवे तत्र त्र्यहमाशौचंअनुवर्तते । तथाचविष्णुः ॥ परपूर्वासु भार्यासु प्रसूतासुत्रिरात्रमिति ॥ ६३ ॥

( १ ) सर्वातिदेशे=सर्वकल्पातिदेशे ( गो० ५ )

**अन्हाचैकेनेति** । एकेनाहोरात्रेण नवभिश्चाहोरात्रैरेवंवृत्तवशाहशाहेन निर्दिष्टेन मूल्येन ब्राह्मणस्य मूल्येन ब्राह्मणस्य स्नानालंकारनिर्हरणादिकारिणोब्राह्मणःसपिण्डसमानोदकव्यतिरिक्ताःशुध्यन्ति । स्नेहनिर्हरणेसति । असपिण्डंद्विजंप्रेतमितिवक्ष्यति । धर्मार्थंपुनर्निर्हरणमाणानामाशौचाभावएव । एतद्वैपरमंतपोयत्प्रेतमरण्यंनयन्तीतिश्रुतेः ॥ नतेषामशुचिंकिंचित्पापंवाशुभकर्मणां ॥ जलावगाहनात्तेषांसद्यःशौचंविधीयत इतिपराशरस्मरणात् ॥ चैवंवेदपारशिष्यान्मूल्यविषयेच तिष्ठते । उदकदायिनःकेवलोदकंसमानोदकास्त्रिरात्रेणशुध्यन्ति ॥ ६४ ॥ **गुरोरिति** । असपिण्डस्याचार्यादेर्गुरोःप्रेतस्यान्त्येष्टिंशिष्यःकृत्वा प्रेतनिर्हारकैःपूर्वोक्तैस्तुल्यंदशरात्रेण शुध्यति ॥ ६५ ॥ **रात्रिभिरिति** । (१) नवमेदशमेवापिप्रबलैःसूतिमारुतैः । निःसार्यतेबाणइवयंत्रच्छिद्रेणसज्वरः ॥ इतियाज्ञवल्केन प्रसवकालस्मरणात् नवमासादर्वाक् गर्भस्रावे सति यावन्मासोगर्भस्तत्संख्याभिःरात्रिभिर्विशुध्यति । यत्रपुनरप्राप्ते काले जातस्य कथंचिज्जीवनंभवति तत्र परिपूर्णमेवाशौचं वृद्धव्यवहाराभिव्यंग्यत्वाच्छब्दार्थसंबन्धस्य तथाविधेर्गर्भस्रावशब्दाप्रयोगात् । रजस्वलास्त्री रजोनिवृत्तौसत्यांस्नाते साध्वंदृष्टार्थकर्मयोग्याभवति । स्पर्शयोग्यापुनस्त्रिरात्रंरजस्वलाशुचिर्भवतीतिवसिष्ठस्मरणाच्चतुर्थएवान्हिस्नानंकृत्वा शुद्धा भवति ॥ आदन्तजन्मनःसद्यआचूडान्नैशिकीस्मृता । त्रिरात्रमाव्रतादेशाद्दशरात्रमतःपरमिति ॥ याज्ञवल्क्येनस्मरणाद्दन्तजननादूर्ध्वं प्राक्चूडाकरणकालात् मृतानांनराणांसपिण्डेष्वहोरात्रेण शुद्धिः । चूडाकरणकालादूर्ध्वंप्रागुपनयनकालात्मृतानांत्रिरात्रेण शुद्धिरिष्यते ॥ ६६ ॥ ६७ ॥ **ऊनद्विवार्षिकमिति** । मासमात्रोनवर्षद्वयप्रमाणंप्रेतमलंकृत्यग्रामाद्बहिःशुद्धायांभूमौकालान्तरसंभाव्यस्थिसञ्चयनवर्जं बान्धवाःप्रक्षिपेयुः ॥ ६८ ॥ **नास्येति** । अस्योनद्विवार्षिकस्य प्रेतस्याग्निसंस्कारोनकर्तव्योनापि सकृत्प्रसिञ्चत्युदकंनामगोत्रेण वाग्यताः । इत्येवमादियाज्ञवल्क्याद्युक्तमक्रियोदकक्रियाद्यौर्ध्वदेहिककिंचित्कर्तव्यं । किंतर्हि अग्निसंस्कारनिरपेक्ष्यमरण्येकाष्ठवत्परित्यज्य त्र्यहंअपेताशौचे सति शास्त्रितकर्माणिनकुर्यादियंचाकृतचूडस्य त्र्यहविकल्पः । कृतचूडविषये त्र्यहस्योक्तत्वात् । अनर्थकमिदंस्याद्विकल्पश्चवृत्ताद्यपेक्षयेत्युक्तं ॥ ६९ ॥ **नात्रिवर्षस्येति** । यस्यतृतीयंवर्षंनापक्रांतंतस्योदकक्रियाअग्निसंस्काराद्यौर्ध्वदेहिकंनकर्तव्यमित्युत्तरविधित्सार्थंपूर्वानुवादः । जातदन्तस्यचोदकक्रियाअग्निसंस्काराद्यौर्ध्वदेहिकंकर्तव्यंदशम्यामुपस्थाप्यपितानामकरोतीतिगृह्यदर्शनादस्माद्वाक्यादूर्ध्वंकर्तव्यं । यद्यकरणपक्षसंभवेकरणपक्षादरणंक्लेशावहं तथापक्षद्वयाम्नानाज्जातदन्तनाम्नोकरणेप्रेतोपकारोभवत्यकरणात्पुनःप्रत्यवायाभावइत्यवसीयते ॥ ७० ॥ **सब्रह्मचारिणीति** । सहाध्यायिनिप्रेते [ ए ] काहंमाशौचंसमानोदकानांपुनर्जनने सति त्रिरात्राच्छुद्धिरिष्यते । त्र्यहात्तूदकदायिनइति प्रथमविषयमुक्तं ॥ ७१ ॥ **स्त्रीणामिति** । वाग्दत्तानांनविवाहितानांभर्त्रादयस्त्र्यहाच्छुध्यन्ति । भ्रात्रादयःपुनस्त्रीणामकृतचूडानांइत्येतदुक्तेनविधिनेति ॥ ७२ ॥ **अक्षारलवणान्नाइति** । बिडलवणादिक्षारवर्जितमन्नमश्नीयुः । नद्यादौमृद्दावर्जंस्नानंकुर्युः । मांसवर्जंचान्नमाशुद्धेरिति गौतमस्मरणात् । यावदाशौचंनाश्नीयुर्भूमौचैककाःशयीरन ॥ ७३ ॥ **संनिधावेषइति** । प्रेतदाहावस्थानापरिज्ञानेन सत्येषशावाशौचस्यकीर्तितोविधिःकथितोदेशान्तरावस्थानादज्ञानेसत्ययंवक्ष्यमाणोविधिः सपिण्डसमानोदकैर्बोद्धव्यः ॥७४॥ **विगतन्त्विति । तच्छेषंदशरात्रंस्यादिति** । देशान्तरस्थंमृतंजातंवा अनिर्गतदशाहादिकंश्रुत्वा दशरात्रादेर्यच्छिष्टंतावदेवाशौचवान् भवेन्नतुपरिज्ञानात्प्रभृतिदशाहाशौचमादियते ॥ ७५ ॥ **अतिक्रान्तइति** ।आशौचातिक्रमे

( १ ) ६७ श्लोकस्यमूलं सर्वेषुपुस्तकेषुनदृश्यते । ( २ ) ष्य=ष्व्य ( गो० ५ )

सपिण्डजननंमरणंवा ज्ञात्वा त्रिरात्रमाशौचवान्भवति। संवत्सरेपुनरतीते ज्ञात्वा स्नात्वैव शुध्यति ॥ ७६ ॥ **निर्दशज्ञातिमरणमिति** । निर्गतदशाहादिकंसपिण्डमरणंश्रुत्वा पुत्रस्यच जन्ममनुष्यःश्रुत्वा सचैलंस्नात्वा शुद्धोभवत्येवंचानन्तरोक्तेन । त्रिरात्रेणास्यसहस्येविकल्पः ॥ ७७ ॥ **बाळइति** । आदेशान्तरस्थेपि दन्तजात्यूने बालेदेशांतरस्थेवा बालेपि असपिण्डसमानोदके देशान्तरस्थेति मृते सचैलंस्नात्वा सद्यएवविशुध्यति । देशान्तरस्थसपिण्डजननमरणयोस्तच्छेषशुद्धिरुक्ता । समानोदकानांच त्र्यहशुद्धिरुक्ता तद्वैकल्पिकमनेनसद्यःशौचमुच्यते ॥ ७८ ॥ **अन्तर्दशाहइति** । तावत्स्यादशुचिर्विप्रोयावत्तस्यादहर्निशं ॥ दशादिमध्ये यदि जपुनर्मरणेमरणं जनने जननंस्यात्। पुनःशब्दात् सूतकेसूतकंभूयोयद्यपि स्यात्कथंचन ॥ तच्छेषेणैव शुद्धिःस्यान्मृतके मृतकंतथा इत्यंगिरसः स्मरणात् ॥ च तदा तावत्कालमेव ब्राह्मणादेरशौचंस्याद्यावत्पूर्वोत्पन्नमाशौचंनापगतंतत्पश्चादतीतम् दशाहादि यावत्तत्रापिच रात्रिशेषे द्वाभ्यांप्रभाते तिसृभिरिति गौतमीयोविशेषोद्रष्टव्यः ॥ ७९ ॥ **त्रिरात्रमिति** । आचार्ये मेते त्रिरात्रमाशौचमाहुस्तत्पुत्रपत्न्योश्चाहोरात्रमिति शास्त्रमर्यादा ॥ ८० ॥ **श्रोत्रियइति** । वेदाध्यायिनि केनापि मैत्र्यादिना निमित्तेन निकटवर्तिश्च सब्रह्मचारिण्यपि प्रेते त्रिरात्रमाशौचवान्भवति । मातुलशिष्यर्त्विक्भागिनेयादिषु उभयतोहर्द्वयंपक्षद्वयमिव । यस्यास्तांरात्रिमाशौचंचान्धवत्वेपि मातुलस्य पुनर्वचनं मातुलेयादीनांविकल्पार्थं ॥ ८१ ॥ **प्रेतेराजनिसज्योतिर्यस्यस्याद्विषयेषुचेति** । यत्संबन्धिनि देशे ब्राह्मणादिस्थितःतस्मिन्राजनि प्रेते सज्योतिषादिनादित्येन रात्रौ तारकाभिःसहवर्तते इति सज्योतिर्दिवोत्पन्नेदिवैवाशौचंरात्रावुपजायते रात्रावेवेति । श्रोत्रियेसङ्गते त्रिदिवसमित्युक्तमश्रोत्रियेपुनःसङ्गतेहःसमग्रंरात्रौ न भवति । रात्रावुत्पन्नेरात्रिमेवनाहो अङ्गादि अवक्तरिवाल्पंवाबहुवायस्येत्येवंधर्मकेगुरावेवमेव ॥ ८२ ॥ **शुध्येदिति** । अनुपूर्वेशश्चतुर्णांवर्णानांप्रेतशुद्धिंवक्ष्यामीत्युक्तमतापूर्वोदशाहविधिः । ब्राह्मणविषयएवैवंचासौदशाहेनब्राह्मणःशुध्येदितीतरविधित्सया विहितमनूद्यते । जननमरणनिमित्तआशौचे । क्षत्रियोद्वादशेन वैश्यःपञ्चदशाहेन शूद्रोमासेनशुध्यति ॥ ८३ ॥ **नवर्धयेदिति** । यस्याग्निहोत्राद्यपेक्षमर्वाक्सञ्चयनादस्थ्नांइत्येवमाद्यशौचसङ्कोचउक्तःसतत्क्रियार्थंतावदेवाशौचमाश्रयेन्ननुनिष्कर्मासुखमासिष्युःइतिबुद्ध्या आशौचसंयुक्तान्यहानिवर्धयेत्तस्यांक्रियायांदशाहंनाश्रयेत । रतेषुचाग्निष्वपि होत्रादि[2]क्रियानिस्यन्नचतच्छ्रौतंकर्मकुर्वन्सपिण्डोप्यशुद्धोभवति किंपुनरन्यस्तस्मादन्यंकारयेत्तदुक्तं । गृह्ये नित्यानिनिवर्तन्ते । वैतानवर्जं शालाग्नौचैकेअन्यएतानि कुर्युरिति ॥ ८४ ॥ **दिवाकीर्तिमिति** । चण्डालरजस्वलापतितसूतिकाशवतत्स्पृष्टिनःस्पृष्ट्वा स्नानेन शुध्यति । अन्येतु चण्डालादिस्पर्शेपि तत्स्पृष्टिन्यायमिच्छन्ति । किंतुदक्याशुचिभिःस्नायात्संस्पृष्टस्तैरुपस्पृशेदित्येवंयाज्ञवल्क्यवचनमस्ति । इत्थंस्मृत्यर्थेपिसमाचारोन्वेष्यः ॥ ८५ ॥ **आचम्येति** । प्रकृतचण्डालाद्यशुचिदर्शने सर्वदाऽऽचम्यशुचिः । ससूर्यदैवत्याम्मंत्रान्यथासामर्थ्यपावमानीश्च स्वादिष्ठयेत्याद्याः शक्त्या जपेत ॥ ८६ ॥ **नारमिति** । स्नेहयुक्तंमानुषास्थिस्पृष्ट्वा ब्राह्मणादि स्नात्वाविशुध्यति । स्नेहशून्यंपुनःस्पृष्ट्वोपस्पृश्य गोस्पर्शनादित्येक्षणयोरन्यतरंकृत्वाविशुध्यति ॥ ८७ ॥ **आदिष्टीनोदकमिति** । व्रतादेशयोगादादिष्टी ब्रह्मचारी ब्रह्मचारिणःशवकर्मणिव्रतान्निवृत्तिरन्यत्र मातापित्रोरिति वसिष्ठस्मरणान्मातापितृव्यतिरिक्तानांसपिण्डादीनांअनिष्टोदकसमावर्तनान्नकुर्यात् । समाप्ते पुनः

(१) यावत्तस्यादहर्निशम्=यावत्तस्यादनिर्दशम् (गौ० ५)

(२) होत्रादि=होमादि (गौ० ५)

ब्रह्मचर्यतेभ्योनिष्टोदकंदत्वा त्रिरात्रेणैव शुध्यति ॥ ८८ ॥ **वृथासंकरजातानामिति** । वृथाजातानांबाहुल्ये नोत्सृष्टस्वधर्माणांसंकरजातानांवा नियुक्तासुतादीनांव्यतिक्रमसाहचर्याच्च वेदबाह्येषुच व्रतेषु रक्तपादित्वादिषु वर्तमानानां ॥ ८९ ॥ तथा

**[ वृद्धःशौचस्मृतेर्लुप्तःप्रत्यख्यातभिषक्क्रियः ॥ आत्मानंघातयेद्यस्तुभृग्वग्न्यनशनांबुभिः ॥ १ ॥**

**तस्यत्रिरात्रमाशौचंद्वितीयेत्वस्थिसञ्चयः ॥ तृतीयेतूदकंकृत्वाचतुर्थेश्राद्धमाचरेत् ॥ २ ॥ ]**

[ मृते भर्तरि ब्रह्मचर्यतदनुचारोहणंचेति वृद्धगार्ग्यविष्णवाद्युक्तश्रुतिस्मृतिबाह्यप्रकारेण बुद्धिपूर्वविषोद्बन्धनादिनात्मानंहतवतामुदकक्रियाद्यौर्ध्वदेहिकमाशौचंचनाशौचोदकभाजनाइतियाज्ञवल्क्यस्मरणान्निवर्तते ॥१॥ २ ॥ ] **पाखण्डमिति** । वेदबाह्यव्रतवर्तिनांकुलटानांच यथागर्भभर्तृघ्नीनांसुरापीणांच द्विजातिवन्निषेधातिक्रमेण चरन्तीनांच यथासंख्यंद्विजातिस्त्रियंप्रत्याह । सुरालशुनपलाण्डु [गृ] ञ्जनकादीन्यभक्ष्याणिवर्जयेदेवंविधानांस्त्रियामुदकक्रियाद्यौर्ध्वदेहिकमाशौचंनिवर्तेत॥९०॥ **आचार्यमिति** । स्वमाचार्यंन गुरौ सन्निहिते गुरुवृत्तिमाचरेदिति न्यायेनाचार्यमपि मातृपितृपाध्यायाल्पंवा बहुवा यस्येत्येवंविधंगरुंप्रेतान्निर्हृत्य ब्रह्मचारी लुप्तव्रतोन भवति । एवंवानिर्हृत्यभवतीतिगम्यते ॥ ९१ ॥ **दक्षिणेनेति** । शूद्रंमृतंदक्षिणदिग्वर्तिना नगरादिद्वारेण निर्हरेत् । पश्चिमोत्तरपूर्वदिग्वर्तिभिःपुरद्वारैर्यथाक्रमंवैश्यक्षत्रियब्राह्मणान्निर्हरेत् । अमङ्गलत्वाच्छूद्रादिप्रक्रमेणात्रधर्माभिधानं ॥ ९२ ॥ **नराज्ञामिति** । यतोराजानऐन्द्रंस्थानमाधिपत्यपदमाश्रिताब्रह्मचारिणः चान्द्रायणादिव्रतमवृताःसत्रिणश्च गवामयनादिस्थाब्रह्मत्वप्राप्त्यभिमुखाअतस्तेषांस्वकर्मण्याशौचाख्योदोषोनभवति । तथाचविष्णुः ॥ नराज्ञांराजकर्मणि न व्रतिनांव्रते न सत्रिणांसत्रेचेति एवंच ॥९३॥ **राज्ञइति** । महानात्मस्वरूपंयस्य स्थानस्य तस्मिन् राजाख्ये पदे वर्तमानस्य राज्ञःसद्यःशौचमुपदिश्यते । अत्र सद्यःशौचे शान्तिहोमदुर्भिक्षान्नदानादि प्रजापरिपालनार्थंराज्ञोयत्तदस्थानंतत्कारणं ॥ ९४॥ **डिंबाहवहतानामिति** । डिंबे जनौघसंपीडने अशस्त्रकलहे वा हतानां तथा सङ्ग्रामाशनिहतानां राज्ञा वा सङ्ग्रामेपि हतानां गोब्राह्मणपरित्राणार्थंअसङ्ग्रामेऽपिव्याघ्रादिव्यापादितानां यस्यचपुरोहितादेः स्वकार्याविघातार्थंपृथिवीपतिरिच्छति । तस्यापिसद्यः शौचं ॥ ९५ ॥ **सोमाग्न्यर्कानिलेन्द्राणामिति** । चन्द्राग्न्यादित्यवाय्विन्द्रयमानांधनपतेःवैश्रवणस्यापांपतेश्च वरुणस्येत्येषांलोकपालानांसंबन्धितेजःपार्थिवोधारयति ॥९६॥ **लोकेशाधिष्ठितइति** । एवमुक्तनीत्या यतोलोकेश्वराक्रान्तोराजानोऽन्यास्याशौचंविधीयते स्वकार्यमुपदिश्यते । यस्मान्मनुष्याणांयच्छौचमाशौचंतल्लोकेशेभ्यःप्रभवत्यपैतिच । तस्मादन्यशौचाशौचोत्पादनोपासनसमर्थलोकेशरूपस्य राज्ञः कुतएवात्मनोशौचमिति प्रकृतार्थस्तुतिः ॥ ९७ ॥ **उद्यतैरिति** । सङ्ग्रामउद्यतैःखड्गादिभिःअपराङ्मुखत्वादिक्षत्रियधर्मयुक्तस्य हतस्य तत्क्षणादेव यज्ञसमाप्तिस्तत्कालमेव यज्ञफलसंबन्धात्तथाशौचमपि तत्क्षणादेव समाप्तिमेतीत्येवंशास्त्रमर्यादा ॥ ९८ ॥ **विप्रइति** । आशौचान्ते कृतश्राद्धादिक्रियोब्राह्मणोऽपऔचित्याद्धस्तेन स्पृष्ट्वा क्षत्रियश्च खड्गादिकं वैश्योबलीवर्दादिप्रतोदमयःप्रान्तंप्रग्रहंवाऽश्वादिनियमरज्जुं शूद्रोयष्टिंस्पृष्ट्वा शुध्यति ॥ ९९ ॥ **एतदिति** । हेब्राह्मणाः सपिण्डेषु प्रेतेषु यच्छौचंयुष्माकमुक्तं । अधुना त्वसपिंडेषु सर्वेषु मृतेषु प्रेतशुद्धिंशृणुतेति भृगुर्महर्षीनाह ॥ १०० ॥ **असपिण्डमिति** । असपिण्डंमृतंब्राह्मणं ब्राह्मणोबन्धुवत्स्नेहेन निर्हृत्य मातुश्च सन्निकृष्टानाप्तबान्धवान्मातुलादीन् निर्हृत्य त्रिरात्रेण शुध्यति ॥ १०१ ॥ **यदीति** । सनिर्हारकोयदि तेषामाशौचिनांसंबन्ध्यन्नमश्नाति तदा दशाहेन शुध्यति न त्रिरात्रेण । अन्नंपुनस्तत्संबन्धि अनश्नन् यदि तत्संबन्धि-

निगृहे न निवसेत्तदाहोरात्रेणैव न त्रिरात्रदशरात्राभ्यां । एवंच निर्हारकस्य निवासान्नभोजनरहितस्याहोरात्रमनश्नतस्तत्र वसतःपूर्वोक्तंत्रिरात्रमश्नतोवसतश्चदशाहं ॥ १०२ ॥ अनुगम्येति । बंधुमन्यंप्रेतंवा बुद्धिपूर्वकमनुगम्य स्नानंकृत्वा ततोग्निस्पृष्ट्वा तदनुच घृतप्राशनंकृत्वा विशुध्यति ॥ १०३ ॥ नेति । पुत्रादिविप्रंमृतंसमानजातिषु तिष्ठत्सु स्थितेषुसत्सु शूद्रेण ननिर्हारयेत् । यस्मात्साशारीराहुतिशूद्रस्पर्शदुष्टासती मृतस्य स्वर्गलोकसाधनी न भवत्येवंच दोषनिर्देशात् स्वेषु तिष्ठत्सु विवक्षितं ॥ १०४ ॥ इदानींकानिचिद्वाक्यान्तरसिद्धानिशुद्धिसाधनानि संक्षेपावबोधाय प्रसङ्गतोनुवदितुंकानिचिच्च प्रसङ्गतोशपूर्वाणिविधातुमाह ज्ञानमिति । ज्ञानंबुद्धेः शुद्धिकर्तृ यथा वक्ष्यति बुद्धिर्ज्ञानेन शुध्यतीति सङ्कल्पकंमनोनिश्चायिका बुद्धिरिति । बुद्धिर्मनसोभेदः । एवंतपोवेदविदांयथाभिधास्यति तपसावेदवित्तमाइत्यग्निर्यथावदिष्यति पुनःपाकेन मृन्मयस्याहारोयथाकथयिष्यति हविष्येणयवाग्वावेति मृद्वारिणी यथा जल्पिष्यति मृद्वार्यादेयमर्थवदिति । मनोयथाख्यास्यति मनःपूतंसदाभवेदिति । उपाञ्जनमुपालेपनंयथाभणिष्यति संमार्जनेनाञ्जनेनेति । वायोरिह शास्त्रे शोध्यंननिर्दिष्टं तस्य मृत्पर्णतृणकाष्ठानांचचाण्डालादिवायसैःस्पर्शने शौचंसोमसूर्याशुमारुतैःइत्येवमादिविष्णाव्याद्युक्तंविज्ञेयं कर्म यथाकीर्तयिष्यति । यजेतवाश्वमेधेनेत्यादित्योयथोक्तं गामालभ्यार्कवीक्ष्यवेति कालोयथोक्तंशुध्येद्विप्रोदशाहेनेत्यवं ज्ञानादीनिमनुष्याणांसाक्षात्परम्पयोग्यद्रव्यद्वारेणचशुद्धेःकर्तृणि ॥ १०५ ॥ सर्वेषामिति । सर्वेषांमृद्वारीन्द्रियमनःशौचादीनांमध्यादर्थशौचंपरद्रव्यादिइच्छापरिहारार्थंप्रकृष्टमृषिभिःस्मृतं । यस्माद्योर्थेशुद्धःसशुद्धोबोद्धव्यो यःपुनर्मृद्वारिशुचिरर्थेष्वशुद्धेःसोऽशुद्धएव ॥ १०६ ॥ क्षान्त्येति । येशास्त्रज्ञास्तेऽपराधक्षमया शुध्यन्ति । यथा वक्ष्यति । महायज्ञक्रियाक्षमानाशयन्त्याशुपापानीति । अकार्यकारिणोदानेन । यथावक्ष्यति । सर्वस्वंवा वेदविदे इति । अप्रख्यातपापाजप्येन । यथावक्ष्यति परंतरत्समंदीयमिति । वेदतत्त्वार्थज्ञाश्चान्द्रायणादिना प्रायश्चित्तप्रकारेण वक्ष्यमाणेन ॥ १०७ ॥ मृत्तोयैरिति । मृत्तोयैः शुध्यते शोधनीयंतावन्मृद्वारिचादेयमिति वक्ष्यमाणेन प्रकारेण । नदीच निदाघादावत्यल्पप्रवाहतया शुध्यत्युपहतपुलिनदेशासती वर्षादिजनितेनोदकवेगेनावक्षालितपारावारतयाशुध्यति । संकृत् स्त्रीच कथंचिन्मनसा परपुरुषसंकल्पा आर्तवेन शुध्यति । ब्राह्मणाश्च संन्यासेन षष्ठाध्यायवक्ष्यमाणेन शुध्यन्ति ॥ १०८ ॥ अद्भिरिति । अङ्गानि स्वेदाद्युपहतानि अद्भिःशुध्यन्ति । मनश्च कथंचिदसत्सङ्कल्पोपहतं सत्याभिधानेन शुध्यति । पारमार्थिकश्चात्मापरमात्माख्यकोशकारकृमिवदात्मैव रागादिमलजालावबद्धोविद्ययोपनिषदाद्युक्तात्मोपासनाभिस्तपसाचाखिलमलपरिलोपीब्रह्मस्वरूपएवावतिष्ठते । तथाबुद्धिर्विपरीतार्थग्राहिणी तेनाशुद्धासती यथा भूतार्थग्राहिणा विज्ञानेन शुध्यति ॥ १०९ ॥ एषइति । एषशरीरसंबन्धिनःशौचस्य युष्माकंविचारउक्तः । इदानींनानाप्रकाराणांद्रव्याणांशुद्धेःशृणुत निर्णयं ॥ ११० ॥ तैजसानामिति । अग्नितेजसायानि द्रवी भवन्ति तानि तैजसानि सुवर्णादीनि एवंप्रसिद्धेस्तेषांमणीनांपाषाणमयस्यच सर्वस्य चकारान्मृदादेरपि अद्भिर्भस्मनाऽश्चान्यतरेण लेपगन्धापकर्षणाख्यैककार्यत्वाद्विकल्पितेन विद्वद्भिर्मन्वादिभिःशुद्धिरुक्ता । इदंसमानजातीयोच्छिष्टलेपामेध्यद्रव्यसंस्पर्शादिष्वल्पोपघातविषयं । तथा चोपघातविशेषे शुध्यन्तराणि दृश्यन्ते । यथा बौधायनादिभिस्तैजसानांमूत्रपुरीषशुक्रासृक्कुणपमयैरत्यन्तवासितानामावर्तनं । अल्पकालसंसर्गेषु परिलेखनंस्पर्शमात्रोपघातेतु त्रिःसप्तकृत्वः परिमार्जनाद्युक्तं । आवर्तनंपुनःकरणं परिलेखनंलक्षणं ॥ १११ ॥ निर्लेपमिति । उच्छिष्टादिलेपरहितंपानीयपानाद्युपहतंसौवर्णभाण्डमब्जंच शुक्त्यादिकमश्ममयंच रूप्यमखातपूरितमद्भिरेव केवलाभिर्विशुध्यति । नपङ्कमलसहिताभिः ॥ ११२ ॥ अपामिति । अग्नेर्वैवरुणानीरम्यकामयतेत्या-

वित्र्वेदे श्रूयते । तत्राग्नेः सुवर्णमिन्द्रियं वरुणादीनां रजतमित्येवं श्रूयते । एवंचाग्न्यापःसंयोगाद्यतःसुवर्णरूप्यं चोद्भूतमतः तयोः स्वकारणेनैवोदकाख्येन तथैककारणकेन भस्मनैव शोधनं प्रशस्यतरमेवंच मृदःकाञ्चनरजतयोर्भस्मातिशयवत् ॥ ११३ ॥ ताम्रायस्कांस्यरैत्यानामिति । ताम्रलोहकांस्यपित्तलत्रपुसीसानां भस्मोदककाञ्जिकादिभिर्मलनिर्हरणातिक्रमेण शौचं कर्तव्यं । इदंच यत्र मृद्भस्मनामुच्छिष्टादिमलनिर्हरणासामर्थ्यं तद्विषयं यथार्हवचनात् ॥ ११४ ॥ द्रवाणामिति । द्रवाणां घृतादीनां बौधायनाद्यभिहितप्रस्थमात्रप्रमाणानां श्वकाकाद्युच्छिष्टानां अमेध्यसंसर्गकीटाद्युपहतानां अमेध्यस्पृष्टद्रव्यस्पृष्टानां चोत्प्लवनं कुशाग्राभ्यां पवमानःसुवर्जन इत्यनुवाकेनेति स्मृत्यन्तरोक्तोदधिदुग्धप्रक्षेपणपर्यन्तः समानजातीयद्रव्यसेचनं वास्मृतम् । संहतानांच शयनादीनामुच्छिष्टाद्युपहतानां क्षालितैकदेशानां अभ्युक्षणं दारुमयानां चोच्छिष्टलेपाद्युपहतानां तक्षणम् ॥ ११५ ॥ मार्जनमिति । यज्ञपात्राणां जुह्वाज्यधानीप्रमृतीनां यज्ञक्रियायां कर्माङ्गतया हस्तेन परिमार्जनम् । चमसग्रहाणांच यज्ञपात्रविशेषाणां कर्माङ्गतयैव प्रक्षालनेन शुद्धिः ॥ ११६ ॥ चरूणामिति । चरुशूर्पादीनां यज्ञाङ्गभूतानां भाण्डविशेषाणां तदङ्गतयोष्णोदकेन शुद्धिः ॥ ११७ ॥ अद्भिरिति । अनेकोद्धार्ये दारुशिले भूमिसमे इति बोधायनीयायनेकोद्धार्यस्य द्रव्यान्तरस्याल्पशौचत्वदर्शनात्पुरुषाभावादूर्ध्वं धान्यवस्त्राणां चाण्डालादिरभ्युक्षणम् । तदल्पानां पुनरद्भिः प्रक्षालनं विधीयते ॥ ११८ ॥ चैलवदिति । स्पृश्यचर्मणां वैदलानांच तरुत्वगादिनिर्मितानां वस्त्रवच्छुद्धिः । शाकमूलफलानां पुनःपक्वापक्वभेदेनावहतानवहतशुद्धाशुद्धधान्यवच्छुद्धिरिष्यते । चैलवदिति सिद्धेधान्यवदित्यारम्भात् ॥ ११९ ॥ कौशेयाविकयोरूषैरिति । कोशनिवृत्तस्य पट्टविशेषस्योर्णमयस्यच सोषैरुदकगोमूत्रैरिति याज्ञवल्क्यादिदर्शनादुदकसहितैरूषैः मृद्विशेषैरेवं कुतपोनामाजलोमनिर्मितानां सोदकेनारिष्टकचूर्णेन । अंशुपट्टानां वल्कलतनुकृतानां पट्टानां सोदकबिल्वचूर्णेन । क्षुमादिकृतानां सोदकेन गौरसर्षपचूर्णेन शुद्धिरिष्यते ॥ १२० ॥ क्षौमवदिति । शङ्खशृङ्गास्पृश्यास्थिदन्तमयानां क्षौमवद्गौरसर्षपचूर्णेन सोदकेन गोमूत्रेण वा मलोपघातविशेषज्ञेन शुद्धिःकार्या ॥ १२१ ॥ प्रोक्षणादिति । मार्जनोल्लेखनैर्वेश्मेति । तृणकाष्ठपलालं चाण्डालादिस्पर्शनादुष्टमभ्युक्षणाच्छुध्यति । तृणपलालसाहचर्याद्गृहभाण्डव्यतिरिक्तमत्र काष्ठं विज्ञेयम् । तत्र तूदकं द्वारवाणां चाभ्युक्षणमित्यादि गृहंच शवोदक्यापवेशादि दुष्टं भित्त्यादिमलापकर्षणे चण्डालादि प्रवेशाद्दुष्टं शवादिदुष्टं सुधागोमयादिनोपलेपनेन यन्मृन्मयं चोच्छिष्टाद्युपहतद्रव्यादिस्पृष्टं पुनःपाकेन पाकशब्दान्नवत्वापादनेनात्यंतोपहतस्य पुनस्त्याग एव । यथाचवसिष्ठः ॥ मद्यैर्मूत्रैः पुरीषैर्वाष्ठीवनैःपूयशोणितैः ॥ संस्पृष्टं नैव शुध्येत पुनः पाकेन मृन्मयं इति[1] ॥ १२२ ॥ संमार्जनेनदाहेनेति । अवकरशोधनगोमयाद्युपलेपनक्षीरोदकगोमूत्रादिसेकतक्षणैरहोरात्रमात्रं बहुगोनिवासेन चोच्छिष्टमूत्रपुरीषचण्डालश्मशानाद्युपघातविशेषापेक्षया व्यस्तैः समस्तैर्वा पञ्चभिर्भूमिःशुध्यति ॥ १२४ ॥ पक्षिजग्धमिति । अत्यन्तानुपहतं शुकादिपक्ष्युच्छिष्टं गोघ्रातं अवधूतं कृतवासोपरि अवधूननं तापरिक्षुवथुकं केशापहतममेध्यसंसर्गिकम्युपहतं जग्धशब्दादन्नं मृत्प्रक्षेपेण शुध्यति ॥ १२५ ॥ यावन्नापैत्यमेध्याक्तगन्धलेपश्चतत्कृतः ॥ इति । पुरीषादि द्रव्यायावत्पुरीषादि संबन्धिनौ गन्धलेपौ नापगच्छतः तावत्सर्वद्रव्यशुद्धिषु मृद्वारिभिर्गृहीतव्यमित्यमे-

---

(१) अयंश्लोकोमूलग्रन्थे १२३ सङ्ख्याकः ।

भ्याक्तद्रव्योक्तानुक्तशुद्धिविशेषविषयमिदम् ॥१२६॥ त्रीणीति। यस्य प्रमाणेन केनचिदप्युपघातसंबन्धोन परिच्छिन्नो-यश्च सञ्जातोपघातशङ्कस्तंतदद्भिर्निर्णिक्तंयथाहारीतः॥ यचन्मीमांस्यंस्यात्तदद्भिःसंस्पर्शाच्छुचि भवतीति ॥ यच्चोपघात-सन्देहेसति प्रक्षालनासहंशुद्धमेतद्भवत्विति ब्राह्मणस्य वाचाप्रशस्यते। तानि त्रीणी पवित्राणि ब्राह्मणादीनांदेवाःकल्पितवन्तः ॥ १२७ ॥ आपइति। यत्परिमाणास्वप्सु गोस्तृष्णाच्छेदोभवति ताआपोगन्धवर्णरसान्वितत्वेन अमेध्येन यदि व्याप्तान भवन्ति तदाभूम्यादिगताशुद्धाअप्रयतप्रसङ्गात्सुचित्ताशंकायामिदंभूमिग्रहणंनन्तरिक्षापांशुद्धत्वव्यावृत्त्यर्थम् ॥ १२८ ॥ नित्यमिति। कारोः सूपकारादेर्देवब्राह्मणाद्यर्थेपि पाके द्रव्यप्रयोजनापेक्षशुद्धिविशेषाकरणेपि सुशुद्धश्चैव हस्तः शुद्धःतथा अशौचेपि कारूणांकारुकर्मणीति विष्णुस्मरणात् ॥ स्वव्यापारमात्रे हस्तः शुद्धः हस्तप्रधानप्रायत्वाच्च तत्कर्मणांहस्त-ग्रहणम्। तथा यद्विक्रेतव्यमापणभूमौ वितत्य स्थापितं तदनेकक्रेतृसामान्यकरपरिघटितमपि नापणीयमन्नमश्नीयादिति शङ्खस्मरणात् ॥ सिद्धान्नवर्जेशुचितथा ब्रह्मचर्यादिगतंभैक्ष्यमनाचान्तस्त्रीप्रदानाशुचि रथ्याक्रमणादिनापि नित्यंशुद्ध-मिति शास्त्रमर्यादा ॥ १२९॥ नित्यमिति । स्त्रियश्चरति संसर्गइति गौतमस्मरणात् तत्कालंनित्यंस्त्रीणामास्यंशु-चिस्तथा काकाद्यत्यन्ताहतपक्षिचञ्चुघातपातिफलंशुचि । वत्समुखंच दोहवेलायांक्षीरमस्रावने शुचि श्वा च यदा-मृगादिहन्तुं गृह्णाति तदा तद्व्यापारे शुचिः ॥ १३० ॥ अतएवमतः श्वभिरिति। क्रव्यादिभिर्हतश्चान्यैश्चाण्डालाद्यैश्च-दस्युभिः॥श्वभिर्हतस्य मृगादेर्यन्मांसंशुचीत्येवंमनुरभ्यधात्तथान्यैरपि चाममांसभक्ष्यैःश्येनादिभिश्चाण्डालपुलिन्दादिभिश्च मृगादिवधजीविभिर्हतस्येति ॥ १३१ ॥ ऊर्ध्वमिति । नाभेरुपरि यानींद्रियाणि तानि सर्वाणि शुचीनीत्येवं-मलशून्यतस्पर्शेसति नाशुचीनभवन्ति । यानि पुनर्नाभेरधस्थान्यशुद्धानि तानि नाभ्यपेक्षमधःछिद्राणांयानीति बहुवचनम् । तथा वक्ष्यमाणमलाः शरीरतः स्वस्थानाच्युताअशुद्धाः ॥ १३२ ॥ मक्षिकाइति । मक्षिकाअमेध्यस्पर्शिन्योपि तल्लेपरहिताः जलकणाश्च स्पर्शमात्रानुमेयाः छाया चाण्डालादिसंबन्धिनी गोश्च मुखवर्जम् । यथा बौधायनः ॥ अजाश्वामुखतोमेध्यागावोमेध्यामुखादृते ॥ मार्जारनकुलौ स्पर्शेशुभाश्च मृगपक्षिणः इत्यश्वआदित्यरश्मयोरजोवायुनेरितंभूरथ्यादौ चाण्डालादिस्पृष्ट्वा गमनमात्रेण वाग्वग्निश्चेत्यादिस्पर्शे शुचीनीति जानीयात् ॥ १३३॥ विण्मूत्रोत्सर्गशुद्ध्यर्थमिति। विण्मूत्रमुत्सृजते येन तस्य पाय्वादेः शुद्ध्यर्थं-गन्धलेपनिर्हरणप्रयोजनपर्यन्तंमृद्वारिग्राह्यंगृहीतव्यंतथा कायिकानांच वक्ष्यमाणमलानांसंबन्धिनीशुद्धा दशस्वपि शु-द्धिषु लेपाद्यपासनपर्यन्तंमृद्वारिग्राह्यम् । अत्र कश्चित् ॥ आददीत मृदोऽपश्च षट्सुपूर्वेषु शुद्धये। उत्तरेषु तु षट्-स्वद्भिःकेवलाभिर्विशुध्यतीति स्मृत्यन्तरदर्शनादुत्तरेषु कर्णमलादिषुनकदाचिदपिमृद्ग्राह्येतिमन्यते तदसत् । द्वादश-स्वपीत्येवमिहचोदनात्तस्मादुत्तरेषुविकल्पः । सच देशकालाद्यपेक्षया व्यवस्थितविकल्पोयथाह बौधायनः ॥ देशं-कालंतथात्मानंद्रव्यंद्रव्यप्रयोजनं ॥उपपत्तिमवस्थांचज्ञात्वाशौचंसमाचरेत् इति। अतोदेवपित्राद्यदृष्टार्थकर्मप्रवृत्तउत्तरेष्वप्या-ददीतान्यत्र तु नेति । आत्माश्रोत्रियत्वाचाराद्यतिशयोपेतोन्यथा वा द्रव्यमल्पमयावावम्ब्यावाशौचक्रियया प्रायश्चित्तार्हद्रव्यप्रयोजनं दृष्टादृष्टाद्युपयोगित्वेनोपपत्तिः संशोधकद्रव्यसंपत्तिरवस्थाशरीरात् ॥ १३४ ॥ वसेति । वसा कायस्नेहः । शुक्रंरेतः । असृक्रुधिरं मज्जाशिरस्थंमेदोमूत्रपुरीषकर्णमलश्लेष्मास्वक्षिमलेस्वेदाइत्येतेनृणां-मलाः । नरादीनांअभक्ष्यप्राणिनांमलाः मूत्रपुरीषोत्सर्गे सति ॥ १३५॥ एकेति । शुद्धिमिच्छतैका मृन्मृद्वार्यादेयम-र्थवदित्युदकसहिता लिङ्गे दातव्या । गुदे च तिस्रः। तथा एकलिङ्गहस्ते वामे॥ धर्मविद्दक्षिणंहस्तमधः शौचेन योजयेत् ॥ तथैव वामहस्तेन नाभेरूर्ध्वंनशोधयेत् ॥ इतिदेवलदर्शनेन तेनैव शौचविधिना दशदातव्यास्तत्र उभ-

योर्हस्तयोः समदातव्याः। यत्तूक्तसङ्ख्यया गन्धलेपक्षयोन भवति तदा यावन्नापैत्यमेध्याक्तादिति वचनात् उक्तसङ्ख्यानतिक्रमेणापि तत्क्षयपर्यन्तंशौचंकार्यमर्वाक्सङ्ख्यापूरणाल्लेपादिक्षयेपि सङ्ख्यावाक्यारंभसामर्थ्यात्सङ्ख्या पूरयितव्यैव ॥ १३६ ॥ एतदिति । यदेतदेकालिङ्गइत्यादि शौचमेतदुक्तंगृहस्थानामेव ब्रह्मचारिवानप्रस्थभिक्षूणां एतदेव द्वित्रिचतुर्गुणम् ॥ १३७ ॥ कृत्वेति । मूत्रपुरीषंकृत्वा कृतपूर्वोक्तशौचः कृतान्नभक्षः सन् शीर्षण्यानीन्द्रियच्छिद्राणि उपस्पृशेत् । आचमनमेव वृत्तानुरोधात् । एवमुक्तं तथा चोत्तरश्लोके विशेषयिष्यति । वेदंचाध्येतुमिच्छन्नन्नंचाश्नन्यावज्जीवं आचमेदिति । तच्च द्वितीयाध्यायउभयमप्यध्येष्यमाणस्त्वाचान्तोनिवेद्य गुरवेऽश्नीयादाचमेदित्युक्तंव्रताङ्गत्वार्थम् । इह तु शौचाङ्गतयोच्यते॥१३८॥तथाचाह त्रिरिति। शरीरशुद्धिमिच्छन् त्रीन्वारान्प्रथममपआचमेत्ततोद्वौ वारौ ओष्ठदेशे मुखंपरिमृज्यात् । स्त्रीशूद्रंपुनरेकवारंआचमनार्थमपोभक्षयेत् ॥१३९॥शूद्राणामिति। शास्त्रमर्यादानुवर्तिनांद्विजात्याश्रितानांशूद्राणामाश्रयभूतद्विजातीनांमासि मासिमुण्डनं वैश्यवच्च एका लिङ्गेइत्याद्याचमनपर्यन्तशौचविधिः कार्यः द्विजोच्छिष्टभोजन प्रकृतत्वादात्मसंबन्धे दातव्यम् ॥ १४० ॥ नोच्छिष्टमिति । मुखनिःसृताविप्रुषोव्यङ्गत्वेन निपतन्तितदोच्छिष्टंनजनयन्ति । तस्मात् श्मश्रूण्यास्यप्रतिष्ठानिदन्तांतरलग्नंवान्नावयवादिदन्तश्लिष्टंतुदंतवदन्यत्र जिव्हाभिमर्शनात्प्राक् च्युतेरित्येके च्युतेष्वास्रावविद्यान्निगिरन्नेव तच्छुचिरित्येवं गौतमप्रक्रियानोच्छिष्टंकरोति ॥ १४१ ॥

[ दन्तवद्दन्तलग्नेषु दन्तास्पर्शेषुचैवहि ॥ च्युतेष्वाश्रववद्विद्यान्निगिरन्नेवतच्छुचि ॥ १ ॥ ]

स्पृशन्तीति । भूमिकैस्तेसमाज्ञेयानतैरप्रयतोभवेत् । अन्येषामाचमनंददतोयेबिन्दवः पादावेवस्पृशन्ति न जङ्घादि तेत्वपहतभूम्यवस्थैःशुद्धैरुदकबिन्दुभिः तुल्याज्ञेयास्ततस्तैर्नाचमनार्हाभवति ॥ १४२ ॥ उच्छिष्टेनेति । गृहीतद्रव्यः सन्यद्युच्छिष्टेन स्पृष्टोभवति तदा द्रव्यमनवस्थाप्यैतत्कृताचमनः शुद्धित्वंप्राप्नोति ॥ १४३ ॥ वान्तइति । कृतवमनोदशैवतुद्विगुणाविरक्तइत्यायुर्वेददर्शनाद्दशविरेकान्विरक्तः स्नात्वा घृतप्राशनमाचरेत् भुक्त्वान्नंपुनर्यदि समनन्तरमेववमति तदाचामेदेव न स्नानघृतप्राशने कुर्यात् ॥ मैथुनंच कृतवतः स्नानंस्मृतम् ॥ १४४ ॥ सुप्त्वेति । स्वप्नक्षुतभोजनश्लेष्मनिरसनासत्याभिधानोदकपानानि कृत्वाध्ययनंच प्रारिप्सन् शुचिरपि सन्नाचमेत् । तत्र भुक्त्वा चोपस्पृशेत्सम्यगिति द्वितीयाध्याये भुक्त्वाचमनयुक्तंव्रताङ्गत्वार्थमिह तु शौचार्थमुच्यते । तथा वेदाध्ययनं कालेप्यध्येषमाणस्त्वाचान्तोवेदमध्येमाणश्चेति द्विभक्तमपीहेतरविधिवत्सार्थेनिरूप्यते ॥ १४५ ॥ एषइति । एषजननादि शौचविधिः समग्रोद्रव्याणांच तैजसानांशुद्धिः सकला सर्ववर्णानांब्राह्मणादीनांसंबन्धिनी युष्माकमक्ताऽधुना तुस्त्रीणांयेनुष्ठेयाधर्मास्तान्शृणुत ॥ १४६ ॥ बालयेति । बालयौवनवार्धक्यावस्थयापि स्त्रिया सूक्ष्ममपि गृहकार्यंस्वेच्छया न किंचिदपि कर्तव्यम् ॥ १४७ ॥ किंतर्हि बाल्यइति । पुत्राणांभर्तरिप्रेतेनभजेतस्वतंत्रताम् ॥ बाल्ययौवनभर्तृप्रमीतेषुपितृभर्तृपुत्राणामायत्ता भवेत्तदभावेपि ज्ञातिराजायत्तास्यात् । न तु कदाचित् स्वातन्त्र्यमाश्रये ॥ १४८ ॥ पित्रेति । पितृभर्तृपुत्रैः सर्वदा सर्वैर्यथासंभवं आत्मना विरहिता न स्याद्यस्मादेतद्वियोगेनासती भर्तृपितृकुले निन्दिते करोति ॥ १४९ ॥ सदेति । सर्वदा भर्तरि क्रुद्धेपि प्रसन्नवदनया गृहकर्मणि चतुरया सुसंस्पृष्टकुण्डकटाहादिभाण्डया व्यये चानुदारया भवितव्यम् ॥ १५० ॥ यस्मैदद्यादिति । यस्मै पिता पित्रनुमतेभ्राता एनांदद्यात्तंजीवन्तंपरिचरेत् मृतंच नातिक्रामेत् व्यभिचारेण ॥ १५१ ॥ मङ्गलार्थमिति । यदा सांस्वस्त्ययनमशान्त्यादिमन्त्रवाचनंहिप्रजापतियागश्च विवाहेषु क्रियते तन्मङ्गलार्थमभीष्टार्थसंपत्त्यर्थंन तु भर्तुः स्वत्वा

पादनार्थंयस्मात्प्राग्विवाहत् यद्वाग्दानंतद्भर्तुः स्वाम्यजनकं एवंच वाग्दानतः प्रभृत्यासांभर्तृपारातन्त्र्यं न विवाहात् ॥१५२ **अनृताविति** । योविवाहकृद्भर्ता सर्वत्रत्रा मीतिविवर्जितंइतिगौतमदर्शनाद्दतु काले अन्यदा च स्त्रिया नित्यमिहलोके च सुखस्य दाता तदाराधनेनैव चत्स्वर्गादिलोकप्राप्तेः परलोके च सुखस्य दाता ॥ १५३ ॥ **विशीलइति** । दुराचारोभार्यान्तरासक्तोवा विद्यानुष्ठानादिवर्जितोवा तथापि साध्व्या स्त्रिया सर्वदा देवइवपतिराराधनीयः ॥ १५४ ॥ **नास्तीति** । यथा भर्तुर्भार्यान्तरमवलंबनेनयज्ञकरणमस्ति नैवंभर्तारंविना स्त्रीणांयज्ञोस्ति नचतदनुज्ञातानांकृच्छ्रादिरुपवासोवाविद्यते। किंतर्हि भर्तृपरिचरणेनस्वर्गेमहिमानंप्राप्नोति । तस्मात्परलोकोपायान्तरंयस्माच्चभावात् ॥ १५५ ॥ **पाणिग्राहस्येति** । भर्तासहधर्माचरणेन योज्यते स्वर्गादिलोकत्वमामुकामासाध्वी स्त्री भर्तुर्जीवतोमृतस्यवा अप्रियंव्यभिचारादि न किंचिदाचरेत् वृत्त्यसंभवेपिच ॥ १५६ ॥ **कामंत्विति** । पुष्पमूलफलैःपवित्रैर्वरेदहंक्षपयेत् नवृत्त्यर्थं व्यभिचारबुद्ध्या परस्य नामापिउच्चरेत् ॥ १५७ ॥ एवंच **आसीतेति** । एकभर्तृकाणांयोधर्मस्तंसर्वधर्मोत्कृष्टमभिलषन्ती आमरणात्क्षुद्दुःखंसहमाना ऽनन्यमनस्का पुंसःप्रयोगंवर्जयेत् । नचापत्यार्थमपिप्रीतिमयेनान्तरेण तिष्ठेत् ॥ १५८ ॥ **अनेकानीति** । बाल्यतएव ब्रह्मचारिणा मकृतदाराणांवालखिल्यानांब्राह्मणानांपुराणोपवर्णितानांबहुसहस्राण्यष्टाशीति कुलवृद्ध्यर्थमपत्यान्यनुत्पाद्यैव स्वर्गंगतानि ॥ १५९ ॥ **मृतइति** । साध्वी स्त्री मृते भर्तरि अकृतपुंसंप्रयोगा अपुत्रापिसती स्वर्गंप्राप्नोति । यथा ते वालखिल्याद्याब्रह्मचारिणःप्राप्ताःदृष्टोपकारापेक्षयापिच ॥ १६० ॥ **अपत्यलोभादिति** । यास्त्री अपत्यलोभातिशयाभर्तारमतिक्रम्य वर्तते व्यभिचरति सा इहलोके गर्हांप्राप्नोति भर्तासहार्जितंस्वर्गादिलोकंनप्राप्नोति । किंचापत्यमपितत्तस्यानभवति ॥ १६१ ॥ **नान्योत्पन्नाइति** । भर्तृव्यतिरिक्ततया उत्पादिता प्रजासेहशास्त्रेतस्मात्पौनर्भवसंस्कारादि योगेनापिनभर्त्रन्तरमाश्रयणीयम् ॥ १६२ ॥ **पतिमिति** । याक्षत्रियादिकास्वंपतिंपरित्यज्य उत्कृष्टंब्राह्मणादिकमाश्रयति सा उत्कृष्टसेवनेनापि गर्हणीयैव लोके भवति । परोन्योभर्ता पूर्वोयस्यास्सापरपूर्वेत्येवंच लोके उच्यते ॥ १६३ ॥ **व्यभिचारात्त्विति** । नरान्तरसंपर्कात्तु स्त्री इहलोके गर्हतांजन्मान्तरेच सृगालयोनिंप्राप्नोति । अत्यन्तक्रूरैश्चकुष्ठादिरोगैःसंपीड्यते ॥ १६४ ॥ **पतिमिति** । या मनोवाग्देहसंयुता सती नैर्वाग्मनोदेहैःपतिंन व्यभिचरति सा भर्त्रासह अर्जितान्स्वर्गादिलोकान्प्राप्नोतीह विशिष्टैःसाध्वीत्युच्यते । इतिवाङ्मनसनिरासार्थमुक्तंपुनर्वचनम् ॥ १६५ ॥ **अनेनेति** । मनोवाक्कायसंयतया नार्यनेन पूर्वोक्तेनाचारेणेह लोके श्रेष्ठांकीर्तिंपतिलोकंच परलोके प्राप्नोतीत्युपसंहारार्थम् ॥ १६६ ॥ **एवमिति** । धर्मज्ञोद्विजातिरुक्ताचारांसमानजातीयांपूर्वमृतांस्त्रियंश्रौतस्मार्ताग्निभिःयज्ञपात्रैश्च स्रुक्स्रुवादिभिर्दाहयेत् ॥ १६७ ॥ **भार्यायाइति** । पूर्वमृतायै भार्यायै अन्त्येष्टिदाहावग्नीन्दत्वा गार्हस्थ्येकाश्रमनिर्वाहेच्छया पुत्राभावाद्वा प्राप्तपर्यन्तत्वादिनावा केनचित्कारणेन वानप्रस्थाद्याश्रमान्तराश्रयेण पुनर्विवाहाग्निपरिग्रहौ कुर्यात् ॥ १६८ ॥ **अनेनेति** । तृतीयाध्यायोक्तविधानेनपञ्चयज्ञानयजहन्द्वितीयमायुर्भागंकृतभार्योगृहस्थाश्रममनुतिष्ठेत् ॥ १६९ ॥ इतिश्रीभट्टमाधवात्मजगोविन्दराजविरचितायांमनुटीकायांमन्वाशयानुसारिण्यांभक्ष्याभक्ष्यसूतकद्रव्यशुद्धिस्त्रीधर्मनिरूपणंपंचमोध्यायः ॥ ५ ॥

**॥ इतिपञ्चमाध्यायःसमाप्तः ॥**

---

## ॥ अथषष्ठोऽध्यायः ॥



**ॐनमःशिवाय** ॥ ॥ **एवमिति** । कृतसमावर्तनोद्विजउक्तप्रक्रियो यथाशास्त्रंगृहाश्रममनुष्ठाय ततोनियतः कृतनिश्चयोविशेषेण यतेन्द्रियः सन् यथा वक्ष्यमाणप्रकारेण यथार्हति तथा वानप्रस्थाश्रममनुतिष्ठेत् ॥ १ ॥ **गृहस्थइति** । गृहस्थोयदात्मनस्त्वक्शैथिल्यंशिरःपाण्डुर्यंपौत्रान्पश्येत्तदा वानप्रस्थस्यार्थे अरण्यमाश्रयेत् ॥ २ ॥ **संत्यज्येति** । ग्रामोद्भवान्नाभक्षणंगवाश्वादि च सर्वंत्यक्त्वा भार्यांपुत्रेषु समर्प्य सहवा तया वनंगच्छेत् ॥ ३ ॥ **अग्निहोत्रमिति** । श्रौताग्नीन् गृह्यंवाग्निमग्न्युपकरणंच स्रुक्स्रुवादि समादाय ग्रामाद्बहिः निःसृत्य जितेन्द्रियः- सन्निवसेत् ॥ ४ ॥ **मुन्यन्नैरिति** । मुन्यन्नैरपरैः पवित्रैः शाकमूलफलैर्वा एतानेव पूर्वोक्तान्महायज्ञा- न्यथाशास्त्रमनुतिष्ठेत् ॥ ५ ॥ **वसीतचर्मचीरंवामोर्गंवाचार्क्षमेववेति** । मृगादिचर्म वस्त्रखण्डंवा वृक्ष- वल्कलंवा आच्छादयेत् । सायंप्रातश्च स्नायात् । श्मश्रुलोमनखांश्च नित्यंधारयेत् ॥ ६ ॥ **यद्भक्ष्यइति** । य- द्भक्षंभुंजीत ततस्तस्मात् पूर्वोक्तवत् बलिंभिक्षांच दद्यात् । आश्रमागतांश्च उदकमूलफलभिक्षादानेन पूजयेत् ॥ ७ ॥ **स्वाध्यायशीलोनित्यंस्याद्दांतोमैत्रसमाहितः ॥ त्यक्तद्वंद्वोनिशंदातासर्वभूतानुकंपनः** ॥ वेदाभ्यासरतः शीतातपादिद्वन्द्वसहिष्णुः सर्वोपकारशीलसंयतमनाः स्यात् ॥ ८ ॥ **वैतानिकमिति** । अमावास्यापौर्णमासंच पर्वयो- र्दर्शे अत्यजन् श्रौतमग्निहोत्रंयथाशास्त्रंभार्यानिक्षेपपक्षेऽपि वचनाद्भ्यलाभार्थंच जुहुयात् ॥ ९ ॥ **नक्षत्रेष्टिंत- थादर्शपौर्णमासानिचाहरेत् ॥ उत्तरायणंचक्रमशोदक्षिणायनमेवच** ॥ नक्षत्रेष्टिंसूत्रकारोक्तस्वरूपभवंतस्ये- ष्टिंच तथा दर्शपौर्णमासानि च उत्तरायणान् दक्षिणायनान् श्रौतविशेषादीन् क्रमेण कुर्यात् । यत्तुकैश्चिदुक्तं- सर्वमेतत् स्मार्तकर्म दर्शपौर्णमासादिशब्दैः स्तुत्यर्थमुच्यते श्रौतस्य दर्शपौर्णमासादिश्रुत्या ग्राम्यान्नचरुपुरोडाश- साध्यत्वविधानात् न शक्त्या स्मृतिव्रीह्यादिनिवर्ततइति तदसत् उच्यते । यतानि सत्यागतिसुखंशब्दार्थ- हानंग्राम्यंव्रीह्यादिभिरेव कथंचिदरण्यजातैरेतानि निवर्तयिष्यन्तइतिकिमनुपपन्नं स्वनएवोत्तरश्लोके मुन्यन्नै- र्मेध्यैरिति वक्ष्यति मेधीयस्तदर्हाणि मेध्यानि ॥ १० ॥ **वासन्तशारदैरिति** । वसन्तोद्भवैः यागार्हैः स्वयमानीतैर्मुन्यन्नैः पुरोडाशांश्चरूंश्च यथाशास्त्रंप्रतियोगंप्रतिपादयेत् ॥ ११ ॥ **देवताभ्यश्चेति** । तद्वनोद्भवंसंपादितंहविः अतिशयेन यागार्हशास्त्रचोदितदेवताभ्योहुत्वा शेषमात्मन्युपयोजयेत् । आत्मना च संपा- दितंलवणमूषात्लवणादि ॥ १२ ॥ **स्थलजोदकशाकानीति** । स्थलोदकोद्भवानि शाकानि अरण्योद्भवानि यज्ञियवृ- क्षोद्भवानि च पुष्पमूलफलानि अद्यात् । इङ्गुदादिफलोद्भवांश्च स्नेहानारण्यत्वेपि सति ॥ १३ ॥ **वर्जयेदिति** । माक्षिकंमांसं

---

(१) मूलग्रंथे सायंस्नायात्प्रगेतथाइतिपाठितं । टीकायामपिगोविन्दराजेनतथैवगृहीतं । तथापिसर्वेषुगोविन्द- राजीयपुस्तकेषु मृगैवावार्क्षमेववा इतिपाठोगृहीतः ।

भूजातानि कवकानि छत्राकानि न वार्क्षाणि । भूस्तृणंभूतृणमितिमालवदेशप्रसिद्धं । तत्साहचर्यात्तत्सदृशमेव शिग्रुकमिति तृणजातीयं वाहीकदेशप्रसिद्धं श्लेष्मातकाख्यवृक्षफलानि च वर्जयेत् । वक्ष्यमाणसंवत्सरनिचयपक्षे ॥ १४ ॥ त्यजेदिति । संचितानि नीवाराद्यन्नशाकमूलफलानि वासांसि जीर्णानि आश्वयुजे मासित्यजेत् ॥ १५ ॥ नफालकृष्टमिति । नग्रामजातान्यार्तोपिपुष्पाणिचफलानिच ॥ आरण्यमपि फालकृष्टप्रदेशजातंत्स्वामिनोपेक्षितमपि नाश्नीयात् । तथारण्यानि अफालकृष्टान्यपि कथंचित् ग्रामे जातानि पुष्पमूलफलानि क्षुत्पीडितोपि नाश्नीयात् ॥ १६ ॥ अग्निपक्काशनइति । अग्निपक्कमारण्यान्नंभुञ्जीत कालपक्कंवा फलादि तस्मात्तथाश्मना वा तदन्नंनीवाराद्यवहन्यान्नमेव भक्षेत् । दन्तोलूखलेनदन्ताएवास्य निस्तुषीकरणे उलूखलकार्ये स्युः ॥ १७ ॥ सद्यःप्रक्षालकइति । षण्मासिनिचयोवापिसमानिचयएववा ॥ आन्हिकमात्रमन्नंवा संचिनुयात् । मासपर्याप्तंवा षण्माससमर्थंवा संवत्सरपूरकंवा ॥ १८ ॥ नक्तमिति । यथाशक्त्यान्नमाहृत्यप्रदोषएवचाश्नीयादिति वा चतुर्थकालाशिनोवा भवेत् । सायंप्रातर्मनुष्याणामशनंदेवनिर्मितमित्येतत् प्रातइत्येकस्मिन्नहन्युपोष्यअपरेद्युः सायमश्नीयात् अष्टमकालिकोवा त्र्यहमुपोष्यचतुर्थेहनिसायमश्नीयात् ॥ १९ ॥ चान्द्रायणविधानैरीति । शुक्लकृष्णपक्षयोश्चान्द्रायणविधानैर्वा वक्ष्यमाणैः पिण्डोपचयापचयरूपैर्वर्तेत । पौर्णमास्यमावास्ययोर्वा यवपिष्टादिपेयांक्कथितामेकवारमश्नीयात् ॥ २० ॥ पुष्पमूलफलैरिति । मूलफलान्येव कालपक्कानि नाग्निपक्कानि स्वयंपक्कानि भक्षयेत् वैखानसाख्ये वानप्रस्थशास्त्रदर्शने स्थितः तदुक्तमन्यदप्यनुतिष्ठेत् ॥ २१ ॥ भूमाविति । भूमौ लुठन् गतागतानि वा कुर्यात् । पादाग्राभ्यांवा दिनंतिष्ठेत् किञ्चिच्च कालंस्थितएव स्यात् । किञ्चिच्चोपविष्टएव सवनेषु सायंप्रातर्मध्यंदिनेषु च स्नानंकुर्यात् । प्रागतश्चेत्येतेन सहास्य विकल्पोनियमातिशयापेक्षः ॥ २२ ॥ ग्रीष्मइति । शनैः शनैस्तपोविवृद्धयर्थंदिक्चतुष्टयोपनिहितैरुपरिष्टाच्चादित्येन ग्रीष्मे आत्मानंतापयेत् । वर्षासु गलत्सलिलंजलधारागलितंशिरसि धारयेत् । हेमन्तेचार्द्रवस्त्रोभवेत् । ऋतुः संवत्सरइत्येतद्दर्शनावष्टंभेन सकलसंवत्सरापेक्षमेवैतदुक्तम् ॥ २३ ॥ उपस्पृशन्निति । सायंप्रातर्मध्यंदिनेषूक्तंत्रिषवणंस्नानंकुर्वन् देवपितृतर्पणंकुर्वन्नन्यदपि वैखानसशास्त्रोक्तंतीव्रंतपश्चरंश्च शरीरंक्षपयेत् ॥ २४ ॥ अग्नींश्चेति । ऊर्ध्वंषड्भ्योमासेभ्योअनग्निरनिकेतइति वसिष्ठदर्शनात्तस्मात्कालादूर्ध्वंश्रौतानग्नीन् वैखानसशास्त्रविधानेन आत्मनिभक्ष्यपानादिद्वारेण समारोप्य ततोलौकिकाग्निपर्णकुटीगृहशून्योमुनिश्च संयतवाङ्मूलफलाशनएव स्यात् ॥ २५ ॥ अप्रयत्नइति । सुखप्रयोजनेषु सीतातपपरिहारादिषु यत्नरहितः स्त्रीसंप्रयोगरहितः वरण्डकस्थण्डिलशायी आश्रमेषु वृक्षमूलेषु ममेदमित्येवमात्मीयाभिमानशून्योवृक्षनिकेतनिवासी स्यात् ॥ २६ ॥ फलमूलाभावेतु तापसेष्विति । वानप्रस्थेभ्यएव ब्राह्मणेभ्यः प्राणवृत्तिमात्रप्रयोजनंभैक्ष्यमाहरेदन्येभ्यश्चैव गृहस्थेभ्यः वनवासिभ्यः ॥ २७ ॥ तदभावे तु ग्रामादिति । ग्रामाद्वानीयग्रामस्याप्यन्नस्याष्टौग्रासान् पर्णपुटिकया हस्तेनवा शरावादिखण्डेनवा प्रतिगृह्य वानप्रस्थोऽश्नीयात् ॥ २८ ॥ एतानिति । वानप्रस्थ्यमनुतिष्ठन् विप्रएतानन्यांश्चैव वैखानसशास्त्रोक्तान् नियमानभ्यसेत् । आत्मनश्च ब्रह्मत्वप्राप्तये नानाप्रकाराउपनिषदुक्ताःश्रुतीरर्थतोभ्यसेत् ॥ २९ ॥ यस्मादिताः ऋषिभिरिति । ऋषिभिः सर्वार्थदर्शिभिः अंगिरसःप्रभृतिभिरन्यैश्च ब्राह्मणैर्वानप्रस्थैरेव गृहस्थैश्च विज्ञानविवृध्यर्थमुपनिषच्छ्रुतयः सेविताः तपोविवृध्यर्थंच शरीरस्य च कल्मषक्षयाय चादरेण दीक्षाः सेविताः तस्मादेताः सेविताइतिपूर्वविधिशेषपुराकल्पार्थवादः ॥ ३० ॥ अचिकित्स्यव्याध्युद्भवेऽनिष्टसंदर्शनेवासति अपराजितामिति । उत्तरपूर्वावा दिशमाश्रित्य अकुटिलयोगनिष्ठावान् वाय्वम्बुभक्षः सन् आशरीरस-

निपाताद्गच्छेत् । न पुरायुषः स्वकामी प्रेयादित्येतत्श्रुतिविरोधोनयतः स्वकामिशब्दादविधिमरणमत्र निषिध्यते इति अवसीयते नशास्त्रचोदितमिति ॥ ३१ ॥ **आसामिति** । एषांपूर्वोक्तानां अनुष्ठानानाम-भ्यादन्यतमेनानुष्ठानेन शरीरंत्यक्त्वाविगतसंतापोगतभयश्च विप्रोब्रह्मलोके पूजांलभते सम्यगुक्तमरणाकरणेन वासौ ॥ ३२ ॥ **वनेषुतुविवृत्त्यैवंतृतीयंभागमायुषः ॥ चतुर्थमायुषोभागंत्यक्त्वासंगःपरिव्रजेत् ॥** एवमुक्तरीत्या तृतीयमायुर्भागंवानप्रस्थानुष्ठानार्थंवनेउषित्वा ततश्चतुर्थमायुर्भागंपूर्वावस्थानादतिशयेनरागादीन् त्यक्त्वा चतुर्थाश्रममनुतिष्ठेत् वक्ष्यमाणाश्रमसमुच्चयपक्षे ॥ ३३ ॥ **आश्रमादिति** । पूर्वोक्तेष्वाश्रमेषु यथाक्रमंपूर्वस्मात्पूर्वस्मादनंतरं आश्रममनुष्ठाय यथासंभवं आश्रमेषु हुतहोमोजितेन्द्रियोभिक्षाबलिदानश्रान्तः सन् प्रव्रज्यामनुतिष्ठन्परलोके वर्धते । मोक्षप्राप्त्यानंदमयंब्रह्मेत्यवमृध्यतिशययुक्तोभवति ॥ ३४ ॥ तथाश्रमसमुच्चयपक्षांगीकरणे सति **ऋणानित्रीण्यपाकृत्यमनोमोक्षेनियोजयेदि**ति । उत्तरश्लोकवक्ष्यमाणानि त्रीणि ऋणानि संशोध्य ततः प्रव्रज्याद्वारेण मोक्षविषये मनोनियोजयेत् । तानि पुनरसंशोध्य साक्षेपोयंप्रव्रज्यामनुतिष्ठन्नरकंव्रजति ॥ ३५ ॥ तानि ऋणानि दर्शयति **अधीत्ये**ति । त्रिभिर्ऋणैर्ऋणवान् जायते मनुष्योयज्ञेन देवेभ्यः प्रजया पितृभ्यः स्वाध्यायेन ऋषिभ्यः इतिब्रूयात् । यथाशास्त्रंवेदानधीत्य पुत्रांश्च पर्वगमनानृतुरिरंसावर्जं ऋतुकालादिगमनधर्मेणोत्पाद्य यज्ञैश्चज्योतिष्टोमादिभिर्यथाशक्तिरिष्ट्वा ततोमोक्षोपायप्रव्रज्याख्ये मनोनियोजयेत् ॥ ३६ ॥ **अनधीत्य द्विजोवेदमनुत्पाद्य तथासुतामिति** । वेदाध्यनप्रजोत्पादनयज्ञानुष्ठानान्यकृत्वा द्विजोमोक्षमिच्छन्नरकंव्रजति ॥ ३७ ॥ **प्राजापत्यामिति** । यजुर्वेदपूर्वाख्यग्रन्थोक्तां प्रजापतिदेवताकांसर्वस्वधनदक्षिणामिष्टिं कृत्वा तदुक्तविधिनैव चाग्नीनात्मनि भस्मपानादिना समारोप्य वानप्रस्थाश्रममनन्तरमकृत्वैव गृहस्थाश्रमान्तरमेव ब्राह्मणः प्रव्रज्यामनुतिष्ठेदिति । एवमाश्रमाणांसमुच्चयपक्षोऽनेन दर्शितः । त्रिचतुःसमुच्चयविकल्पपक्षाश्च सर्वएव श्रुतिनोदिताः स्थिताः तथा च जाबालश्रुतौ ॥ ब्रह्मचर्यंसमाप्य गृही भवेत्गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेद्यदिचेतरथानुकुर्यात् । ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वाइत्युक्तम् ॥ ३८ ॥ यइति । **तस्यतेतेजसालोकाभवन्तिब्रह्मवादिनः ॥** यः सर्वभूतेभ्योऽभयंदत्वा गृहादेव प्रव्रजति तस्य ब्रह्मस्वरूपनिरूपणार्थोपनिषदादिशास्त्रनिष्ठस्य नित्यमकाशकालोकाभवन्ति ॥ ३९ ॥ **यस्मादिति** । यस्य द्विजस्य सकाशाद्भूतानांसूक्ष्ममपि भयंनोत्पद्यते तस्य सांप्रतिकशरीरपातादनन्तरंकस्माच्चिदपि भयंन भवति ॥ ४० ॥ **अगारादिति** । गृहान्निर्गतः पवित्रैर्दर्भाजिनदण्डकमण्डल्वादिभिः युक्तः संयतवाक् केनचिद्ढौकितेषु स्वाद्वन्नादिष्वपगतस्पृहः व्रजेत् ॥ ४१ ॥ **एकइति** । एकस्य सतोमोक्षावाप्तिर्भवतीति एवंजानन्नेकएवन प्रव्रजितान्तरेण सहासीतासहायवान् भृत्यादिरहितोऽन्यत्यागेनेत्यपरे । बौधायनेन हि स्त्रीणांचैकइति स्त्रीणामपि प्रव्रज्योक्ता एवंप्रकुर्वन्न किंचित् त्यजति नापि केन त्यज्यते वियोगदुःखंन तेनानुभूयते न चान्योनुभाव्यते सुसंबन्धात्मकाभावादविघ्नेन मोक्षोपायसंपत्तिः ॥ ४२ ॥ **अनग्निरिति । अप्रेक्षकोसंकुसुकोमुनिर्भावसमाहितः ॥** शास्त्रेग्निसमारोपणस्योक्तत्वात् लौकिकाग्निरहितः अगृह्यकउपेक्षकोव्याध्यादेरुत्पत्तेः शरीरस्यापि । यथाहशङ्खः ॥ नात्मनः प्रतिकारंकुर्यात्नापि कारयेत् ॥ नानुमान्येतेति असंकुसुकः संयतबुद्धिचेतसा च संयतः स्यात् भिक्षार्थंच ग्रामंगच्छेत् ॥ ४३ ॥ **कपालंवृक्षमूलानिकुचैलमसहायतामिति** । कर्परंभिक्षार्थंवृक्षमूलानि आश्रयः कुचैलंकंथा वासोर्थं एकारामता संगत्यागाय शत्रौ मित्रे च साम्यमित्येतत् मुक्तिसाधनत्वान्मुक्तस्यचिन्हम् ॥ ४४ ॥

[ ग्रैष्महेमंतकान् मासान् अष्टौ भिक्षुर्विचक्रमेत् ॥ दयार्थं सर्वभूतानां वर्षास्वेकत्र संवसेत् ॥ १ ॥
नासूर्यं हि व्रजेन्मार्गं नादृष्टां भूमिमाक्रमेत् ॥ परिभूताभिरद्भिस्तु कार्यं कुर्वीत नित्यशः ॥ २ ॥
सत्यां वाचमहिंसां च वदेदनपकारिणीं ॥ कृत्वापेतामकलुषां मनृशंसामपैशुनां ॥ ३ ॥ ]

**नाभिनन्देतेति** । मरणं जीवितं वा नाभिलषेत् अपि तु भृतिसंशुद्धिकालं यथाभृतकोऽपेक्ष्यते एवं स्वेच्छोपनिपतितं मरणकालमपेक्षते ॥ ४५ ॥ **दृष्टिपूतमिति** । प्राण्युपघातपरिहारार्थं चक्षुःशोधितं पदं क्षिपेत् । उदकसूक्ष्मजन्तुपरिहारार्थं च वस्त्रसंशोधितं जलं पिबेत् । सत्यपवित्रीकृतां च वाचं वदेत् । एवं च मौनेन हास्यविकल्पः असत्संकल्पेन परिहारेण च मनसा पवित्रीकृतात्मा सर्वदा स्यात् ॥ ४६ ॥ **अतिवादानिति** । सामर्षवादान् क्षमेत न कंचन परिभवेत् । न चेदं शरीरमाश्रित्य व्याध्यायतनभूतं विद्युद्द्योत इव विनश्वरं एतन्निमित्तकं स्वर्गापवर्गपरिपंथि केनचिदपि सह वैरं न कुर्यात् ॥ ४७ ॥ **क्रुध्यन्तमिति** । संजातक्रोधाय प्रतीपं न क्रुध्येत । अधिक्षिप्तश्चाधिक्षेप्तारं भद्रं वदेत् । धर्मोऽर्थः कामो धर्मार्थौ वर्थकामौ धर्मकामावर्थकामा समस्ताश्चेत्येतानि यानि वाचः समोच्चारणनिमित्तानि तेष्ववकीर्णां विक्षिप्तां तद्विषयां सर्वस्य च भेदस्यासत्यरूपस्यादनृतार्थां वाचं न वदेदपि तु मोक्षाश्रितामेव वदेत् ॥ ४८ ॥ **अध्यात्ममतिरिति** । उपनिषदाद्यध्यात्मवृत्तिः सन् दण्डकमण्डल्वादिष्वपगतविशेषापेक्षो निःस्पृहोऽसहायः सन् सुखाश्वस्मिन्संसारे विचरेत् ॥ ४९ ॥ **नचेति** । भूकंपाद्युत्पातचक्षुःस्पंदनादिनिमित्तफलकथनेन अद्याश्विनी दन्ते नखकरले स्वालक्षणं इत्येतत् नक्षत्राङ्गविद्यया च तथायं नीतिमार्ग इच्छन्नाम्यं वर्तितुमित्यनुशासनेन शास्त्रार्थवदनेन च कदाचिदपि भिक्षां लब्धुमिच्छेत् ॥ ५० ॥ **नेति** । वानप्रस्थब्राह्मणपक्षिश्वभिरन्यैर्भिक्षाटनशीलैर्व्याप्तं गृहं भिक्षार्थं न प्रविशेत् ॥ ५१ ॥ **कॢप्तकेशनखश्मश्रुरिति** । लूनकेशनखश्मश्रुः पात्री दण्डकुसुंभवान् सर्वभूतान्यपीडयन् नियतो बुद्धिमान् सर्वदा विचरेत् ॥ ५२ ॥ **अतैजसानिति** । सौवर्णलोहादिवर्जितानि अच्छिद्राणि भिक्षाभोजनपात्राणि स्युर्निर्व्रणानि च तेषां च उदकेनैव शुद्धिर्यज्ञे चमसानामिव ॥ ५३ ॥ **अलाबुं वा दारुपात्रमिति** । अलाबुदारुमृत्तरुत्वङ्निर्मितानि पात्राणि प्रव्रजितानां स्वायंभुवो मनुराह॥५४॥**एककालमिति** । सकृत्प्राणयात्रामात्रार्थं एकवारमेव भैक्ष्यं चरेत् । नोभयकालमपि भैक्षचरणविस्तरमसङ्गं न कुर्यात् । यस्माद्भैक्षाशनातिशयेन शक्तो यतिरन्नमदोद्रेकात् विषयान्तरेष्वपि सज्जति॥५५॥**विधूम इति** । विगतधूमे काले निवृत्तमुसलावहननेषु पाकज्वालासूपशान्तासु गृहस्थपर्यन्तेषु जनेषु कृतभोजनेषु उच्छिष्टशरावेषु त्यक्तेषु सर्वदा यतिर्भिक्षां चरेत् ॥ ५६ ॥ **नरागी न विषादी स्याल्लाभश्चैनं न हर्षयेदिति** । लाभालाभयोर्हर्षविषादौ न भजेत । प्राणाप्यायनमात्रमन्नं भुञ्जीत । दण्डकमण्डल्वादिमात्रायामिदं शोभनं नेत्येवं संगं न कुर्यात् ॥ ५७ ॥ **अतिपूजितलोभात्तु भिक्षां यत्नेन वर्जयेत् ॥ अतिपूजितलोभैस्तु यतिर्मुक्तोपि बध्यते** ॥ पूजापूर्वकभैक्ष्यलाभात्सर्वदा निन्द्येदतश्च वर्जयेत् । यस्मात्पूजितलाभसहोत्पन्न्या यतिर्मोक्षमाणोपि संसारान्प्राप्नोति ॥ ५८ ॥ **अल्पान्नाभ्यवहारेणेति** । विषयैरूपादिभिरुपभोगार्थमिन्द्रियाणि अल्पान्नभोजनेन एकान्तदेशउपवेशनेन च ह्रियमाणानि विषयेन्द्रियाणि निवर्तयेत् ॥ ५९ ॥ **यस्मात् इन्द्रियाणामिति** । इन्द्रियजयरागद्वेषादिअहिंसावर्जनैर्मोक्षाय योग्यो भवति ॥ ६० ॥ अधुनेन्द्रियजयोपायतया संसारनिषेधमुपदिशति **अवेक्षेनेति** । शिष्टाकरणप्रतिषिद्धसेवनेनोत्पन्नपापसमुद्भवाःक्षेत्रज्ञानां सर्पककलासकृम्यादिश-

रीरमलीः यमगृहेपि नरकपतनंयातनाश्च निशिततरकरपत्रविदारात्मकाः शास्त्रदृष्ट्या विलोकयेत् ॥ ६१ ॥ विप्रयोगमिति । इष्टवियोगानिष्टसंयोगजरयाभिभवव्याध्युपपीडनानि कर्मदोषोद्भवानि पर्यालोचयेत् ॥ ६२ ॥ देहादिति । अस्यक्षेत्रज्ञस्य अस्माच्छरीराद्दुःसहसन्धिबन्धनिघट्टनपूर्वकबहुलतरतमःप्रवेशकर्कशमुत्क्रमणंपुनश्च शीतोष्णतिक्तकटुकादिजनन्यशनपानादिदुःखबहुलेगर्भउत्पत्तिसृगालादिनिकृष्टजात्यनन्तयोनिगमनानि च कर्मदोषसमुद्भवान्यवेक्षेत ॥ ६३ ॥ अधर्मप्रभवमिति । शरीरवतांक्षेत्रज्ञानां अधर्मकारणकंदुःखसंबन्धंधर्मार्थनिमित्तकंच क्षेमंसुखसंबन्धमेवेक्षेत । अतइत्थंपर्यालोच्येन्द्रियजये मोक्षोपायभूते यतेत ॥ ६४ ॥ सूक्ष्मतामिति । परमात्मनश्चित्तवृत्तिस्थैर्येण सूक्ष्मतामवेक्षेत यएषोऽन्तर्हृदयेऽणीयानितिश्रुतेर्यदि वा शरीरादिस्थूलपदार्थव्यतिरिक्तत्वावलंबनेनोपरचितसूक्ष्मत्वव्यपदेशे सति सूक्ष्मतामवेक्षेत । तथोत्कृष्टापकृष्टशरीरेषुशुभाशुभफलोपभोगार्थमधिष्ठातृत्वमस्यावेक्षेत ॥ ६५ ॥ भूषितोपिचरेद्धर्मंयत्रतत्राश्रमेवसान्निति । यस्मिन्कस्मिंश्चिदाश्रमेस्थितः सर्वभूतेषु समः सन् आश्रमलिङ्गपरित्यागेनतद्विरुद्धवेषालङ्कारयुक्तोपि तदाश्रमोक्तंयमसमूहमनुतिष्ठेत् । यस्मान्नदण्डकमण्डल्वादिधारणंधर्मस्यकारणं अपि तु यमनियमानुष्ठानंयमनियमानुष्ठानकर्मप्राधान्यख्यापनार्थं एतल्लिङ्गनिन्दावचनंन लिङ्गपरित्यागार्थंविहितत्वात् ॥ ६६ ॥ अत्र दृष्टान्तमाह फलमिति । कतकवृक्षफलंयद्यपि कलुषोदकप्रसन्नतोत्पादकं तथापि तत्संबन्धिनामोच्चारणमात्रेणैव उदकंप्रसन्नंन भवति । अपि तु फलप्रक्षेपक्रियामपेक्षते एवंन लिङ्गधारणमात्रेणैव धर्मोभवत्यपि तु अनुष्ठानमपेक्षते ॥ ६७ ॥ संरक्षणार्थमिति । शरीरपीडायामपि प्राणिसंरक्षणार्थंरात्रावहनि भूमिमवेक्ष्य पर्यटेदिति प्रायश्चित्तकथनार्थमुक्ताभिधानंचाह ॥ ६८ ॥ अह्नेति । यानचिन्तितान् प्राणिनोऽहनि रात्रौ वा यतिर्हन्ति तद्वधपापनिर्हरणार्थंस्नात्वा सव्याहृतिंसप्रणवांगायत्रींशिरसा सह । त्रिःपठेदायतप्राणः प्राणायामः सउच्यते इति वसिष्ठकृतलक्षणान् प्राणायामान् षट् कुर्यात् । अस्यचप्रायश्चित्तप्रकर्षणोत्कर्षआदरार्थः असिञ्चितवृत्तेपि व्यतिक्रमे पापंभवती अस्मादज्ञानतइति वचनादवसीयेत ॥ ६९ ॥ यस्मात् प्राणायामाइति । प्राणायामाभूर्भुवःस्वरित्येताभिर्व्याहृतिभिरोंकारेण च युक्ताः कुंभकपूरकरेचकविधानेन कृताप्रकृष्टंतपोब्राह्मणस्य बोद्धव्यम् । तत्र बाह्याभ्यन्तरवायोःकोष्ठप्रवेशनिष्क्रमणनिरोधकुंभकोप्लास्यवायोरनवरतोत्सर्गोरेचकइति ॥ ७० ॥ दह्यन्तइति । धातूनांसुवर्णाद्युत्पत्तिमृदाद्यग्निमध्ये भस्त्रादिना ध्मायमानानांयथाद्रव्याणि दह्यन्ते एवमिन्द्रियाणांविषयप्रवृत्त्या ये रागादयोदोषाउद्भवन्ति ते प्राणनिग्रहेण विषयान् प्राणनिग्रहणविषयानभिध्यानंततोरागादिन्यावृत्तिः इत्येतदनेनोच्यते ॥ ७१ ॥ एवंच सति प्राणायामैरिति । अनन्तरोक्तनीत्या प्राणायामैरागादीन् दहेत् । देशबन्धश्चित्तस्य धारणेतियोगादिलक्षणादिचित्तस्याव्यापृष्टतावस्थस्य अप्रतिष्ठस्य हृदयादिदेशधारणात्मिकाभिः किल्बिषंदहेत् । पापमुद्धर्तुंरक्षेत् । प्रत्याहारेण । मनसोविषयेभ्यः प्रत्याकर्षणेन संसर्गानिन्द्रियविषयसंपर्काख्यान् विषयोपलब्धिहेतूनुद्धर्तुंरक्षेत् । तत्प्रत्यैकताध्यानं इति योगशास्त्रोक्तलक्षणेन विजातीयप्रत्ययानानुविद्धात्मसाक्षात्करणरूपेण च ध्यानेन धर्मोज्ञानंविरागऐश्वर्यंसात्त्विकमेतद्रूपंनित्यमस्माद्विपर्यस्त इत्येतत्सांख्योक्तेन धर्माज्ञानाद्यैर्वैरागानैश्वर्यान् गुणान् दहेत् ॥ ७२ ॥ उच्चावचेष्विति । अस्य क्षेत्रज्ञस्योत्कृष्टापकृष्टेषु ब्रह्मादिस्तम्बपर्यन्तेषु भूतेषुप्राप्तिमसंस्कृतात्मभिरशास्त्रज्ञैरेवाहरेत् यथावद्विजानीयादनेन हेतुना यंसंसारान्प्रतिपद्यतइति ॥ ७३ ॥ यस्मात् सम्यगिति । आत्मविषयसम्यग्ज्ञानोपेतः

कर्मभिस्तैलपक्वबीजवदात्मज्ञाने सति कार्यजननासमर्थैर्ननिबध्यते संसारे नोत्पद्यते आत्मज्ञानशून्यः पुनःसंसारमावर्तते ॥ ७४ ॥ **अहिंसयेति** । अशास्त्रितहिंसावर्तनेनेन्द्रियाणांच विषयसक्तिपरिहारेण वैदिकैश्च नित्यैः कर्मभिः तीर्थैश्च कृच्छ्रचान्द्रायणानुष्ठानैरिह संसारे च ब्रह्मप्राप्तिलक्षणंपदंसाधयन्तीह श्लोकद्वयेनज्ञानकर्मसमुच्चयफलमाह ॥ ७५ ॥ इदानीं अपवर्गसाधनभूतवैराग्योद्भवविषयकायस्वरूपनिरूपणमाह **अस्थिस्थूणंस्नायुबद्धमिति** । **जराशोकसमाविष्टमिति** । पृथिव्यादिभूतविकारमांसादिमयशरीरमिदंगृहकंत्यजेत् । रूपकभङ्ग्याचास्य गृहत्वंदर्शयति । अस्थीनि स्थूणाइव यस्य तदवष्टम्भत्वात् स्नायुभिर्बद्धंमांसरुधिराभ्यां उपलिप्तंचर्मच्छादितंमूत्रपुरीषाभ्यांपूर्णं अतएव दुर्गन्धिजरोपेताभ्यां आक्रान्तंव्याधीनां आश्रयभूतं आतुरंक्षुत्पिपासादिकातरं बाहुल्येन राजसंनश्वरं इति ॥ ७६ ॥ ७७ ॥ त्यक्तुर्वैरूप्यात् दृष्टान्तद्वयंदर्शयितुमाह **नदीकूलमिति** । यस्तावदात्मज्ञानाभ्यासनिष्ठोन चात्मतत्त्वतः कर्मक्षयात्परतन्त्रंशरीरपातंनदीकूलवृक्षवदपेक्षेत यः पुनरधिगतविविक्तात्मज्योतिः सबुद्धिपूर्वकमपि शकुनिभिरिव वृक्षमुत्क्रान्तिंसमवलंबनेन देहं त्यजेत् । एवमिदंशरीरंत्यजन् दुःखमूलाज्जलचरप्राणिभेदादिव संसाराद्विमुच्यते । आत्मज्ञानाभ्यासनिष्ठस्य सत्यप्यन्तरा कथंचित् शरीरपाते शरीरान्तरेणावशिष्टात्मज्ञानपरिपूरणे सति अपवर्गोऽवश्यंभवतीति योगविदांदर्शनमतस्तंप्रत्यपि तथा त्यजन्निमंदेहंकुच्छ्राद्ग्राहाद्विमुच्यते इत्येतत् घटते ॥ ७८ ॥ **प्रियेष्विति** । स्वधर्माविरोधिप्रियेषु केनचित्कृतेषु न प्राग्जन्मार्जितसुकृतमन्तरेण कस्यचित् घटते । तेनायंपुरुषोमम प्रियकर्ता अपित्वात्मकृतसुकृतमित्येवंध्यानाभ्यासेनात्मीयमेवसुकृतंकर्तृत्वेनारोप्य एवमप्रियेष्वपि केनचित्कृतेष्वात्मीयमेव प्राग्जन्मार्जितदुष्कृतंकारणत्वेन प्रकल्प्य तत्संपादयितारंपुरुषंप्रतिरागद्वेषाभावान्नित्यंब्रह्माभ्येति तादात्म्यमुपगच्छति ॥ ७९ ॥ **यदेति** । यदा पारमार्थिकेन चेतोधर्मेण सर्ववस्तुषु विगताभिलाषोभवति तदा देहपातादूर्ध्वं इहलोके शतमस्वंप्रमीतश्चापवर्गसुखनित्यंप्राप्नोति ॥ ८० ॥ **अनेनेति** । अनेन विधिना संसारस्वरूपनिरूपणात्मकेन शनैःशनैः सर्वान्विषयसंपर्कांस्त्यक्त्वा ततः सर्वद्वन्द्वैः क्षुत्सौहित्यादिभिर्विनिर्मुक्तः सिद्धरूपे ब्रह्मण्यवतिष्ठते ॥ ८१ ॥ **ध्यानिकमिति** । यदेतच्छास्त्रमुक्तं एतध्यानिकंध्याने सति परमात्मचिन्तने सतिउत्कृष्टफलंभवति यस्मादात्मस्वरूपविन्नोन भवति सोनुष्ठानफलमपरिपूर्णंप्राप्नोति । यथारहस्यब्राह्मणंयोवा एतदक्षरंगार्ग्यविदित्वास्मिँल्लोके जुहोति तपस्तप्यते यावहूनि वर्षसहस्राण्यन्तवदेवास्य भवतीति ॥ ८२ ॥ **अधियज्ञमिति** । यज्ञमधिकृत्य प्रवृत्तंब्राह्मणाद्यंवेददेवतामधिकृत्य प्रवृत्तंदेवताप्रकाशनपरमग्निर्मूर्धेत्यादिकं आत्मानंचाधिकृत्य प्रवृत्तंपुरुषसूक्तादिकं उपनिषत्सु चोक्तंसर्वकालंजपेत् ॥ ८३ ॥ **इदमिति** । शास्त्रार्थानभिज्ञानांब्रह्मैव वेदाख्यंशरणंगतिः इत्युत्कर्षापकर्षणप्राप्तपरिहारहेतुत्वात् । एवमिदमेवज्ञानवतांस्वर्गापवर्गमिच्छतामिति ॥ ८४ ॥ **अनेनेति** । उक्तेनाश्रमसंबन्धेन योद्विजः प्रव्रज्यामाश्रयति इहैव लोके कल्मषंनिर्दह्य क्षयात्परंब्रह्मरूपंसंपद्यते ॥ ८५ ॥ **एषइति** । एषोऽनन्तरोक्तोयतात्मनांसंबन्धी धर्मोयुष्माकमुक्तइदानींवेदोदिताग्निहोत्रादिकर्मपरित्यागिनामेतानेकैमहायज्ञानित्यादिप्रकारेण ज्ञानबलादग्निहोत्रादि कर्म संपादिनांकर्मबन्धंशृणुत । न चाग्निहोत्रादीनांश्रुतिचोदितानांस्मृत्या कथंत्यागइतिवाच्यं आत्मज्ञाननिष्ठंप्रति यावज्जीवपुरुषोभावतइत्यादि चतुर्थाध्यायदर्शितश्रुतिप्रकारेणास्याप्यनुष्ठानस्य श्रौतत्वाद्यद्यपि गृहस्थविशेषएव वेदसंन्यासिकस्तथापि प्रव्रज्यावैकल्पिकत्वंसंन्यासिकत्वस्य ज्ञापयितुंप्रव्रजितधर्मसमनन्तरं अभिधानमेवंच गृहस्थवेदत्वेन वेदसंन्यासिकस्य चातुराश्रम्यान्तर्भावादाश्रमाणांचतुर्णांद्विसमुच्चयविकल्पबाधापक्षान् दर्शयितुं तावदिदमाह ॥ ८६ ॥ **ब्रह्मचारीति** ।

यएते ब्रह्मचर्यादयआश्रमिणः पृथगुक्ताएते गृहस्थजन्याः एवंच गृहस्थव्यतिरिक्ताश्रमिभिः शास्त्रव्यतिक्रमेण ज्ञातानांनास्तिहस्तचर्याद्याश्रमाधिकारः ॥ ८७ ॥ **सर्वेपीति** । सर्वेपि चत्वारोप्यपि शब्दाच्चयोद्वावेकएव इत्येतदुक्तशास्त्रानतिक्रमेणानुष्ठिताः सन्तोयथोक्तानुष्ठातारंविप्रंब्रह्मप्राप्तिलक्षणांगतिंप्रापयन्ति । समुच्चयविकल्पपक्षाणांब्रह्मचर्यपरिसक्तइत्यादिश्रुतिमूलंदर्शितम् । बाधापक्षेपि जरामर्यंवा एतत्सत्रंयदग्निहोत्रंजुहोति यद्दर्शपूर्णमासाभ्यांयजतइत्यादि श्रुतिमूलत्वं एवंच समुच्चयविकल्पबाधापक्षाणांसर्वेषांश्रुतिमूलत्वाद्यथारुच्यन्यतमपक्षानुष्ठानंनैष्ठिकत्वस्यापि श्रुतिमूलत्वंदर्शितम् । एवंच यत्कैश्चिन्नैष्ठिकत्वादीनांस्मार्तत्वाद्गार्हस्थ्येन श्रौतेन बाधोगार्हस्थ्येप्यनधिकृतं अन्धादिविषयताचेत्युक्तंतदसत् सर्वेषांप्रत्यक्षश्रुतिमूलत्वस्य दर्शितत्वात् ॥ ८८ ॥ **सर्वेषामिति** । सर्वेषामेव ब्रह्मचर्यादीनांमध्यात् गृहस्थबाहुल्येन साक्षाद्वेदवाक्यैः कर्मविधानाद्गृहस्थः श्रेष्ठइति मन्वादिभिरुच्यते । सच यस्मात् ब्रह्मचारितापसयतीन् भिक्षादिनाभिपोषयति । यथोक्तं ज्ञानेनान्नेन चान्वहंगृहस्थैरेव धार्यन्ते इति तस्मादसौ श्रेष्ठः ॥ ८९ ॥ **यथेति** । यथागङ्गाशोणाद्याः सर्वे नदीनदाः समुद्रेऽवस्थानंप्राप्नुवन्ति । एवंसर्वएवब्रह्मचार्यादयः आश्रमिणो अन्नादिलाभार्थं गृहस्थविषयेऽवस्थितिंप्राप्नुवन्ति ॥ ९० ॥ **चतुर्भिरेवमप्येतैरिति** । एतैश्चतुर्भिर्ब्रह्मचार्यादिभिः आश्रमिभिर्द्विजैर्वक्ष्यमाणदशकारणिकोधर्मोयत्नेनाभ्यसनीयः ॥ ९१ ॥ **धृतिरिति** । संतोषोपराधसहनंशीतातपादिद्वंद्वसहिष्णुता परद्रव्याग्रहणंमृद्वार्यादिशुद्धिर्जितेन्द्रियतानुपहताबुद्धिरात्मज्ञानंयथोपलब्धाभिधानंक्रोधानुत्पत्तिरित्येतत् दशपरिमाणंधर्मलक्षणंसर्वमेतदिह शास्त्रविक्षिप्तमुक्तमपि प्रायशएतावन्मात्रत्वाद्धर्मस्येह पुनरुच्यते । संक्षेपतोसंमीहेनावबोधार्थम् ॥ ९२ ॥ **दशलक्षणानीति** । ये ब्राह्मणाएतानि दशलक्षणानि पठन्ति पठित्वा चानुतिष्ठन्ति ते उत्कृष्टंस्थानंब्रह्मलोकंवाज्ञाने सति मोक्षंप्राप्नुवन्ति ॥ ९३ ॥ **दशलक्षणिकमिति** । एवंदशलक्षणिकमुक्तंधर्मसंयतमनाआचरन्नुपनिषदः सम्यक् ज्ञात्वा त्रिभिर्ऋणैर्ऋणवानित्याद्युपाकृतर्णत्रयोद्विजउक्तंवेदसंन्यासित्वमनुतिष्ठेत् ॥ ९४ ॥ **संन्यस्येति** । सर्वाण्यग्निहोत्रादिकर्माणि परित्यज्य ज्ञानेनैवापरेविप्राइत्येवमादिप्रकारेण ज्ञानबलात्तान्यनुतिष्ठन्नबुद्धिपूर्वासंचितपापान्युत्तरश्लोके वक्ष्यमाणत्वात् संन्यासेनैव संहरन् गृहीतनिश्चयोवेदग्रन्थतोर्थतश्चाभ्यस्यन् पुत्रगतसमृद्ध्यपेतेन पुत्रोपकृतग्रासाच्छादनवृत्तित्वात् सुखंवसेत् ॥ ९५ ॥ **एवमिति** । एवमुक्तनीत्या कर्माणि अग्निहोत्रादीनि परित्यज्यात्मज्ञानाख्यस्वकार्यप्रधानोविगताभिलाषकः संन्यासेनासंचेतितोत्पन्नंपापंनिर्दत्य ब्रह्मलोकंज्ञाने वा सति मोक्षंप्राप्नोति ॥ ९६ ॥ **एषइति** । एषब्रह्मचारिगृहस्थवानप्रस्थप्रव्रजितानुष्ठेयरूपश्चतुःप्रकारोब्राह्मणसंबन्धी पुण्यहेतुत्वात्पुण्योब्रह्मलोकापवर्गफलत्वात् परलोकेऽक्षयफलोधर्मोयुष्माकमुक्तः एवंचास्माद्ब्राह्मणग्रहणात् ब्राह्मणः प्रव्रजेद्गृहादिति चास्माद्ब्राह्मणाःप्रव्रजन्तीति श्रुतेर्ब्राह्मणस्यैव प्रव्रज्याधिकारोन द्विजातिमात्रस्येत्यवसीयते । इदानींराजसंबन्धिनंधर्मंशृणुत ॥ ९७ ॥

इतिश्रीभट्टमाधवात्मजगोविंदराजविरचितायांमनुटीकायांयतिधर्मःषष्ठोध्यायः ॥ ६ ॥

---

# ॥ अथसप्तमोऽध्यायः ॥



ॐनमःशिवाय ॥ ॥ राजधर्मानिति । नृपतिना यथाचारेण भवितव्यं वीक्ष्यदृष्टादृष्टार्थानुकर्तव्यानुकथयिष्यामि । तथा येन प्रकारेण राज्ञउत्पत्तिर्यथा च प्रकृष्टा दृष्टादृष्टार्थफलसंपत्तिस्तद्वक्ष्यामि ॥ १ ॥ ब्राह्मयमिति । वेदाधिगमार्थमुपनयनाख्यं स्नानपर्यन्तं यथाशास्त्रंसंस्कारमाप्तवता क्षत्रियेण सर्वस्यास्य जगतःशास्त्रमर्यादानतिक्रमेणनियमतोरक्षणंकर्तव्यम् । वृत्त्यर्थत्वेपि तपःक्षत्रस्यरक्षणमित्यदृष्टार्थत्वेनापि रक्षणोपदेशात् ॥ २ ॥ अराजकइति । यस्मात्पूर्वमविद्यमानराजके अस्मिन्जगति भयेन समंतात्प्रचलति सति अस्य जगतोरक्षार्थंहिरण्यगर्भोराजानंसृष्टवान् तस्मात्तेनरक्षणंकर्तव्यम् ॥ ३ ॥ कथमसृजदित्याह इन्द्रानिलयमार्काणामिति । इन्द्रवायुयमादित्याग्निवरुणचन्द्रवैश्रवणानांसंबन्धिनोंशान्सारभूतान्निष्कृष्य राजानमसृजत् ॥ ४ ॥ यस्मादिति । तेषामिन्द्रादीनांदेवेश्वराणां संबन्धिभ्यः अंशेभ्योयस्मान्नृपतिःकृतः तस्मादेषप्राणिनोवीर्येणाधरीकरोति ॥ ५ ॥ तपतीति । एषचराजापश्यतांस्ववीर्येण चक्षूंषिमनांसिच आदित्यवत्सन्तापयति न चैनंराजानं वीर्यणातिशययोगात्कश्चिदपि पृथिव्यामाभिमुख्येन वीक्षितुंशक्नोति । एवंचेन्द्रांशांशोद्भवत्वात्कथनार्थम् ॥ ६ ॥ सइति । प्रतापयुक्तस्तेजस्वीत्यादिवक्ष्यमाणात् । आदित्यतुल्यव्यापारकरणादसावलौकिकशक्तियोगेन तासु क्रियासु राजाग्निवाय्वादित्यचन्द्रयमवैश्रवणवरुणेन्द्रतुल्योभवति ॥ ७ ॥ बालोपीति । भूपतिर्बालोपि मनुष्यबुद्ध्या नावज्ञेयोयस्माद्देवांशोद्भवत्वान्माहत्येषा देवता मनुष्यरूपेणास्ते ॥ ८ ॥ एकमिति । अग्निरनुपायसेविनंमनुष्यमेकमेवदहति । राजाग्निःपुनःपशुधनसमूहसहितं अपराधिसंबन्धिबन्धुवर्गमपि नाशयति । तस्मादसौ नावमंतव्योराजाग्निरिव विनाशकत्वान्नचस्नेहातिशयातिदर्शनेन तंप्रत्याश्वसनीयंयस्मात् ॥९॥ कार्यमिति । सराजा प्रयोजनंपर्यालोच्यात्मशक्तिंदेशकालौच स्नेहवैरकरणोचितैः सम्यगवेक्ष्य शास्त्रव्यवस्थासिद्ध्यर्थं मित्रशत्रुमध्यस्थतया मुहुर्मुहुर्नानाविधरूपंकुरुते ॥ १० ॥ यस्येति । यस्मादसावश्यायांशोद्भवत्वादश्यादिसर्वतेजोयुक्तस्तस्मात्तद्रतायांप्रसन्नतायांमहतीश्रीर्वसति ॥ एवंचश्रीकामेनासौ आराधनीयोवीर्ये तदीये शत्रुपराजयआस्ते । अतःशत्रुविनाशकामेनाप्यसावेव परिचरणीयः । क्रोधे च तद्गते मृत्युस्तिष्ठति तस्मान्नकदाचिदसौ कोपनीयः ॥ ११ ॥ तमिति । योमनुष्यस्तद्वीर्यातिशयानभिज्ञतया तस्य प्रतिपक्षीभवति सनिःसंशयंविनश्यति । यस्मात्तस्य समनन्तरं विनाशार्थं राजा मनःसंकल्पयति ॥ १२ ॥ यतएवं तस्माद्धर्मंयमिष्टेषुवर्तयेत्तंनराधिपइति । तस्मान्नरेश्वरआत्मवल्लभेषु शास्त्राविरुद्धार्यादृष्टार्थायांव्यवस्थामिष्टानामेषांवर्तितव्यं इतिनिश्चिनुयात् । एवमप्रियेष्वपि यच्छास्त्राविरुद्धंबहिष्करणीयादौश्चेतांव्यवस्थांनातिक्रमेत् ॥ १३ ॥ तदर्थमिति । राज्ञःप्रजापालनाख्यप्रयोजनसिद्ध्यर्थंसर्वप्राणिनांचरक्षितारं चौराद्युपद्रवसंरक्षणेन च सम्यक्धर्मघटनाद्धर्मं स्वशरीराच्चोद्धृतं ब्राह्मणस्य यत्तेजस्तेनर्निर्मितंदमनाद्दण्डं पूर्वंप्रजापतिःसृष्टवांस्तंविनाराजत्वानुपपत्तेः ॥ १४ ॥ तस्येति । अन्तःसंज्ञाभवन्त्येतइति स्थावराणामपिचैतन्यस्योक्तत्वात् छेदनादिदण्डभयेनवृक्षादिस्थावराण्यपि फलपुष्पादिद्वारेणोपभोगार्थंसंपद्यन्तेनियतकालंपुष्पादिदानव्यवस्थांनातिक्रमन्ति किंपुनर्जङ्गमानि ॥ १५ ॥ तस्मात् तमिति । तं दण्डं ग्राम्यारण्यादिदिवानक्तापराधकत्वाद्राजकत्वस्यगतदेशकालौ विचार्य अपराधिसंबन्धिच शरीरधनसामर्थ्यवेदाध्ययनादि सम्यगवेक्ष्य अन्यायकारिषु नरेषु अ-

पराधानुरूपंकुर्वीत इत्यमात्यादिविषयमिदं व्यवहारिणाप्रभवन्तमनुबन्धं परिज्ञायेतिवक्ष्यमाणत्वात् ॥ १६ ॥ सइति। दण्डहेतुतत्त्रद्रोहत्वस्य सदण्डएव राजा सएवमनेनैवन्यायेन सएव पुरुषोपराध्यानेता सएवचनेतादण्डनायकः सेनापत्यादिःसएवचानुशासिता धर्माधिकृतोराजस्थानीयःसएव चतुर्णामपि ब्रह्मचर्याश्रमाणांधर्मानुष्ठानेप्रतिभूरिवानुस्थापकत्वात् स्मृतः ॥ १७ ॥ यतएवंतस्मात् दण्डइति । दण्डभयादेव राजादिशासनंप्रजानांनिवर्तते । अतोदण्डएव सर्वाःप्रजाः कर्तव्याःइति तु स्थापयति न राजाशास्त्रंवा दण्डएवचासाधुभ्यःसाधूनरक्षति सुप्तेषु चापि रक्षयितृषु दण्ड एव जागर्ति तद्भयादेव चौरादीनां अप्रवृत्तेर्दण्डएवधर्मविद्वांसोमन्यन्ते ऐहिकामुत्रिकदण्डभयाद्धर्मप्रवृत्तेः ॥ १८ ॥ समीक्ष्येति । सदण्डोदेशकालादि विचार्य सम्यक् लोभादिपरित्यागेन कृतः सर्वाः प्रजाः सानुरागाः करोति। अविचार्य पुनः कृतोदृष्टादृष्टेभ्यः कर्तारंनाशयति ॥ १९ ॥ यदीति । यदि राजाऽनलसोभूत्वा दण्डार्हेषु दण्डं न कुर्यात् यथा शूल्यामत्स्यानिषादादिभिर्निर्भयैः शूले पचन्ते एवंबलातिशययुक्तादुर्बलान्पचेयुः ॥ २० ॥ अद्यादिति । यदि दण्डोनाभविष्यत्तदा देवेभ्यः दत्तं अत्यन्तापसदः काकोपि पुरोडाशाख्यंहविरात्स्यत् तथात्यन्ताधमश्वापि यवाग्वादि हविरलेक्ष्यन्नच कस्यचित्कस्मिंश्चित्स्वामित्वंभवेत् । ब्राह्मणक्षत्रियादीनांचोत्कर्षापकर्षवैपरीत्यंप्रवर्तेत ॥ २१ ॥ सर्वइति । सर्वः कश्चिल्लोकोदण्डेन सन्मार्गे स्थाप्यते तस्मान्निसर्गशुद्धोनरः कृच्छ्रेण लभ्यते तथा सर्वमिदंजगद्दण्डभयादवश्यकर्तव्योपकाराय प्रवर्तते ॥ २२ ॥ देवदानवरक्षांसिगन्धर्वाइति । देवादयः प्रथमाध्यायोक्तभेदाः पतङ्गाः पक्षिणः उरगाःसर्पाये तेपि सकलजगदुत्पत्त्यनुशासनकारणरूपेश्वरसंबन्धिभयपीडिताः सन्तोवर्षदानाद्युपकारंच दानवादयोन कुर्वन्ति । तथाचाथर्वश्रुतिः॥ भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमइति ॥ २३ ॥ दुष्येयुरिति। दण्डस्याकारणादन्यायेन च करणात् सर्वे ब्राह्मणादयोवर्णाइतरेतरस्त्रीगमनेन संकीर्येरन् सर्वाश्च धर्मार्थकाममोक्षार्थाः शास्त्रमर्यादाउत्सीदेयुः । एवंचाग्नौ प्रास्तेत्यादि परस्परोपकाराय प्रवर्तते ॥ २४ ॥ यत्रेति । यत्र राष्ट्रे श्यामवर्णोलोहितनेत्रइत्थंभूतः शास्त्रप्रमाणकाधिष्ठातृदेवतारूपोदण्डः पापकृन्नाशयिता विचरति तत्रप्रजान व्याकुलीभवन्ति यदि दण्डप्रणयनकर्ता राजादिः सम्यग्विचारयति॥२५॥ तस्याहुरिति । तस्यदण्डस्य कर्तारंक्षत्रियमभिषेकादियुक्तंयथोपलब्धाभिधायिनंविमृश्यकारिणमूहापोहसमर्थप्राज्ञोपेतंधर्मार्थकामानामितरेतरानुष्ठानकुशलंमन्वादयआहुः ॥ २६ ॥ तमिति । तंदण्डंराजा सम्यक्कुर्वन् धर्मार्थकामैर्वृद्धिमेति । यः पुनः रागप्रधानः क्रोधनः छलोद्वेषी राजानसम्यक्कृतेन दण्डेनैवात्यन्तकोपादधर्माद्वा विनश्यते ॥ २७ ॥ दण्डइति । यतोयत्तत्सुमहत्तेजः सदण्डः सहजादेवाविनयशून्यात्मभिश्च दुःखेन कर्तुंशक्यते । न्यायवर्तिनंराजानमेव पुत्रादिबान्धवसहितंविनाशयति ॥ २८ ॥ ततइति । सबन्धुनृपतिनाशानन्तरंसदण्डोवक्ष्यमाणंधनदुर्गादि दुर्गराष्ट्रंचदेशंपृथिवीलोकंजङ्गमस्थावरसहितमितःप्रदानजीविनोदेवाइत्यतस्तदभावादन्तरिक्षगतान् ऋषींश्च देवांश्च पीडयेत् ॥ २९ ॥ सोऽसहायेनमूर्खेणेति । सदण्डोऽविषमानमन्त्र्यादिसहायेन मूर्खेण लोभवता शास्त्रसंस्कारशून्याकृतबुद्धिना द्यूतादिविषयसक्तेन राज्ञा शास्त्रमर्यादया कर्तुमशक्यः ॥ ३० ॥ शुचिनेति । अर्थादिशौचयुक्तेन जितेन्द्रियत्वात्सत्यप्रतिज्ञेन शास्त्रानतिक्रमवर्तिना सहायेन प्रज्ञावतेत्येवंपूर्वोक्तदोषप्रतिपक्षभूतगुणयुक्तेनराज्ञा सम्यक्दण्डःकर्तुंशक्यते ॥ ३१ ॥ स्वराष्ट्रेन्यायवृत्तिरिति । आःमराष्ट्रे शास्त्रमर्यादया वर्तेत । शत्रुविषये पुनस्तीक्ष्णदण्डोभवेत् । स्निग्धेषु च मित्रेषु कार्यमित्रेषु अकुटिलः स्यात् ब्राह्म-

णेषु बुद्धिपूर्वेचाल्पंतदपराधंकृतवत्सु क्षमायुक्तः स्यात् ॥ ३२ ॥ एवमिति । एवमाचारस्य राज्ञोऽयंतत्क्षीणको-शस्यापि जलेतैलबिंदुसेकाद्वा लोके ख्यातिःविस्तरमेति ॥ ३३ ॥ अतइति । एतस्मादाचाराद्विपरीतादाचारतोरा-ज्ञोजितेन्द्रियस्य घृतबिन्दुरिवोदकख्यातिःसंकोचमुपयाति ॥ ३४ ॥ स्वेस्वइति । क्रमेण स्वधर्मरतानांसर्वेषांब्रा-ह्मणादीनांवर्णानांब्रह्मचर्यादीनांचाश्रमाणांब्रह्मणा राजा रक्षिता सृष्टः । उत्तरविवक्षार्थमुक्तवान् ॥ ३५ ॥ तेनेति । तेन राज्ञा प्रजापालयता अमात्यसहितेनयत्कर्तव्यंतत्कृत्स्नंक्रमेण युष्माकमहंकथयिष्यामि ॥ ३६ ॥ ब्राह्मणानिति । अहरहः प्रातरुत्थाय ब्राह्मणानृग्यजुःसामाख्यविद्यात्रयग्रन्थार्थपारगान्विदुषोवक्ष्यमाणान्वीक्षिकी-दण्डनीत्यभिज्ञान् सेवेत तदाज्ञांचानुतिष्ठेत् ॥ ३७ ॥ वृद्धानिति । तांश्च विप्रान् वयोवृद्धान् वेदज्ञानार्थादिशुद्धान् विश्वसनीयत्वोत्पादनार्थमपि नित्यंसेवेत । यस्माद्वृद्धसेवी यः सोऽत्यन्ताविश्वासिभीराक्षसैरपि पूज्यते तेषामपि विश्वसनीयोभवति किंपुनर्मनुष्याणाम् ॥ ३८ ॥ तेभ्यइति । यद्यप्यशक्यशास्त्राभिज्ञतया सहजप्रज्ञया वा-तिविनीतोभवति तथाप्यतिशयार्थंतेभ्योब्राह्मणेभ्योनीतिमार्गंनित्यंशिक्षेत यस्मान्नीतिप्रधानोराजा न कदाचिदपि नश्येत् ॥ ३९ ॥ बहवइति । बहवोराजानोहस्त्यश्वकोशादिपरिच्छदयुक्तापि अविनीततया नष्टाः अन्ये पुनर्वनवासिनोऽपरिच्छदापि विनयत्वेन राज्यानि प्राप्तवन्तः ॥ ४० ॥ तथा च वेन-इति । वेनोनहुषश्चापिपिजवनस्य च पुत्रः सुदानामसुमुखोनिमिश्चाविनयान्नष्टाः ॥ ४१ ॥ पृथुरिति । पृथुमनू विनीततया राज्यंप्राप्तवन्तौ । वैश्रवणश्च विनये सति धनैश्वर्यंप्राप्तवान् । गाधिपुत्रश्च विश्वा-मित्रः क्षत्रियः सन् तेनैव शरीरेणात्यन्तदुष्प्रापंब्राह्मण्यंविनययोगात्प्राप्तवान् तस्माद्वृद्धेभ्योविनयमधिगच्छेत् ॥ ४२ ॥ त्रैविद्येभ्यइति । ऋग्यजुःसामाख्यविद्यात्रयाध्यायिभ्यऋग्यजुःसामाख्यांत्रयींविद्यां अभ्यसेत । नतुशि-क्षयेत् । समावृत्तस्य राज्याधिकारात् ब्रह्मचर्यावस्थायामेवाधिगच्छेत् । दण्डनीतिंचार्थशास्त्रमर्थयोगक्षेमोपयो-गिनींशाश्वतीमनादिपारंपर्यायातां तेभ्यएवशिक्षेत । तथातर्कविद्यांचाध्यात्मिकांसांख्यादिविद्यांपरमण्डलदूतोक्तिपंक्त्या-द्युपयोगिनीं अभ्युदयव्यसनकालेषुच हर्षाविषादानुत्पादकारिणींशिक्षेत । तथा क्षत्रियऋषिवणिज्यादिपशुपाल-नादिवार्तां तान्निमित्तारंभानप्रवृत्तीर्धनोपचयाहेतून् लोकतस्तद्विधेभ्यःकार्षकादिभ्यःशिक्षेत् ॥ ४३ ॥ इन्द्रियाणा-मिति । चक्षुरादीनामिन्द्रियाणां विषयशक्तिपरिहारे नित्यकालमभियोगंकुर्यात् । सजितेन्द्रियःप्रजावशीकर्तुं शक्नोति ॥ ४४ ॥ दशेति । दशकामोद्भवानिवक्ष्यमाणानि नित्यव्यसनानि क्रोधजानि चाष्टौ दुःखावसानानि यत्नतःपरिह-रेत् ॥ ४५ ॥ कामजेष्विति । यस्मात्कामोद्भवेषु व्यसनेषु राजाप्रसक्तोधर्मार्थहानिंप्राप्नोति । क्रोधजेषु च सक्तःसर्वद्वेष्य-त्वात्प्रकृतिकोपेसति प्राणैर्वियुज्यते ॥ ४६ ॥ मृगयेति । आखेटकार्थंमृगवधाक्षादिक्रीडासकलमपिविग्रहेतुभूतोदि-वास्वमःपरदोषवचनंस्त्रियोमदोमद्यपानकृतःतूर्यत्रिकोनृत्यगीतवादित्राणि अनिमित्तमश्वानुगमनमित्येषदशपरिमाणोव्यसनव-र्गोऽभिलाषविशेषाज्जायते ॥ ४७ ॥ पैशून्यमिति । पैशून्यं अविज्ञातदोषाविष्करणम् । साहसंसाधोर्निकृष्टकर्मवि-नियोगोबन्धनंवा । द्रोहश्छद्मवधः । ईर्ष्या परस्यात्मनासहगुणसामान्याक्षमणम् । असूया परगुणस्तवामर्षणम् । अर्थदूषणंप्राप्तानां अर्थानामदानंअपहारोवा । वाक्पारुष्यमाक्रोशादि दण्डपारुष्यंताडनादि । इतिअष्टपरिमाणोव्यसन-संघःक्रोधाज्जायते ॥ ४८ ॥ द्वयोरिति । द्वयोरप्येतयोःकामःक्रोधव्यसनवर्गयोःस्वयंकारणभूतंसर्वेस्मृत्युपनिबन्ध-ग्रन्थकाराजन्यन्ते । तंलोभंयत्नतःपरिहरेत् । यस्मादेतत्समुद्भवमेततगुणद्वयंसर्वेषांलोभोमूलंकश्चिद्धनलिप्सया कश्चिच्छ-रीरसुखलोभेन प्रवृत्तेः ॥ ४९ ॥ पानमिति । मद्यपर्यन्तंपानमक्षक्रीडास्त्रीसंप्रयोगोमृगयाचेत्येतत्क्रमपठितं कामजगणमध्याधी-

नेषुव्यसनेषु चतुष्कमतिशयेन दुःखहेतुंबहुतरदुःखहेतुत्वाज्जानीयात् ॥ ५० ॥ दण्डस्येति । वाक्पारुष्यदण्डपारुष्यार्थदूषणात्मकं त्रिकं क्रोधजव्यसनगणमध्याद्दोषभूयस्त्वेसतिसर्वदादोषहेतुंबुध्येत ॥ ५१ ॥ सप्तकस्यास्येति । अस्य पानदण्डपातनादेःकामक्रोधोद्भवस्य सप्तपरिमाणगतस्य व्यसनगणस्य सर्वस्मिन्नेव राजमण्डले प्रायेणावस्थितस्य यद्यत्पूर्वपठितंव्यसनंतत्तत्परस्माद्दुष्टतरंप्रशस्तात्माजानीयात् । द्यूतात्पानंदुष्टतरं तत्रहिसंज्ञाप्रणाशादयोनीतिशास्त्रोक्तादोषाः द्यूतेषु पाक्षिकीधनाप्तिरपिभवति । स्त्रीव्यसनात् द्यूतंदुष्टतरं तत्रहिवैरोद्भवादयोनीतिशास्त्रोक्तादोषाःस्त्रीव्यसने पुनरपत्योत्पादिगुणयोगोत्पत्तिः । मृगयायाश्चस्त्रीव्यसनंदोषवत् तत्रहिकार्यान्तरादर्शनादयोनीतिशास्त्रोक्तादोषाः । मृगयायांपुनर्व्यायामादिनागुणयोगोपिभवति । एवंकामजचतुष्कस्य पूर्वपूर्वपापीयः । क्रोधजानामपि वाक्पारुष्याद्दण्डपारुष्यंदुष्टं अङ्गच्छेदादिना अशक्यप्रतीकारत्वात् । वाक्यारुष्येपुनर्दानसन्मानादिना अतिप्रतिसंधानम् । अर्थदूषणाद्वाक्पारुष्यदुष्टतरम् । अरुंतुदाक्रोशसन्तापोपशमनस्यदुःसहत्वात् । अर्थदूषणंपुनःप्रचुरतरार्थदानेन परिहर्तुंपार्यते । एवंक्रोधजत्रिकस्यापि पूर्वपूर्वपापीयोऽतश्चयद्यद्दुष्टतरं तत्तद्व्यसनंपरिहरेत् ॥ ५२ ॥ व्यसनस्येति । मृत्युव्यसनयोर्मध्ये व्यसनंदुष्टतरंयस्माद्व्यसनी यावद्दीर्घकालंजीवति तावत्तावच्छास्त्रार्थातिक्रमाधिक्यादधिकतरंनरकंगच्छति । अव्यसनी पुनर्मृतः शास्त्रानुष्ठानात् स्वर्गंव्रजति ॥ ५३ ॥ मौलानिति । पित्राद्यन्वयायातान् स्नेहातिशयेनाव्यभिचारार्थंदृष्टादृष्टार्थशास्त्रज्ञान् दृष्टादृष्टमर्यादानुलङ्घनार्थविक्रान्तान् शरीरानपेक्षप्रभुवृत्त्यर्थं पुनःकृतराजकार्यानसंमोहेन कर्मसंपत्त्यर्थं । कुलीनान् कुलाभिमानिन अव्यभिचारार्थं । धर्मार्थकामभयविषये चारप्रयोगादिद्वारेण कृतपरीक्षान् शुद्धान् सप्त चाष्टौ वामात्यान्सहायभूतान् मन्त्रादेः कुर्वीत ॥ ५४ ॥ यस्मादपीति । विशेषतोऽसहायेनकिमुराज्यंमहोदयम् ॥ यदपि कर्म कर्तुंशक्यते तदप्येकस्य दुःसाध्यंभवति विशेषेण राज्यंयन्महाफलंतत्कथमसहायेन कर्तुंशक्यते ॥ ५५ ॥ तैरिति । तैः सचिवैः सह सर्वदा यच्चातिरहस्यंसन्धिविग्रहादि वक्ष्यमाणंतद्विचारयेत् । तथा तिष्ठत्यनेनेतिस्थानंदण्डकोशपरराष्ट्राख्यंचिन्तयेत् । तत्रदण्डो हस्त्यश्वरथपदात्यात्मकस्तस्यपोषणादिचिन्त्यम् । कोशोर्थनिचयस्तस्य व्ययादिचिन्त्यम् । पुरस्य तस्यायुधसंपन्नमिति वक्ष्यति । राष्ट्रंदेशस्तस्य च राष्ट्रीयजनपश्वादिरणाक्षमत्वादिचिन्त्यम् । तथा समुद्यंत्युत्पद्यन्तेऽस्मादर्थाइति समुदयः कृष्यादिधान्यहिरण्यादिस्थानंतच्चिन्तयेत् । गुप्तिरक्षामात्मगतांसुपरीक्षितमन्नाद्यमद्यात्। परीक्षिताः स्त्रियश्चैनमित्यादिना वक्ष्यति राष्ट्रगतांच राष्ट्रस्य संग्रहे नित्यमित्यादिनाभिधास्यति लब्धप्रशमनानि च जित्वा संपूजयेद्देवानिति वक्ष्यति ॥ ५६ ॥ तेषामिति । तेषांसचिवानांरहःप्रगल्भतरसंभवात् पृथक्पृथक्स्वंस्वंमतंकार्येषु विज्ञाय पर्षत्प्रगल्भसंभवाच्च समस्तानामपि युगपदभिप्रायंबुध्द्वा यदात्मनेहितं तत्कुर्यात् ॥ ५७ ॥ सर्वेषामिति । एषामेव सर्वेषांमध्यादन्यतमेन गुणातिशयवता अत्यन्तविदुषा ब्राह्मणेन सहसन्धिविग्रहादिवक्ष्यमाणगुणषट्कयुक्तंप्रकृष्टमन्त्रंराजा विचारयेत् ॥ ५८ ॥ नित्यमिति । तस्मिन् ब्राह्मणे सम्यक् निर्विशङ्कः संजातविश्वासोभूत्वा सर्वदा सर्वकार्याणि समर्पयेत् । यद्यपि चात्मना कुर्यात्तदपि तेन सह निश्चयीकृत्य ततोऽनुतिष्ठेत् ॥ ५९ ॥ अन्यानिति । अन्यानपि भृत्यानर्थादिशुद्धान् प्रज्ञावतःस्थिरान् चारादिद्वारेण कृतार्थादिशुद्धिपरीक्षानाकरस्थानेभ्यः सम्यगर्थोत्पादनशीलानर्थाधिगतान्कुर्यात् ॥ ६० ॥ निवर्तेतेति ।

---

( १ ) स्थानं=उत्पत्तिस्थानं ( गो० २,५ )

अस्य राज्ञः कर्मजातंयत्कर्तव्यंतद्यत्सङ्ख्याकैर्मनुष्यैः संपद्यते तत्सङ्ख्याननलसांश्चतुरांस्तत्कर्मज्ञान् कुर्वीत ॥ ६१ ॥ तेषामिति । तेषांमध्ये शूरान् चतुरान् कोशे विनियुञ्जीत खाकरेषु सुवर्णाद्युत्पत्तिस्थानेषु इक्षुधान्यादिपीडनादिस्थानेषु अर्थशौचोपेतान् कुर्वीत । अन्तर्निवेशने च भोजनान्तःपुरादौ भीरून् विनियोजयेत् ॥ ६२ ॥ दूतमिति । दूतंच दृष्टादृष्टार्थशास्त्रार्थपारगमिति तस्याभिप्रायसूचकस्य वाक्यव्यापारविशेषस्याकारस्य चाभिप्रायसूचकस्य शरीरविकारस्य चेष्टायाश्च कवचायुधभोजनात्मिकायाविज्ञातारमर्थस्त्रीशौचादियुक्तंकुलीनंकुर्वीत ॥ ६३ ॥ यस्मात् अनुरक्तइति । अनुरागवानर्थस्त्रीशौचयुक्तोभेद्यर्थपरिहारार्थंचतुरः कालानतिक्रमार्थंस्मरणवान् समयसंदेशार्थंदेशकालज्ञः तदनुरूपे व्यवहारार्थंस्वाकृतिप्रियदर्शनेन्मदेयवाक्यतत्वार्थंचतुरोयोवाग्मी पुरुषसंदेशकथनार्थंसंस्कृतविचित्राभिधायि उक्तिप्रत्युक्तिसामर्थ्यार्थं इत्येवंविधोदूतोराज्ञः प्रकर्षेणेष्यते ॥ ६४ ॥ अमात्यइति । सेनापतौ हस्त्यश्वरथपदात्यात्मके दण्डआयत्तः तदिच्छयातस्योपचयःदण्डेचहस्त्यादिकेनीत्यर्थोव्यापारआयत्तस्तदभावे नीत्यभावात्। राजनि चार्थागारदेशावायत्तौ तदिच्छया वृद्धिक्षयोत्पत्तेः दूते च सन्धिविग्रहावायत्तौ तदिच्छया तत्प्रवृत्तेः ॥ ६५ ॥ दूतइति । दूतस्तत्कुरुतेकर्मभिद्यन्तेयेनबान्धवाः ॥ यस्मादतएव भिन्नानांसम्युत्पादने समर्थः संहतानांच भेदने तथा परराष्ट्रे व्यवहरति येन संहताभिद्यन्ते तस्मात् दूते सन्धिविपर्ययावायत्तौ चेत्येतन्निर्गमार्थमाह ॥ ६६ ॥ सविद्यादिति । सदूतोऽप्रकाशाभिराकारचेष्टाभिरात्मीयाभिः परस्य राज्ञोमुखविकाशवैवर्णाद्याकारंहर्षविषादसूचितंइङ्गितास्वेदवेपथुरोमाञ्चाद्यात्मकं पञ्चसन्धिविग्रहाभिप्रायसूचकंचेष्टांच वाहनायुधसंस्कारोदासीनात्मिकामुत्साहसूचनींजानीयात् । अभिलषितंतुनोपेक्षितमिति जानीयात् कृत्येषु च क्रुद्धलुब्धभीतावमानितेषु तद्भृत्येषु कर्तुमिष्टसंग्रहणम् ॥६७॥ बुद्ध्वेति । परराजसंबन्धि कर्तुमिष्टमशेषपरमार्थतोज्ञात्वा तथा दूतोयतेत यथा स्वामिनाशद्वारेण तस्यात्मनाशोन भवति॥६८॥जाङ्गलंसस्यसंपन्नमार्यप्रायमनाकुलमिति । अल्पोदकतृणोयस्तु प्रवातः प्रचुरातपः ज्ञेयः सजङ्गालोदेशइतितथाविधंदेशंप्रचुरधान्यादिकं बहुधार्मिकजनं रोगमशकाद्युपद्रवानाकुलं फलकुसुमोद्यानादियुतं नचाटविकादिसामन्तनिवासिनं कर्षकादीनांसुखोपजीव्यं आश्रित्य राजानिवासंकुर्यात् ॥ ६९ ॥ धन्वदुर्गमिति । धन्वदुर्गमन्तरुदकं बाह्यतः समन्तात्पञ्चयोजनमात्रमरुभूम्युपेतम् । महीदुर्गं दृढंवप्रोपनिहतं विस्ताराद्विगुणोच्छ्रायद्वादशहस्ताधिकोच्छ्रितोपरियुद्धार्थगवाक्षादिप्राकारोपेतम् । अंबुदुर्गं बाह्यतोऽगाधानाश्रावकोदकपरिवृतम् । वृक्षदुर्गं बहिःसमंतात् ततोयोजनमात्रंव्याप्यास्ति संहतमहावृक्षोपेतम् । मनुष्यदुर्गंसमन्ततोऽवस्थापितहस्त्यश्वपादद्युपेतं आयुधाविक्रान्तपुरुषम् । गिरिदुर्गं पर्वतपृष्ठमतिदुरारोहं अतिसंकटैर्वामार्गानुगतम् । अन्तर्नदीप्रस्रवणादि उदकयुक्तइत्येवमेतेषु दुर्गेषु मध्यादन्यतमंदुर्गमाश्रित्य पुरंकुर्यात् ॥ ७० ॥ सर्वेणतुप्रकारेणेति । यतएषांदुर्गाणांमध्यात् गुणभूयस्त्वेन गिरिदुर्गंप्रशस्यते इति गिरिदुर्गंसर्वप्रयत्नेन समाश्रयेत् ॥ ७१ ॥ त्रीण्याद्यान्याश्रितास्त्वेषांमृगगर्ताशयाःपुरेति । एषांदुर्गाणांमध्याद्यानि त्रीणि धन्वमह्यब्दुर्गाणि मृगादयआश्रिताः। तत्र धन्वदुर्गंमृगैराश्रितम्। महीदुर्गंबिलासादैर्नकुलादिभिः। अंबुदुर्गंउदकचारिभिः कूर्मादिभिः उत्तराणि त्रीणिवृक्षनृगिरिदुर्गाणि क्रमेण प्लवङ्गमादयआश्रिताः। तत्रवृक्षदुर्गंवानरैराश्रितं। नृदुर्गंमनुष्यैः। गिरिदुर्गंदेवैः ॥ ७२ ॥ यथेति । यथैतान्मृगादीन् दुर्गवर्तिनोव्याधादयःशत्रवःनार्हंसन्ति अशक्तत्वात् एवंदुर्गाश्रितंराजानंन शत्रवइति ॥ ७३ ॥ एकइति । यस्मादेकोधनुष्कः प्राकारस्थः परकीयानांशतस्य योद्धुंशक्नोति तस्माद्दुर्गकर्तव्यतयोपदिश्यते ॥ ७४ ॥ तस्मादिति । तद्दुर्गंखड्गाद्यायुधधनधान्याश्वादिवाहनब्राह्मणतक्षादिशिल्पियन्त्रयासोदकसमृद्धंकार्यम् ॥ ७५ ॥ तस्येति । तस्य दुर्गस्य मध्ये सुबु

पर्याप्तंपृथगायुधानांशालाद्युपेतंप्राकारपरिखादिरक्षितंसर्वर्तुकंफलपुष्पादियोगेन सर्वै ऋतवोयत्र सुधाधवलितं-दीर्घिकादिजलयुक्तंवृक्षाश्रितंगृहमात्मनः कारयेत् ॥ ७६ ॥ **तदिति** । तद्गृहमधिष्ठाय समानवर्णाप्रशस्त-लेखातिलकादिलक्षणोपेतांमहाकुलीनांमनोरमांरूपाकृतिमाचारादिसंपन्नांभार्या उपयच्छेत् ॥ ७७ ॥ **पुरोहितमिति** । पुरोहितंचाथर्वणविधिज्ञंकुर्वीत । ऋत्विजश्चसूत्रकारोक्तप्रक्रियया वृणुयात् । ते चास्य राज्ञोगृह्योक्तानि श्रौतानि कर्माणि कुर्युः ॥ ७८ ॥ **येजतेति** । राजाश्वमेधपुण्डरीकादीन् नानाप्रकारान् पर्याप्तदक्षिणान् यज्ञान्कुर्यात् । ब्राह्म-णेभ्यःस्वीयान् गृहशय्यादीन् भोगान् धनानि च सुवर्णादीनि धर्मार्थंदद्यादितीदमधिकंराज्ञोयागदानमवश्यकर्तव्यमु-च्यते ॥ ७९ ॥ **सांवत्सरिकमिति** । आप्तैर्हितकारिभिरुक्तगुणैः अमात्यैर्वार्षिकंवक्ष्यमाणंधान्यादिकंराष्ट्रादानायये-त् । शास्त्रप्रधानश्च लोके करशुल्कादिषु स्यात् राष्ट्रीयेषु पितृवत्स्नेहादिना वर्तेत ॥ ८० ॥ **अध्यक्षानिति** । **तस्य-कार्याण्यवेक्षेरन्नृणांकार्याणिकुर्वतां** ॥ तत्रतत्रहस्त्यश्वायुधार्थादिस्थानेष्वधिकृतान्विपश्चितःतत्रतत्कर्मकुशलान्-विविधान्पृथक्पृथक्कुर्यात् । नचास्याक्षतेषुतेषुहस्त्यश्वादिस्थानेषु तदौपयिकानि कार्याणि कुर्वतांमनुष्याणांसर्वाणि-कार्याणिसम्यक्करणार्थमवेक्षेरन् ॥ ८१ ॥ **आवृत्तानामिति** । **नृपाणामक्षयोह्येषनिधिर्ब्राह्मोविधीयते** ॥ यतोगुरुकु-लान्निवृत्तानांब्राह्मणानांनियमतोधनदानेन पूजांच कुर्यात् यस्मात्सोयंनिधिरिवनिधिः ब्रह्मसुनिहितोधनादिषु विनश्वरोराज्ञां-शास्त्रेणोपदिश्यते । ब्राह्मणाख्यजन्मान्तेरपि सुनिहितोभवति ॥८२॥ **नेति** । तंब्राह्मयंविधिन चौरानापिशत्रवोहरन्ति । अन्य-निधिवन्नापि मृत्संयोगादिना नश्यति । तस्माद्योयमक्षयोनिधिर्ब्राह्मणाख्यनिधिर्जन्मान्तरे उत्तमानन्तफलावाप्तये राज्ञा धना-दिर्ब्राह्मणेषु निधातव्यः॥८३॥ **नस्कन्दतइति** । अग्निहोत्राद्याहुतेः किल स्रवणचलननाशाख्यादोषाभवन्ति । अतश्च कर्मवै-गुण्यंयत्पुनरेतद्ब्राह्मणमुखाग्नौ हुतं ब्राह्मणस्य यद्दत्तंतन्न स्रवति न चलति नापि दाहादीना कदाचित् विनश्यति तस्मादेतद्दो-षासंभवाग्निहोत्रादिभ्यः श्रेष्ठमिति प्रकृतदानस्तुतिपरमेतत् ॥८४॥ **सममिति** । **सहस्रगुणमाचार्येअनन्तंवेदपारगे** ॥ ब्राह्मणव्यतिरिक्तविषये उपकारकरणरूपेण यद्दानंन दानप्रतिग्रहरूपेण तत्र तदभावात्तत्समंयस्य देयद्रव्यस्य यत्फलंश्रुतं-तत्ततोनात्युत्कृष्टं इति प्राप्यते । एवंजातिमात्रोपजीविनि ब्राह्मणे पूर्वापेक्षयाद्विगुणंफलमेवंप्रक्रान्ताध्ययने लक्षगुणंफलं समस्तशाखाध्यायिनि अनन्तफलम्॥८५॥**पात्रस्यहिविशेषेणश्रद्दधानस्तथैवच** ॥ **अल्पंवाबहुवाप्रेत्यदानस्यावा-प्यतेफलं**॥अध्ययनंविज्ञानतपोयुक्ततया पात्रतारतम्यमपेक्ष्य श्रद्धातारतम्यंचाल्पंवा बहु चापरलोके वा दानस्य फलं प्रा-प्यते॥ ८६ ॥ **समोत्तमाधमैरिति** । समाधिकहीनबलैः राजभिर्युद्धार्थमाहूतोप्रजारक्षणोद्यतः क्षत्रियेणाहूतेनावश्यंयोद्धव्य-मित्येवंक्षत्रधर्मंसंभावयन् संग्रामान्न निवर्तेत ॥ ८७ ॥ **संग्रामेष्विति** । युद्धेभ्योऽपराङ्मुखत्वंप्रजानांपालनंब्राह्मणानां-परिचर्येत्येतद्राज्ञांप्रकृष्टंस्वर्गादिसाधनम् ॥ ८८ ॥ तथाच **आहवेष्विति** । महीपालाः मिथः स्पर्धमानाः संग्रामेष्वितरे-तरंहन्तुकामाः प्रकृष्टया शक्त्या सम्मुखंयुध्यमानाः स्वर्गंगच्छन्ति ॥८९॥ **नकूटैरिति** । **नकर्णिकैर्नापिदिग्धैर्नाग्निज्व-लिततेजनैः** ॥ संग्रामे युद्धंकुर्वन् कूटशस्त्रादिभिः शत्रून् हन्यमानोपि कृतकर्णाकारफलकैर्नापि विषलिप्तैर्न चाग्निज्वालितफ-लकैः॥९०॥ **नचेति** । युद्धभूमित्यक्त्वा स्थलमारूढंनपुंसकंबद्धाञ्जलिंमुक्तकेशोपविष्टंत्वदीयोहमित्येवंवक्तारं न हन्यात् ॥९१॥ **नसुप्तमिति** । सुप्तंविगतसन्नाहं अपरिधानानायुधप्रधनप्रेक्षकान् अन्यैश्चयुध्यमानान् न हन्यात् ॥ ९२ ॥ **नायु-धव्यसनप्राप्तमिति** । भग्नायुधंहतपुत्रादिकंप्रहारोपेतंभीतंसंग्रामप्रतिनिवृत्तंशिष्टाचारं स्मरन् न हन्यात् ॥ ९३ ॥ यस्त्वि-

ति। योभीतः पराङ्मुखीभूतः संग्रामे शत्रुभिर्हन्यतेऽपि यदि तथापि प्रभोर्यत्किञ्चित्पापंतत्सर्वंप्राप्नोति पापंतस्य भवतीत्येतावदत्र विवक्षितं। अन्यंवा कथयति अपापे प्रभौ पापाभावप्रसङ्गेन च प्रभोरेव तत्प्रायश्चित्तंतेनासौ दुष्कृतात्प्रमुच्यते। भर्तृग्रहणादमात्यस्यापि परावर्तनादिदोषएव नप्रकृतस्येव राज्ञः॥९४॥ यदिति। अस्य च पराङ्मुखहतस्य-यत्किञ्चित्परलोकार्थंसुकृतमर्जितमस्ति तत्सर्वंप्रभोर्भवति॥९५॥ रथाश्वमिति। रथाश्वहस्तिध्वजहिरण्यधान्यपशुदास्यात्मकंसर्वाणि गुडलवणादीनि कुप्यंताम्रलोहादि योयत्परानवजित्य हरति तस्यैव तत् भवति न राज्ञः॥९६॥ राज्ञेचेति। यद्यपि योयज्जयति तस्य तद्युक्तंतथा च यद्यत्तत्र श्रेयस्तत्तत् राज्ञिभृत्यादद्युः। माहेन्द्रमुद्धारमुदहरन्-वृत्रंहत्वेत्येवमादिकात्रवैदिकीश्रुतिः। यच्चाविभागेन जितं तद्राज्ञा सर्वयोधेभ्योदातव्यम्॥९७॥ एषइति। एषोविगर्हितोऽनादिपारंपर्यायातोयोधधर्मउक्तः। ततः संग्रामे शत्रून् हिंसन् क्षत्रियएतंधर्मंन परित्यजेत्॥९८॥ अलब्धमिति। अजितंभूहिरण्यसुवर्णादि जेतुंयत्नंकुर्यात्। जितंच यत्नतोरक्षेत्। रक्षितंचवृद्धिंनयेत्। एवमस्य महाधनत्वात् स्वपरपरिभवोन भवति। वर्धितंच पात्रेभ्योदद्यात्। तथासति परलोकाभ्युदयोऽप्यस्य भवति॥९९॥ एतदिति। एतदर्जनरक्षणवर्धनदानात्मकंचतुःप्रकारं पुरुषकारस्य प्रयोजनंजानीयात्। अतोस्यानलसः सर्वदानुष्ठाने यत्नंकुर्यात्॥१००॥ अलब्धमिति। अनर्जितंहस्त्यश्वरथपदात्यात्मकेन दण्डेन जेतुमिच्छेत्। जितंच शास्त्रदृष्टेन प्रत्यवेक्षणेन रक्षेत्। रक्षितंच वृद्ध्यर्थैरुपायैः स्थलपथादिभिर्वर्धयेत्। वर्धितंच यदधिकंतत्परलोकार्थंपात्रेभ्योदद्यात्॥१०१॥ नित्यमिति। हस्त्यश्वरथपदात्यात्मकोदण्डोनित्यमुद्यतः कृतयुद्धादिशिष्याभ्यासोयस्य सतथा स्यात्। नित्यंच विवृतंप्रकाशीकृतं सीमाट्व्यादि देशोद्यतायुधंस्वल्पदपुरुषमारणेन पौरुषंपराक्रमोयस्य सतथा स्यात्। नित्यंसंवृतंगुप्तंसंवार्यंगोपनीयमन्त्रकृत्योत्थानानि यस्य सतथा स्यात्। सर्वदा च शत्रोर्व्यसनापेक्षणकृत्यदूषणादिना छिद्रान्वेषणपरः स्यात्॥१०२॥ नित्यमुद्यतदण्डस्येति। यस्मान्नित्योद्यतदण्डात्सर्वंजगदुद्विजते तस्मात्सर्वाणि भूतानि दण्डेनैव वशीकुर्यात्॥१०३॥ अमाययेति। बुध्येतारिप्रयुक्तांचनित्यंमायांसुसंवृतः॥ यावच्छत्रूणांप्रकृत्युपजापादि छद्मनाकृतंतावदच्छद्मनैव व्यवहरन्न तु कदाचित्पूर्वंछद्मसमाचरेत्। सुव्यक्तपक्षरक्षश्च भूत्वा शत्रुकृतंप्रकृतिभेदादि छद्म सर्वदा चारादिभिरवेक्षेत॥१०४॥ नारयेति। तथा यतेत यथास्य च्छिद्रंप्रकृतिभेदादि शत्रुर्न जानीते शत्रोः पुनरसौ प्रकृतभेदादि यत्नतोजानीयात्। तथा कूर्मइवावयवानुप्रवेशेन प्रकृत्यादीनि राज्याङ्गानि संग्रामादिना रक्षेत्। कथंचिच्च प्रकृतिभेदादि यदात्मनः छिद्रमुपजातंतत्र यत्नतः समाधानंकुर्यात्॥१०५॥ बकवच्चिन्तयेदर्थान् शशवच्चविनिःपतेत्॥ वृकवच्चावलुम्पेतसिंहवच्चपराक्रमेत्॥ यथा बकोदुर्गाश्रयमतिचरन् स्वभावमपि मत्स्यमांसग्रहणादनिर्विण्णेकाग्रान्तःकरणतया चिन्तयत्येवमतिगुप्ते च रिपौ तद्राष्ट्रसंबन्धादीनर्थान् चिन्तयेत्। यथा शबरगोचरतामुपगतोपि शशोऽतिचलकुटिलगतितया देशान्तरमुपसरत्येवंस्वकलत्रसामन्तप्रकोपोपितिचलरिपुमध्यवर्ती वा कथंचिदरिसंमोहमाधाय ततः प्रदेशाद्गुणवद्राजान्तरसंश्रयार्थं उपसर्पेत। यथा च वृकःकृतरक्षानपि पशूंस्तद्ग्रहणाभियोगेन कथंचित् अनवधाने पाने हिनस्त्येवंदुर्गाश्रव-

(१) अन्यंवा कथयति=अन्यथा कथंचित् (गो० २, ५)

स्थितमपि परंकथंचिदपि तत् प्रमादमासाद्यावलुम्पेत । यथा च गिरिवरशिखराकारमपि करिणं उत्साहशक्तियोगात् सिंहोनिहन्तुमाक्रामत्येवमल्पबलोपि बलवत्तराभिभूतसंश्रयाद्यपायान्तराभावे सकलबलावष्टम्भेन परिहन्तुमाक्रमेत् ॥ १०६ ॥ **एवमिति** । एवमुक्तनीत्या जेतुंप्रवृत्तस्य राज्ञोयेविजयप्रतिकूलाः स्युः तान् सर्वान् सामभेददानदण्डैरुपायैर्वशीकुर्यात् ॥ १०७ ॥ **यदीति** । ते च परिपन्थिनोयद्याद्यैः सामदानभेदैरुपायैः वशंनायान्ति तदा दण्डेनैव देशोपमर्यादादिना हठादेव शनकैर्यादशोदण्डक्रमस्तेन वशंनयेत् ॥ १०८ ॥ **सामादीनामिति** । सामादीनांचतुर्णामप्युपायानांमध्यात्सामदण्डौ राष्ट्रविवृध्यर्थंप्रशस्तौ नित्यंविद्वांसोमन्यन्ते । साम्नि क्षयव्ययायासानामभावाद्दण्डे च युद्धाद्यनर्थोत्पादे चसिध्यतातिशयात् ॥ १०९ ॥ **यथोद्धरतीति** । यथा क्षेत्रस्य कक्षस्योत्पाटयिता कक्षंनाशयति धान्यंच रक्षति एवंनृपोऽनुकूलान् राष्ट्रियान्रक्षेत् प्रतिकूलांश्चहन्यात् ॥ ११० ॥ **मोहादिति** । योराजा हिताऽहिताऽविवेकेन प्रजाःपीडयति सक्षिप्रंप्रकृतिलोपादिना ऽधर्मभूयस्त्वेन राज्याज्जीविताच्च बन्धुसहितोनश्यत्यचिरात् ॥ १११ ॥ **शरीरकर्शनादिति** । यथा प्राणभृतांदीर्घाध्वगमनादिना प्राणाः क्षीयन्ते एव तथा राज्ञामपि राष्ट्रोपपीडनात् प्रकृतिकोपेसति प्राणाः विनाशमुपयान्ति ॥ ११२ ॥ **एवंचैतद्दोषपरिजिहीर्षयाराष्ट्रस्येति** । राष्ट्रसंरक्षणे सर्वदा वक्ष्यमाणमुपायंकुर्यात् । यस्मात्सुसंरक्षितराष्ट्रोराजा यत्नेन वर्धते ॥ ११३ ॥ **द्वयोरिति** । द्वयोर्ग्रामयोर्मध्ये त्रयाणांपञ्चानांबहूनांवा ग्रामशतानांदेशकालाद्यपेक्षया आप्तपुरुषाधिष्ठितंराष्ट्रस्य संग्रहंरक्षाभूतंस्थानकंकुर्यात ग्रामदोषाद्यवबोधार्थं करादिग्रहणार्थं च ॥ ११४ ॥ **ग्रामस्येति** । ग्रामदशग्रामाद्यध्यक्षंकुर्यात् ॥ ११५ ॥ **ग्रामदोषानिति** । **विंशतीशइति** । ग्रामे चौर्यादिदोषानुत्पन्नान् ग्रामाधिपतिराज्ञांप्रतिसंधनाशक्तोनाकुलतया स्वयंदशग्रामाधिपतये कथयेत् । दशाधिपतिर्विंशतिस्वामिने विंशतीशः शतेशाय शतेशोसहस्रेशाय ॥ ११६ ॥ ११७ ॥ **यानीति** । यानि ग्रामावासिभिरन्नपानादीनि येत् सर्वाणि स्वामिने दातव्यानि तानि ग्रामाधिपतिर्गृह्णीयात् ॥ ११८ ॥ **दशीति** । अष्टगवंधर्महलंषड्गवंजीविकार्थिनां ॥ चतुर्गवंगृहस्थानांद्विगवंब्रह्मघातिनामितिहारीतः । षड्गवंमध्यमंहलंतद्विगुणंकुलंमन्यन्ते । तेनमध्यमेन हलद्वयेन यावतीभूर्वाह्यते तत्फलंदशाधिपतिःभृत्यर्थंभुञ्जीत । एवंविंशत्यधिपतिः पञ्चकुलानि शताधिपतिर्मध्यमंग्रामं सहस्राधिपतिर्मध्यमंपुरम् ॥ ११९ ॥ **तेषामिति** । एवंग्रामाधिपतिप्रभृतीनां यानिग्रामनिवासकार्याणि तदशक्यप्रतिसन्धानानि यानिच तेषां संबन्धीनि कृताकृतानि वान्यान्यपि राज्ञानियुक्तोनलसोभूत्वा ऽवेक्षेत ॥ १२० ॥ **नगरइति** । प्रतिनगरं एकैकं उच्चैःस्थानंमहाकुलीनंघोररूपछत्रालङ्कारहस्त्यश्वादिबलसामग्र्या भयानकाकारं मध्ये ग्रहमिव भास्काराकारंनगराधिपतिंकुर्यात् ॥ १२१ ॥ **सइति** । सनागरिकएकग्रामाधिपत्यादीन् बलपूरणाय सति प्रयोजने सर्वदा स्वयंपश्चात् यायात् । तेषांनागरिकपर्यन्तानांराष्ट्रेषु यदाचरितं तद्विषयनियुक्तैः चारैर्यशा तद्राजा अगमयेत् ॥ १२२ ॥ **राज्ञइति** । यस्माद्राज्ञोभृत्यारक्षाधिकृताभृत्यास्ते बाहुल्येन परस्वग्रहणशीलावञ्चकाश्च भवन्ति तस्मात्तेभ्यआत्मीयाःप्रजाराजारक्षेत् ॥ १२४ ॥ **येइति** । ये राजाधिकृताः कार्यिकेभ्यः परस्वादायिरूपेण पापबुद्धयोर्थंगृह्णीयुस्तेषांसर्वस्वमपहृत्य देशान्निर्वासनंराजा कुर्यात् ॥ १२४ ॥ **राजकर्मस्विति** । राजोपयोगिकर्मसु युक्तानांदास्यादिस्त्रीणांदासवर्गस्य चोत्कृष्टहीनस्थानानुरूपेणैव कर्मानुरूप्येण प्रत्यहंवृत्तिंदद्यात् ॥ १२५ ॥ तामेव दर्शयति **पणोदेयोऽवकृष्टस्यषडुत्कृष्टस्यभक्तकमिति** । पणोवक्ष्यमाणोसकघन्यभृतकस्य भक्तार्थंप्रत्यहंदातव्यः । षाण्मासिकश्चाच्छादोवस्त्रयुगलंमासि मासि धान्यद्रोणोद्वादशोत्तराणि पञ्चदशशतानि देयः । उत्कृष्टस्य तु षट्पणाभक्तार्थंदेयाः । अनयैव कल्पनया षा-

ण्मासिकंवस्त्रयुगषट्कंदेयम् । अनयैव च दिशा मध्यमस्य पणत्रयंषाण्मासिकंवस्त्रयुगत्रयंमासिकंच धान्यद्रोणत्रयंदेयमिति ॥ १२६ ॥ **क्रयविक्रयमिति** । कियता क्रीतंकियता च विक्रीयते कियद्दूराद्धानीतं किमस्य वणिजोदेशान्तरादागच्छतोभक्तसूपाद्यर्थंगतं किंचास्यारण्यादौ चौरादियोगक्षेमार्थंगतमित्येतदपेक्ष्य वणिजः करान् दापयेत् ॥ १२७ ॥ **यथेति** । यथा राज्ञोवणिक्कर्षणादेश्च कर्मकर्तुः फलसंबन्धोभवति तथा पर्यालोच्य राजा सर्वदा राष्ट्रे कराम्कल्पयेत् ॥१२८॥**यथाल्पाल्पमिति** । अत्रदृष्टानामह यथाजलौकोवत्सभ्रमराः शनैःशनैः स्तोकंस्तोकं अदनीयं असृक्क्षीरमकरन्दमदन्त्येवं मूलमछिन्दता राज्ञा सांवत्सरिकोकरोऽल्पोऽल्पोग्रहीतव्यः ॥१२९ ॥ **पञ्चाशद्भागइति** । मूलाधिकयोः पशुहिरण्ययोः पञ्चाशत्तमोभागोराज्ञा ग्राह्यः । एवंधान्यानांषष्ठोष्टमोद्वादशोवा कर्षकक्लेशापेक्षया ग्राह्यः ॥ १३० ॥ **आददीतेति** । **तृणानांचैवषड्भागंचर्मणांवैणवस्यचेति** । वृक्षमांसमाक्षिकघृतकर्पूरादिगन्धानांगुडूच्याद्योषधीनां लवणादिरसानां पुष्पमूलफलपत्रशाकतृणचर्मवेणुमयमृन्मयाश्ममयानां षड्भागंगृह्णीयात् ॥ १३१ ॥ १३२ ॥ **म्रियमाणइति** । **नचगच्छेद्द्विषादंचश्रोत्रियोविषयेवसन्** ॥ अत्यन्तक्षीणकोशोपि राजा वेदाध्यायिनोब्राह्मणात् करं न गृह्णीयात् । न च तदीये देशे वसन् श्रोत्रियोविषादंगच्छेत् ॥ १३३ ॥ यस्मात् **यस्येति** । यस्य राज्ञोदेशे श्रोत्रियः क्षुधावसन्नोभवति तस्य राष्ट्रमपि अचिरात् क्षुधावसादमेति ॥ १३४ ॥ यतएवमतः **श्रुतवृत्तेइति** । **भयेभ्यश्चतथारक्षेत्पितापुत्रमिवौरसं** ॥ ज्ञानानुष्ठानेऽस्य ज्ञात्वा तदनुरूपांधर्मादनपेतां संजीविकां कल्पयेत् । चौरपारदारिकादिभ्योभयेभ्यश्च रक्षणीयस्तथा यथा पिता पुत्रंरक्षति ॥१३५॥ **संरक्ष्यमाणइति** । सच ब्राह्मणोराज्ञा रक्ष्यमामाणोधर्ममन्वहंकुरुते । तेन राज्ञआयुर्वर्धते राष्ट्राणि वर्धन्ते ॥ १३६ ॥ **यत्किंचिदिति** । तद्राष्ट्रे क्रयविक्रयादिजीविनमापूपिकादिकं **किंचिद्व्यवहारजीवनंयत्किंचित्** स्वल्पमपि कराख्यंवर्षे राजा दापयेत् ॥ १३७ ॥ **कारुकानिति** । कारून् सूपकारादीन् शिल्पिनश्चर्मकारादीन् शूद्रांश्च कायक्लेशजीविनो भारिप्रभृतीन् मासिमासि एकैकमहोरात्रंकर्म कारयेत् ॥ १३८ ॥ **नोच्छिन्द्यादिति** । **उच्छिन्द्याच्चात्मनोमूलमिति** ॥ राजा अतिस्नेहेन कराद्यग्रहणे सति आत्मनः कोशक्षयात् राज्यविनाशाख्यंमूलच्छेदंन कुर्यात् । तथातिलोभवान् आसांप्रजानामपि न च मूलच्छेदंकुर्यात् । तस्मादात्ममूलछेदेन राजाकराक्रमणे सति आत्मानंप्रजाश्च पीडयेत् ॥ १३९ ॥ **नतीक्ष्णोनमृदुश्चस्यात्कार्यंवीक्ष्यमहीपतिरिति** । कार्यवशात्तीक्ष्णोमृदुर्वा राजा भवेत् । नैकान्ततः[3]कार्यतस्तीक्ष्णमार्दवालम्बी राजा प्रजानामभिमतोभवति ॥ १४० ॥ **अमात्यमुख्यमिति** । भृत्यविषये कार्यदर्शने राजा खिन्नः सन् प्रधानामात्यंधर्मज्ञंप्राज्ञंयतेन्द्रियंकुलीनंतस्मिन् कार्यदर्शनस्थानेविनियुञ्जीत ॥ १४१ ॥ **एवमिति** । एवमुक्तनीत्या सर्वमात्मनः कार्यजातंसंपाद्य यत्नवान् बुद्ध्याऽस्खलन्नात्मीयाः प्रजाः परिरक्षेत् ॥ १४२ ॥ **विक्रोशन्त्यइति** । यस्य राज्ञः सभृत्यस्य पश्यतएव राष्ट्राद्वाक्रन्दन्त्यः प्रजाः शत्रुप्रभृतिभिः अपह्रियन्ते सजीवितकार्याभावात् मृतएव न तु जीवति ॥ १४३ ॥ **क्षत्रियस्येति** । क्षत्रियस्यधर्मान्तरेभ्यः प्रजापालनमेवप्रकृष्टोधर्मोयस्माद्रक्षणमिति फलभोक्ता राजा धर्मे संबध्यते ॥ १४४ ॥ **उत्थायेति** । मुहूर्तमात्रावशिष्टायांरात्रावुत्थाय कृतावश्यकशौचः संयतमनाः कृताग्निहोत्रोब्राह्मणान्पूजयित्वा वास्तुलक्षणो

(१) सूपा=व्यया (गो०२,५)

(२) ग्राह्यः=ग्राह्यःछन्दोभङ्गभयादक्रमेणपठितः (गो० २,५).

(३) नैकान्ततः=नैकान्ततः ग्रहमेकत्रकुर्यात्पस्मात् (गो० २,५)

पेतांसभाममात्यादिदर्शनवेश्म प्रविशेत् ॥ १४५ ॥ **तत्रेति** । तस्यांसभायांस्थितोदर्शनार्थंसमायाताः सर्वाः प्रजावाक्चक्षुरादिना परितोष्य विसर्जयेत् । ताविसर्ज्य मन्त्रिभिः सह सन्धिविग्रहादिचिन्तयेत् ॥ १४६ ॥ **गिरिपृष्ठमिति** । पर्वतपृष्ठमारुह्य धवलगृहंवाविविक्तदेशस्थोऽरण्ये वा तृणादिरहिते मन्त्रभेदकभयादिवर्जिते पञ्चाङ्गमन्त्रकर्मणामारम्भोपायपुरुषद्रव्यसंपत्देशकालविभागोविनिपातप्रतीकारकार्यसिद्धिश्चेत्येवंविचिन्तयेत् ॥ १४७ ॥ **यस्येति** । यस्य राज्ञोमन्त्रिव्यतिरिक्ताजनाः संमील्याभ्यूह्यमन्त्रं न जानन्ति सक्षीणकोशोपि समग्रांपृथिवींभुनक्ति ॥ १४८ ॥ **जडमूकान्धबधिरानिति** । बुद्धिवाक्चक्षुःश्रोत्रविकलान् तथा गोमृगशुकान् तथा वृद्धस्त्रीम्लेच्छातुरान् अङ्गहीनान् च मन्त्रकाले अपसारयेत् ॥ १४९ ॥ **भिन्दन्तीति** । जडत्वादिदोषयोगेन सावमानाजडादयोमन्त्रभेदंकुर्वन्ति । तथाक्षितिपरिवर्तादिश्रवणांतिर्यग्योनाअपि मन्त्रंभिन्दन्ति । विशेषतश्च स्त्रियोऽपिचापलातिशयत्वात् तस्मात्तदपासने यत्नवान् स्यात् ॥ १५० ॥ **मध्यंदिनइति** । विगतचित्तखेदोपगतशरीरक्लमश्च मध्याह्नेऽर्धरात्रे वा मन्त्रिभिः सहैककोवा धर्मकामार्थान् कथंमयाधर्मः कामोवार्थोवा संसेव्यइति चिन्तयेत् ॥ १५१ ॥ **परस्परविरुद्धानामिति** । तेषांच धर्मकामार्थानांच परस्परंविरोधाविर्भावे सति अविरोधार्जनोपायंचिन्त्येत् । दुहितॄणांदानंत्व कार्यसंसिद्धिफलंविचारयेत् । कुमारणांच पुत्राणां अविनयनिवर्तनंनीचोपसंग्रहफलंचिन्तयेत् ॥ १५२ ॥ **दूतसंप्रेषणमिति** । दूतानांच निसृष्टार्थपरिमितार्थलेखहारित्वादिना परराष्ट्रसंप्रेषणंचिन्तयेत् । तथारब्धकार्यावशेषसंपादनाय चिन्तयेत् । स्त्रीणांचातिचपलविषमाचाधिष्ठितत्वादात्मना आत्मसंरक्षणार्थं अव्यभिचाराय चान्तःपुरचेष्टितंचिन्तयेत् । चराणांचरान्तरैश्चेष्टितमागमयेत् ॥ १५३ ॥ **कृत्स्नमिति** । अष्टविधंकर्मौशनसोक्तं ॥ आदाने च विसर्गे च तथा प्रैषनिषेधयोः । पञ्चमे चार्थवदने व्यवहारस्यचेक्षणे दण्डशुध्योः सदा युक्तस्तेनाष्टगतिकोनृपः ॥ अष्टकर्मा दिवंयाति राजा शक्राभिपूजितः ॥ तत्रादानंकरादीनां भृत्येभ्योधनविसर्गः । प्रैषोयोदुष्टत्यागोधिकृतानांकामचारनिषेधोवर्णाश्रमिणांत्वकर्मसंदेहेऽर्थवदनं प्रजानांधनादिविप्रतिपत्तौ व्यवहारेक्षणं पराजितानांदण्डनं प्रमादस्खलिते प्रायश्चित्तंशुद्धिः इत्येतदष्टविधंकर्मचिन्तयेत् तथाकार्पटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनात्मकं पञ्चपरिमाणंचारवर्गं यथावच्चिन्तयेत् । तत्र परमर्मविद्प्रगल्भछात्रः कार्पटिकः व्यञ्जनस्तंवृत्त्यर्थिनंमत्वा अर्थमानाभ्यांस्वीकृत्य अन्यत् पूर्ववत् रहसि राजा ब्रूयात् तंच पश्यसि तत्तदानीमेवमपि वक्तव्यमिति प्रव्रज्यारूढपतितउदास्थव्यञ्जनस्तं प्रजाशौचयुक्तंवृत्त्यर्थिनंज्ञात्वा रहसि राजा तंब्रूयात् । त्वंच सर्वान्नोत्पादनयोग्यायांभुञ्ज्यन्तेवासिकर्म कुरु ततश्च भूमेरात्मनोन्येषांच तत्प्रयुक्तानांप्रव्रजितानां अस्मदर्थेव्यवहारिणां यथेष्टमहाराच्छादनादि देहीति ब्रूयात् कर्षकक्षीणवृत्तिः प्रज्ञाशौचोपेतोगृहपतिव्यञ्जनस्तंपूर्ववदुक्त्वायथोक्तायांभूमौकार्षिंकारयेत् । शिष्टंपूर्ववत् । मुण्डोजटिलोवा वृत्तिकामस्तापसव्यञ्जनः पूर्ववत् उक्त्वा उक्तपूर्ववद्भूमौ वणिक्कर्मकारयेत् अन्यत्पूर्ववत् । वाणिजिकक्षीणवृत्तिशौचप्रज्ञान्वितोवैदेहिकव्यञ्जनस्तंपूर्ववदुक्त्वा उक्तरूपायांभूमौ वणिक्कर्मकारयेत् । मुण्डोजटिलोवा वृत्तिकामस्तापसव्यञ्जनःपूर्ववद्राजाज्ञया नगरसमीपे अतिबहुमुण्डजटिलान्तरकपटशिष्यगणोपेतस्तापस्यं कुर्यात् । मासद्विमासानन्तरितंप्रकाशमिङ्गुदबदरादिमुष्टिमश्नीयात् । रहसितु यथेष्टमाहारंराजार्पितं भुञ्जीत । लोकेचास्यातीतानागतज्ञंतदन्तेवासिनःख्यापयेयुः । तथायंलोकानांलाभपूजाचौरोपद्रवादिव्यादिशेत् । तद्राज्यप्रयुक्ताः छद्मचारिणःसत्याभिधायित्वजननार्थंसंपादयेयुः । एवंच सकलजनोपसंजातास्वासनयासर्वएवका-

र्याकार्यसंसिद्धिविजिज्ञासवस्तमागत्य पृच्छन्ति । वार्तान्तिराण्यारिराधिषयावर्तयन्तीत्येवंपञ्चवर्गतत्वतश्चिन्तयेत् । एवं-पञ्चवर्गमकल्प्यततस्तेनैववर्गद्वारेण परराजस्यात्मीयास्तांश्चमन्त्र्यादीनामनुरागापरागौ ज्ञात्वा तदनुचिन्तयेत् । वक्ष्य-माणस्यराजमण्डलस्यप्रचारं कःसम्भ्यर्थीत्येवमादिकंबुध्वा तदनुगुणंचिन्तयेत् ॥ १५४ ॥ **मध्यमस्येति** । अरिवि-जिगीषयोर्भूम्यनन्तरंसंहतयोरनुत्साहसमर्थौनिग्रहे वा संहतयोः सममध्यमस्तस्य प्रचारंचिन्तयेत् । तथाप्राज्ञो-त्साहप्रकृतिगुणसंपन्नोविजिगीषुस्तस्य चेष्टितंचिन्तयेत् किमसौ चिकीर्षति । तथारिविजिगीषुमध्यमायांयः संहताना-मनुग्रहसमर्थोनिग्रहचासंहतानांसउदासीनस्तत्प्रचारंचिन्तयेत्। शत्रोश्च सह कृत्रिमभूम्यनन्तरस्य त्रिविधस्यापि पूर्वेभ्यः प्र-यत्नेन प्रचारंचिन्तयेत् ॥ १५५ ॥ **एताइति** । एतामध्यमाद्याश्चतस्रः प्रकृतयः संक्षेपेण मण्डलस्य मूलमन्या-सांप्रकृतीनां आभ्यः प्रसूतेरेतामूलमित्युच्यन्ते । अन्याश्चाष्टौ समाख्याताः । तद्यथा अग्रतोभूतानांमित्रममित्रंमित्र-मित्रमरिमित्रंचेति। एवं अन्याश्चतस्रोभवन्ति । पश्चाच्च पार्ष्णिग्राहआक्रंदपार्ष्णिग्राहासारआक्रन्दासारइति चतस्रएव-मष्टौ मूलप्रकृतिभिश्चतसृभिः सह द्वादशप्रकृतयः स्मृताः ॥ १५६ ॥ **अमात्यराष्ट्रदुर्गार्थदंण्डाख्याइति** । आसांचतसृणांमूलप्रकृतीनांच शाखाप्रकृतीनां उक्तानां एकैकस्याः प्रकृतेरमात्यदेशदुर्गकोशदण्डाख्याः पञ्चद्रव्यप्रकृत-योभवन्ति । एवंच मूलप्रकृतयश्चतस्रः शाखाप्रकृतयोऽष्टौ द्रव्यप्रकृतयः षष्टिरित्येवंसंक्षेपतोद्विसप्ततिः कथिताः ॥ १५७ ॥ **अनन्तरमरिंविद्यादरिसेवितमेव चेति** । विजिगीषोः समंताम्मण्डलीभूतानांभूम्यनन्तरानरीन् जानी-यात्। तथा तत्सेवितंचारिमेव विद्यादरेः पुनरनन्तरान्विजिगीषोः भूम्येकान्तरांमित्रप्रकृतिविद्यात् । तयोश्चारिमित्रयोः परामुदासीनप्रकृतिंविद्यात् । तासामेवाग्रे पश्चात् भेदेनारिपार्ष्णिग्राहादिव्यपदेशभेदः ॥ १५८ ॥ **तान्सर्वानभिसं-दध्यादिति** । सान् सर्वान्प्रकृतीन् सामदानभेददण्डाख्यैर्यथासंभवंव्यस्तैःसमस्तर्वा पौरुषेण वा दण्डेनैव केवलेनानयेन वा साम्नैव वा केवलेन वशीकुर्यात् ॥ १५९॥ **सन्धिमिति । द्वैधीभावंसंश्रयंच षाड्गुण्यंचिन्तयेत्सदा** ॥ तत्रोभया-नुग्रहकृत्प रोबन्धः सन्धिः अपकारोविग्रहः अभ्युदये सत्युपरिगमनंयानं उपेक्षणमासनं। एकेन सह सन्धिरन्येन सह-विग्रहोद्वैधीभावः। परस्यात्मार्पणंसंश्रयइत्येतान् षट्गुणानुपकारणान् सर्वदाचिन्तयेत्। षड्गुणाश्रयणेनात्मनोभ्युदयःपर-स्यापचयो भवति तमेव गुणमधितिष्ठेत् ॥ १६० ॥ **आसनंचैवयानंचसंधायचविगृह्यचेति** । आत्माभ्युदयपरिहान्या-दिकंकार्यंवीक्ष्य संधायासनंविगृह्य वासनंसंधाय यानंविगृह्य वा यानंद्वैधंवा संश्रयंवाऽनुतिष्ठेत्तत्र तदा त्वायतिका-लयोः परेण सह साम्याशङ्कायां संधिकृत्वाऽऽसीत । यदा तु तदात्वसाम्येप्यात्मप्रकृतीनांनविचलित्वं परप्रकृती-नांचोपजापसहत्वं मन्येत तदा विग्रहमाश्रित्यासीत । यदा पुनः परस्मादभ्युत्थितोभवति तदाकृतात्मराष्ट्रसन्धानो-विगृह्य यायाद्विगृह्य यानहेत्वभावे पार्ष्णिग्राहेण सह सन्धाय यायात् तथा कार्यापेक्षया एकेन सह सन्धिमपरेण सह विग्रहमित्येवंद्वैधंकुर्यात्। यदा तु दुर्बलः सन् बलवताऽऽक्षिप्तस्तदा तद्विशिष्टबलमन्यमाश्रयेत ॥ १६१ ॥ **संधिमिति**। संधिविग्रहादीन् गुणान् सर्वानेव द्विप्रकारान् राजाजानीयात् इत्युत्तरविवक्षार्थम् ॥ १६२ ॥ **समानयानकर्मेति** । सांप्रतिकफलयोगेनागामिफलावष्टम्भेन राजान्तरेण यात्राभ्यंप्रति यानकर्म क्रियते ससमानयानकर्म क्रियते ससमा-नयानकर्मसंधिर्यः पुनः त्वनयाह्यहमनुयास्यामीति सांप्रतिकआगामिफलापेक्षयैव क्रियते सोसमानयानकर्मसंधि-रित्येवंद्विप्रकारः संधिर्विज्ञेयः ॥ १६३ ॥ **स्वयंकृतइति । मित्रेणचैवापकृतेद्विविधोविग्रहःस्मृतः** ॥ वक्ष्यमाणमार्गशीर्षादिकालादन्यत्रतस्मिन्नेव वा काले कार्यापेक्षया स्वयंकृतइत्येकोविग्रहः । यश्च परस्यशत्रुस्त-द्विजिगीषोर्मित्रंतेनापकारे क्रियमाणे व्यसनिनि शत्रौ द्वितीयइत्येवंद्विविधोविग्रहःस्मृतः ॥ १६४ ॥ **एकाकिन-**

इति । परस्य व्यसनादौ क्षिप्रप्रतीकारेऽकस्मात्कार्ये प्राप्ते समर्थस्यैकाकिनोयानसमर्थस्य तु मित्रसहितस्येत्येवंद्वि-विधंयानमुच्यते ॥ १६५ ॥ क्षीणस्येति । प्राग्जन्मार्जितकर्मवशेन ऐहिकेन पूर्वप्रमादेनशनैःशनैः क्षीणभूम्यादि-कस्य सर्वसमृद्धस्यापि वा मित्रानुरोधेन तत्कार्यरक्षार्थं इत्येवंद्विविधमासनंस्मृतम् ॥ १६६ ॥ बलस्येति । कार्यसिद्ध्यर्थंबलस्य हस्त्यादेः सेनापत्याद्यधिष्ठितस्यावस्थानमेकत्र कार्यं । राज्ञश्च बलैकदेश युक्तस्य दुर्गावस्थानमित्येवंद्विप्रकारंसंध्यादिगुणषट्कोपकारज्ञैः द्वैधंकीर्त्यते । एकेन संधिरन्येन सह विग्रहः प्र-त्येकंरूपतयावस्थानमित्येवंद्वैधस्यापि पुनर्द्वैविध्यम् ॥ १६७ ॥ अर्थसंपादनार्थमिति । शत्रुभिरभिभूयमान-स्याभिभवनिवृत्त्याख्यः प्रयोजनसंपादनार्थममत्यपि वा तदानीमभिभवआगाम्यभिभवाशङ्कयाऽमुकसंश्रितोयमित्येवं-व्यपदेशार्थं साधुनृपसंश्रयणमित्येवं द्विविधः संश्रयः स्मृतः ॥ १६८ ॥ यदावगच्छेदायत्यामाधिक्यंध्रुव-मात्मन इति । यदागामिनि कालआत्मनोनिश्चितमाधिक्यंमन्येत सांप्रतिकश्चाल्पउपक्षयस्तदापक्षयमङ्गीकृत्या-धिसंधिमेवाश्रयेत् ॥ १६९ ॥ यदेति । यदामात्यादिकाः सर्वाः प्रकृतीर्दानमानादिनात्यन्तंपरितुष्टामन्येत आत्मानंच प्रभूतमन्त्रोत्साहशक्त्यादिनोच्छ्रितं तदा विग्रहमध्यवस्येत् ॥ १७० ॥ यदामन्येतेति । यदास्वकममा-त्यादिसैन्यंपरितुष्टंधनादिना च पुष्टंपरमार्थेन जानीयात् शत्रोश्च विपरीतंतदा तस्योपरि यायात् ॥ १७१ ॥ यदात्विति । यदा पुनर्हस्त्यादिना भृत्यैश्च परिक्षीणः स्यात्तदा शनैः सामोपप्रदानादिना शत्रून्सान्त्वयन् यत्नेनात्युच्छ्र-यादासनमाश्रयेत् ॥ १७२ ॥ मन्येतेति । सर्वप्रकारेण यदातिशयेन बलिनमशक्यसाधनंशत्रुंमन्येत तदा बलैकदेशसहितोदुर्गोपाश्रयोऽपरेण बलैकदेशेन तदुपघातमाचरन् एवंविधाचलंकृत्वा मित्रसंग्रहाद्यात्मनः का-र्यंसाधयेत् ॥ १७३ ॥ यदेति । यदा शत्रुबलानांप्रकृतिकोपादिनातिशयेन यातव्योभवति तदाक्षिप्रमेव धा-र्मिकंपरित्राणसमर्थंनृपमाश्रयेत् ॥ १७४ ॥ निग्रहमिति । यत्संबन्धिदोषेणास्य गमनीयत्वमायातंतासांप्रकृ-तीनांशत्रुबलस्य चयेना [ सौ ] बलिभूतस्तयोरुभयोरपि सविजितः सन् योनिग्रहंकुर्यात् तंसर्वयत्नैर्गुरुवन्नित्यं-सेवेत ॥ १७५ ॥ यदीति । सुयुद्धमेवतत्रापिनिर्विकल्पःसमाचरेत् अगतिका हि गतिः संश्रयोनाम तत्रापि च संश्रयकृतं-दोषंयदि पश्येत्तदा निर्विकल्पोभूत्वा शोभनंयुद्धमेव तस्मिन् काले समाचरेत् दुर्बलेनापि बलवतः पराजयदर्शनात् निह-तस्य च स्वर्गप्राप्तेः ॥ १७६ ॥ सर्वोपायैरिति । नीतिकुशलोराजा सर्वैः सामादिभिरुपायैः तथा च यतेत यथास्य-मित्रोदासीनशत्रुमध्यमाअधिकान भवन्ति । आधिक्ये हि तेषांसुतरांक्षोभ्योभवति धनगर्वेण मित्रस्य शात्रवापत्तेः ॥ १७७ ॥ आयतिमिति । सर्वेषांस्वल्पामपि कार्याणां आगामिनि काले गुणदोषाइत्येवंविचारयेत् वर्तमानकाले च क्षिप्रसंपादनार्थंसर्वेषांकार्याणांगुणदोषौ किमेषांकृतंविचारितंकिंवावशिष्टमित्येचंयावद्विचारयेत् ॥ १७८ ॥ आय-त्यामिति । यः कार्याणामागामिकालदोषज्ञोगुणवत्कार्यमारभतेदोषवत्परिहरति यश्च वर्तमानकाले क्षिप्रमेवावधार्यकार्यंक-रोति नदीर्घसूत्रोकार्येयः कार्यशेषज्ञोभवति सतत्कार्यसमाप्तौ तत्फलंलभते । अतएवंविधकालत्रयसावधानत्वान्न कदाचित् शत्रुभिरभिभूयते ॥१७९॥ यथेति । यथैनंराजानम् मित्रादयः उक्तानवञ्चयेयुः । तथा सर्वसंविधानंकुर्यात् । इत्येवंसांक्षे-पिकोनयोनीतिः ॥ १८० ॥ यदेति । यदा त्वरिराष्ट्रंप्रति यात्रामारभेत शत्रुः संस्तदानेन वक्ष्यमाणेन प्रकारेण शत्रुदेशेत्व-रमाणोगच्छेत् ॥ १८१ ॥ मार्गशीर्षइति । यश्चतुरङ्गबलप्रायोमहीपतिः समार्गशीर्षे मासि शुभे प्रचुरतरयवसंधान्यरथमा-र्गोपेते तच्छुभे दीर्घकालप्रयतोवाऽऽसन्नसस्यप्रत्यासन्ने यात्रांकुर्यात् । यः पुनरश्वबलप्रायो वासन्तसस्यप्रायंच देशं यात्य-दीर्घकालएवयस्य यात्रा सफाल्गुने चैत्रे वा एवंस्वबलयोग्यकालानतिक्रमेण यायात् ॥ १८२ ॥ अन्येष्विति । उक्तकाल-

व्यतिरिक्तेऽप्यपि कालेषु यदात्मनोनिश्चितंजयमाशङ्केत तदा हस्तिबलप्रायोऽश्वबलप्राये वर्षास्वश्वबलप्रायो हस्तिबलप्राये ग्रीष्मे तदा विगृह्यैव यात्रांकुर्यात् । शत्रोश्च प्रकृतिकोपादौ व्यसने उपपन्ने उक्तकालव्यतिरिक्तेपि काले यायात् ॥ १८३ ॥ **कृत्वेति । संशोध्येति** । पार्ष्णिग्राहं तंधानजनपददुर्गसंरक्षणकुद्धादिवर्गोपशमनादिकं मूलमात्मदुर्गराष्ट्ररूपे संविधानंकृत्वा उपयोगिवाहनायुधचर्ममन्त्रादिविधानंयथाशास्त्रंकृत्वा परमण्डलगतस्य येनास्पदमवस्थानंभवति तदुपगृह्य तदीयान् भृत्यपक्षानात्मसात्कृत्य परान् स्वकार्पटिकादीन् परमण्डलवार्ताच योधार्थं सम्यगवस्थाप्य तथा जाङ्गलानूपाटविकभेदेन त्रिविधंपन्थानंमार्गरोधकगुल्मादिच्छेदनिम्नोन्नतादिसमीकरणोदपानखननादिना संशोध्य तथा हस्त्यश्वरथपदातिसेनापतिकर्मकरात्मिकंषड्विधंबलं स्वकं यथोपयोगमाहारौषधसत्कारपूरणादिना संशोध्य साङ्ग्रामिकविधिना शत्रुदेशमत्वरया व्रजेत् ॥ १८४ ॥ १८५ ॥ **शत्रुसेविनीति । गतप्रत्यागतेचैवतौहिकष्टतरौरिपू** ॥ यस्मिन्मित्रंगूढंकृत्वा शत्रुंसेवेत यश्च भृत्यादिःपूर्वंविरागाद्गतः पश्चादागतस्तयोः सावधानोभवेत् यस्मात्तावतिशयेन रिपू कष्टतरौ ॥ १८६ ॥ **दण्डव्यूहेनेति** । दण्डाकृतिर्व्यूहरचनाव्यूहः एवंशकटादिर्व्यूहोपि तत्राग्रे च बलाध्यक्षोमध्ये राजा पश्चात्सेनापतिः पार्श्वयोर्हस्तिनः तत्समीपे अश्वाः ततः पदातयः एवंकृतरचनोदीर्घः सर्वतः समविन्यासोदण्डव्यूहस्तेन तंयातव्यंमार्गंसर्वतोभये सति यायात् । सूच्याकाराग्रः पश्चात्पृथुः शकटव्यूहस्तेन पार्श्वतोभये सति व्रजेत् । वराहविपर्ययेण मकरव्यूहस्तेनाग्रे पश्चाद्भागे भये सति गच्छेत् । पिपीलिकापङ्क्तिवत् अग्रपश्चाद्भागेनासंहतरूपतया यत्र सैनिकावस्थानंसदीर्घप्रचारः पुरुषमुखः सूचीव्यूहस्तेनाग्रतोभये सति यायात् ॥ १८७ ॥ **यतइति** । यस्यादिशःशत्रुकृतंभयमाशङ्क्येततस्यानेवबलंविस्तारयेत् । तमन्ततोविस्तृतपरिमण्डलोमध्योपविष्टोविजिगीषुःपद्मव्यूहेनपुरान्निर्गत्यैवंसर्वदास्वयंसुस्थातव्यम् ॥ १८८ ॥ **सेनापतिबलाध्यक्षाविति** । हस्त्यश्वरथपदातात्मकस्याङ्गदशकस्यैकः पतिः कार्यः सपतिकउच्यते । पतिकदशकस्यैकः पतिः ससेनापतिः । तद्दशकस्यैकः सनायकः । सएव च बलाध्यक्षः । तौ सर्वासु दिक्ष्वनेकप्रधानत्वे सति संघर्षयुद्धार्थंनियोजयेत् । यस्याश्च दिशोभयमाशङ्केत तामप्रेदिशंकुर्यात् ॥ १८९ ॥ **गुल्मानिति** । गुल्मान् स्थानकल्याप्तपुरुषाधिष्ठितान् स्थानापसरणयुद्धाद्यर्थकृतशङ्खभेदपटहादिसङ्केतान् वनावस्थानप्रणीतान्निर्भयान् अव्यभिचरान् समंतात् स्थापयेत् ॥ १९० ॥ **संहतानिति** । अल्पान् योधान् संहतान्कृत्वा योधयेद्बहून् पुनर्यथेच्छंविस्तारयेत् । सूच्यापूर्वोक्तया वज्राख्येन वा व्यूहेन त्रिधावस्थितबलेन रचयित्वा योधान् योधयेत् ॥ १९१ ॥ **स्यन्दनाश्वैरिति** । समभूभागे रथाश्वैर्योद्धव्यम् । तत्र रथसामर्थ्यात् तथानुगतोदके नौहस्तिभिर्वृक्षगुल्मव्याप्ते धनुर्भिः पाषाणकण्टकगर्तादिरहिते खड्गफलकाख्यैरायुधैः ॥ १९२ ॥ **कौरक्षेत्रानिति** । कुरुक्षेत्रभवान् मत्स्यान् विराटदेशवासिनः पाञ्चालान् कान्यकुब्जान् भृत्यान् शूरसेनजान् पृथुशरीरान्प्रायेण पृथुशरीरबलशौर्याभिमानयोगात् सेनाग्रेषुयोजयेत् । तथाऽन्यानपि दीर्घान् लघून्मनुष्यांश्च ॥ १९३ ॥ **प्रहर्षयेदिति । चेष्टांचैवविजानीयादरीणांयुध्यतामिति** । बलंरचयित्वाजये धर्मार्थौ पराजये स्वर्गानृण्ये इत्येवमादिना युद्धार्थंप्रोत्साहयेत् । तांश्च योधान् समीक्ष्य परीक्षयेत् । कएवमुक्त्वा तुष्यन्ति कुप्यन्ति चेति तथायोधानामरिष्वयुध्यमानानामपि सोपधानयुद्धादिचेष्टाविजानीयात् ॥ १९४ ॥ **उपरुध्येति** । दुर्गापाश्रितमपि युध्यमानमरिंदुर्गवेष्टनद्वारेणावेष्ट्यासीत । अस्य च राष्ट्रं दुर्गाद्बहिर्देशंलुण्ठनादिनोपपीडयेत् । घासान्नोदकेन्धनानिवास्य

सर्वदापद्रव्यसंमिश्रादिना दूषयेत् ॥ १९५ ॥ **भिन्द्यादिति** । दुर्गोपस्थजोव्यानि तडागादीनिप्रभेदेन नाशयेत् । तथा-दुर्गप्राकारान् भिन्द्यात् तत्परिखाश्च पूरयेत् छिद्रकरणेनः वानिरुदकाः कुर्यात् । एवंच शत्रुमशङ्कितमेव सम्यग-वस्कन्दयेत् तस्योपरि निपतेद्रात्रौ वा दिवा वा शिवासितादिभिर्वित्रासयेत् । इदानींचमुहुर्मुहुः ॥ १९६ ॥ **उपजप्यानिति** । तदन्वयिनोराज्यार्थिनः क्रुद्धान् भृत्यांश्चोपजपाहानुपजपेत् । तत्कृतंच यत्तत्कृत्यंयत्तआमी-यात् ग्रहसौम्यादिनानुकूलेदैवे सति विजयेप्सुरपगतभयोयुध्येत ॥ १९७ ॥ **साम्नेति** । **विजेतुंप्रयतेतारीन्न-युध्येतकदाचन** ॥ साम्नाप्रीत्या वरदर्शनेन हितकथनाद्यात्मकेन दानेन च हिरण्यादीनां भेदनेन च तत्प्रकृतीनां तद न्वयिनांच विश्लेषणेनैवं तैर्व्यस्तैःसमस्तैर्वा यथोपयोगंविजेतुमरीन् प्रयतेत । न पुनः कदाचिद्युध्येत ॥ १९८ ॥ **अनित्यइति** । युध्यमानयोर्यतोबलवदबलस्थानापेक्षायामेवानियमेन जयपराजयौ दृश्येते । तस्मादुपायान्तरसंभवे सति युद्धंविवर्जयेत् ॥ १९९ ॥ **त्रयाणामप्युपायानांपूर्वोक्तानांपरिक्षये । ततोयुध्येतसंयत्तइति** ॥ सामादीनां-पूर्वोक्तानामुपायानांअसाधकत्वे सति जयपराजयसंदेहे तथा सावधानोयुध्येत यथा शत्रून्विजयेत । यदि नोजयेत्तदास्व-र्गनिःसंदिग्धे पुनः पराजये निष्पतनंसाधयेद्यया वक्ष्यत्यात्मानंसर्वतोरक्षेदिति ॥ २०० ॥ **जित्वेति** । परराष्ट्रंजित्वा तत्रत्यान् देवान् धर्मप्रधानान् ब्राह्मणांश्च दानमानादिभिः पूजयेत् । तथा श्रोत्रियादिगतावश्यदानेषु मयैतदनुज्ञात-मित्येवंपरिहारान् दद्यात् । तथात्वामिभक्तयास्माकंयैरपकृतंतेषांमयाक्षान्तं इदानीमाश्वस्ताः सन्तः स्वव्यापारमनुतिष्ठन्त्वे-वं अभयानि ख्यापयेत् ॥ २०१ ॥ **सर्वेषामिति** । तेषांपरकीयानांसर्वेषांसंक्षेपतोऽभिलषितंज्ञात्वा तस्मिन जित-राष्ट्रे जितराजान्वयिनं अभिषेचयेत् राज्ये । इदंत्वया कार्यमिदंनेत्येवंतस्य तदमात्यादीनांपरिभाषणं च कुर्यात् ॥ २०२ ॥ **प्रमाणानीति** । तेषांपरकीयानांये धर्मादनपेतादेशधर्मतया शास्त्रेणाभ्युपगता आचारास्तान्प्रमाणी-कुर्यात् । एवंचाभिषिक्तंमन्त्र्यादिभिः सह रत्नादिदानेन पूजयेद्यत्नात् ॥ २०३ ॥ **आदानमिति** । ये अभिल षितानामर्थानामेवहरणमप्रियकरं दानंच तेषांप्रियजनकं इत्युत्सर्गेतथा कालवशेन दानमपि वा प्रशस्यते तस्मात् त-स्मिन्काले एनंपूजयेत् ॥ २०४ ॥ **सर्वमिति** । यत्किंचित्संपाद्यतत्प्राग्जन्मशुभाशुभं उभे कर्मणी तदिहलोककृते च मनु-ष्यव्यापारआयत्तंतत्र तयोर्मध्येदैवंचिन्तयितुमशक्यम् । मानुषे पुनः पर्यालोचनंभवत्यतस्तद्द्वारेण कार्यसिद्ध्यर्थंयतितव्यं निरीहेन भाव्यम् ॥ २०५ ॥ **सहवापिव्रजेद्युक्तस्त्विति** । एवंयातव्येन सह युद्धंकार्यं यदि वा सएवमित्रंहिरण्यं वा तेन दत्तभूम्येकदेशोवात्यक्तइत्येवंयात्राफलंमत्वा तेन सह संधिंकृत्वा यत्नवान् व्रजेत् ॥ २०६ ॥ **पार्ष्णिग्राहमिति** । विजिगीषोरारिंप्रति निर्यातस्य योदेशाक्रमणाद्याचरति सपार्ष्णिग्राहस्तथा कुर्वतः पार्ष्णिग्राहस्य योऽकुशस्थानीयः सआ-क्रंदस्तावपेक्ष्य यातव्यान्मैत्रीभूतादमित्राद्वा फलंगृह्णीयात् तावदनवेक्ष्यगृह्णन्कदाचित्ततद्गतेन दोषेणयुज्यते ॥ २०७ ॥ **हिरण्यभूमिसंप्राप्त्येति** । हिरण्यभूमिलाभेन राजा तथा न वर्धते यथासंप्रति कृशमप्यागामिकाललब्धवृध्याद्युपेतं-स्थिरंमित्रंप्राप्य वर्धते ॥ २०८ ॥ **धर्मज्ञमिति** । धर्मज्ञमुपकारस्य दक्षमनुरक्तामात्यंसानुरागंस्थिरकार्यदक्षंयत् तस्मिन् मित्रमतिशयेनेष्यते ॥ २०९ ॥ **प्राज्ञमिति** । प्राज्ञंमहाकुलंविक्रान्तं उत्साहयुक्तं उदारं उपकारस्य रक्षितारं अ-र्थानर्थयोरेकरूपंशत्रुंदुरुच्छेदंविद्वांसआहुः । अतस्तथाविधंयत्नतः संदध्यात् ॥ २१० ॥ **आर्यतेति** । साधुत्वं-पुरुषविशेषज्ञाता शौर्यंदयालुत्वं सर्वदा च स्थूललक्षमर्थेषु सूक्ष्मदर्शित्वमिष्यते । स्थूललक्षंसततमुदासीनगुणसामग्र्य-मतएवंविधं उदासीनमाश्रित्य उक्तलक्षणेनाप्यरिणा सह योद्धव्यम् ॥ २११ ॥ **क्षेम्यामिति** । **परित्यजेन्नृपो**

**भूमिमात्मार्थमवधारयन्** ॥ रक्षाक्षमामपि नदीमातृकतया सर्वदा सस्यप्रदामपि बहुतृणपत्रादियोगात् पशुवृद्धिकरीमपि भूमिमात्मरक्षार्थमवलंबमानोराजाऽनन्यगतिकः परित्यजेत् ॥ २१२ ॥ यतःसकलपुरुषविषयोयंधर्मःस्मर्यते **आपदर्थइति** । आपन्निवृत्त्यर्थंधनंरक्षणीयम् । धनपरित्यागेनापि दाराः संरक्षणीयाः । आत्मा पुनर्धनदारादिना सर्वपरित्यागेनापि संरक्ष्यः । यत्तु राजव्यतिरेकेणान्यस्य दारार्थआत्मत्यागोन्याय्यइत्याहुस्तदसत् सर्वतआत्मानंगोपायेदिति अशास्त्रितमरणस्य निषिद्धत्वात् नचसहसैवधनदारपरित्यागः कार्यः ॥ २१३ ॥ **यस्मात्सहेति** । प्रकृतिकोशकोपक्षयमित्रव्यसनादिकायुगपत्सर्वाआपदोत्यर्थमुत्पन्नाज्ञात्वा नमोहमुपेयादपि तु व्यस्तान्समस्तान्वा सामादीनुपायान्सर्वान्वा प्राज्ञः प्रयुञ्जीत सर्वथा ॥ २१४ ॥ **उपेतारमिति** । **एतत्त्रयंसमाश्रित्यप्रयतेतात्मसिद्धये** ॥ उपेतात्मा उपेयंच प्राप्तव्यंसर्वे च सामादयउपायास्ते च परिपूर्णाइति तत्त्रयसामर्थ्ये सति आत्मसिद्धर्थंयतेतेत्युपसंहारः ॥ २१५ ॥ **एवमिति** । एवमुक्तनीत्या सर्वराजा मन्त्रिभिः सह विचार्य तदनु धनुरादिना व्यायामंकृत्वा स्नात्वा च मध्याह्ने काले अन्तःपुरंभोक्तुंप्रविशेत् ॥ २१६ ॥ **तत्रेति** । तत्रान्तः पुरआत्मतुल्यैर्भोजनकालवेदिभिरभेद्यैः सूपकारादिभिर्यत्कृतमन्नाद्यंसुष्ठु च परीक्षितं अग्निप्रक्षेपचकोरादिदर्शनेन अग्निर्हि सविषान्नप्रक्षेपे सति चटचटायते चकोरस्याक्षिणी रक्ते भवतइत्येवमादिना परीक्षितंविषापहारैश्च मन्त्रैर्जप्तमद्यात् ॥ २१७ ॥ **विषघ्नैरिति** । विषघ्नैरौषधप्रयोगैः सर्वद्रव्याणि भोगभोज्यादीनि लक्षयेत् । विषघ्नानि च रत्नानि गरुडोद्गीर्णनागमणिप्रभृतीनि यत्नवान् सर्वदा धारयेत् ॥ २१८ ॥ **परीक्षिताइति** । स्त्रियश्च दास्योधर्मार्थकामोभयविषयेचारप्रयोगादिद्वारेण कृतपरीक्षागूढायुधग्रहणविषलिप्ताभरणधारणाशङ्कया संशुद्धवेषालङ्करणाः अनन्यमनस्काश्चामरस्नानाद्युदकधूपैरेनंराजानंपरिचरेयुः ॥ २१९ ॥ **एवमिति** । एवंविधपरीक्षादिप्रयत्नंवाहनशयनासनभोजनस्नानानुलेपनेषु सर्वालङ्कारार्थेषु कुर्वीत ॥ २२० ॥ **भुक्तवानिति** । कृतभोजनः सन् तस्मिन्नेवान्तःपुरे भार्याभिः सह क्रीडेत् । कालातिक्रमेण च सप्तमेदिवसस्य भागे तत्रविहृत्याष्टमे भागे पुनः कार्याणि चिन्तयेत् ॥ २२१ ॥ **अलङ्कृतइति** । अलङ्कृतश्च सन्नायुधजीविनंपुनर्जनंवाहनानि चाश्वादीनि सर्वाणि खड्गादीनि च शस्त्राण्यलङ्करणानि च संपश्येत् ॥ २२२ ॥ **संध्यामिति** । ततः संध्योपासनंकृत्वा गृहाभ्यन्तरे भृतशस्त्रोरहस्याभिधायिनांचव्यापारंशृणुयात् ॥२२३ **गत्वेति** । तस्मात्प्रदेशादन्यद्विमुक्तंप्रदेशान्तरंगत्वा चारजनंसंप्रेक्ष्य परिचारिकादिभिः स्त्रीवृतः सन् पुनर्भोक्तुमन्तःपुरंप्रविशेत् ॥ २२४ ॥ **तत्रभुक्त्वापुनःकिञ्चित्तूर्यघोषैःप्रहर्षिताभिः ॥ संविशेत्तुयथाकालमुत्तिष्ठेद्विगतज्वरः** ॥ तत्रान्तःपुरे किञ्चिन्मानितूर्यवादित्रशब्दैः श्रुतिसुखैर्युक्तेभुक्त्वाकालानतिक्रमेण गतार्धरात्रप्रहरायांरात्रौ सुप्यात् । सुप्त्वा च पश्चिमे यामे उत्तिष्ठेत् ॥ २२५ ॥ **एतदिति** । अरोगोराजैतदनुत्क्रान्तंप्रजारक्षणादि स्वयमनुतिष्ठेत् । अस्वस्थः पुनः सर्वमेतदमात्येषु समर्पयेत् ॥ २२६ ॥ इतिश्रीभट्टमाधवात्मजगोविंदराजविरचितायांमनुटीकायांमन्वानुसारिण्यांराजधर्मोनामसप्तमोध्यायः ॥ ७ ॥

---

## ॥ अथ अष्टमोऽध्यायः ॥



**श्रीगणेशायनमः** ॥ **व्यवहारान्नृपःपश्येदिति** । अर्थिप्रत्यर्थिनोर्ऋणादानादिविषयाणीतरेतरविरुद्धावहरणरूपाणि कार्याणि द्रष्टुमिच्छन् राजावक्ष्यमाणलक्षणैर्मन्त्रिभिश्चोक्तपश्चाद्गमत्रज्ञैः सह चापलादिरहितोवक्ष्यमाणसभांप्रविशेत् ॥ १ ॥ **तत्रेति** । तस्यांसभायांगुरुकार्यापेक्षयोपविष्टोऽन्यथोत्थितांदक्षिणबाहुं वाससउद्धृत्य अनुद्धतवेषालङ्कारः कार्यार्थिनांव्यवहारंनियमतोविचारयेत् ॥ २ ॥ **प्रत्यहमिति** । तांश्च व्यवहारान् अष्टादशव्यवहारस्थाने ऋणादानादिषु वक्ष्यमाणेषु पृथक्पृथक् व्यवस्थितान् प्रतिनियतदेशव्यवस्थावणिक्कर्षकादिगतया शास्त्राविरुद्धया शास्त्रगतया च साक्षिशपथानुमानाद्यात्मकया प्रत्यहमालोक्यमेव ॥ ३ ॥ **तेषामिति** । **वेतनस्येति** । **सीमाविवादधर्मइति** । **स्त्रीपुंधर्मइति** । तेषामष्टादशानां आदावधर्मगृहीतस्य ऋणस्यादानमिह विचार्यते। ततः क्रमेण निक्षेपोऽस्वामिना च यःक्रियते विक्रयादिः । एकोभूय धनार्जनेहा । यागाद्यर्थंदत्तस्य प्रतिश्रुतस्य वा यागाद्यकरणे सत्यप्रदानम् । भृतेरदानम् । ग्रामादिकृतव्यवस्था व्यतिक्रमः । क्रये विक्रये वा सति पश्चात्तापः । स्वामिपालयोः विप्रतिपत्तिः । ग्रामादिसीमाविवादव्यवस्था । वाक्पारुष्यं ताडनादि । चौर्यं । मध्यापहरणादिसाहसं । स्त्रियश्च परस्परंच संपर्केरामकंस्त्रीसहितस्य । पुंसोभर्तुर्व्यवस्था । पैतृकादिधनविभागोऽक्षादिक्रीडाव्यवस्थापनम् । पशुपक्ष्यादियोधनमित्येवं अष्टादशैतानि व्यवहारोत्पत्तौ लोके स्थानानि ॥ ४ ॥ ५ ॥ ॥ ६ ॥ ७ ॥ **एष्विति** । एष्वष्टादशसु स्थानेषु व्यवस्थानेषु बाहुल्येन मनुष्याणांविवादंकुर्वतां अनादिपारंपर्यायातांव्यवस्थामाश्रित्य व्यवहारनिर्णयंकुर्यात् । भूयिष्ठवचनादन्यान्यपि सन्ति। यथोक्तंनारदेन ॥ तेषामेव प्रभेदोन्यः शतमष्टोत्तरंस्मृतम् ॥ ८ ॥ **यदेति** । यदाकार्यान्तरव्याकुलतयात्मना व्यवहारेक्षणंराजा न कुर्यात् तदा कार्यदर्शनार्थंविद्वांसंब्राह्मणंनियुञ्जीत ॥ ९ ॥ **सइति** । सब्राह्मणः सभायांसाधुभिर्धार्मिकैर्ब्राह्मणैः युक्तस्तामेव राजसभांश्रेष्ठांप्रविश्योपविष्टः स्थितोवा अस्य राज्ञोद्रष्टव्यान् व्यवहारान् संपश्येत् ॥ १० ॥ **यस्मिन्निति** । यस्मिन् स्थाने ऋग्यजुःसामपारगाः त्रयोपि ब्राह्मणाराजाधिकृतश्च विद्वानवतिष्ठते हिरण्यगर्भमिवतांसभांमन्यन्ते ॥ ११ ॥ **धर्मइति** । यस्मिन् द्रष्टरि धर्मशास्त्रव्यवस्थाश्च अधर्मेण व्यवस्थायापीडितः सभां उपतिष्ठते यत्रावस्थानंकुरुते सभ्याश्च ब्राह्मणास्तस्य धर्मस्य शल्यमिव शल्यमधर्माख्यंनोद्धरन्ति तत्र तेनाधर्मशल्येने सभ्याविद्धाभवन्ति ॥ १२ ॥ **सभावानप्रवेष्टव्येति** । व्यवहारदर्शनार्थंसभा न प्रवेष्टव्या । प्रविष्टश्चेत्तदा सत्यंवक्तव्यं अथवा तूष्णीमासीनोविरुद्धंवा ब्रुवन् सभ्यएव एनस्वी भवति ॥ १३ ॥ **यत्रेति** । यस्यांसभायांसभावस्थितानांप्राड्विवाकवादीनांप्रेक्षमाणानांवादिना प्रतिवादिना वा धर्मोबाध्यते यत्र च साक्षिभिः सत्यमनृतेन बाध्यते तत्र ते प्राड्विवाकादयः सभासदः पापेन हताभवन्ति । तस्मान्न चापि प्रतिवादिना साक्षिकृतोव्यतिक्रमोरक्षणीयः ॥ १४ ॥ **धर्मइति** । तस्माद्धर्मएव व्यतिक्रान्तोदृष्टादृष्टाभ्यांनाशयति नार्थिप्रत्यर्थ्यादि सएव चानतिक्रान्ततयारक्षति तस्माद्धर्मोनातिक्रमणीयः मास्माकंत्वत्सहितानांधर्मोव्यतिक्रान्तोदृष्टादृष्टार्थनाशंकार्षीदिति । सभ्यैरसत्प्रवृत्तः

प्राड्विवाकः संबोधनीयः ॥ १५ ॥ वृषइति । तस्मात्सकलकामवर्षणानां वृषशब्देन धर्मउच्यते । तस्य वाह्नरणंकुरुते तंदेवावृषलंमन्यन्ते न जातिवृषलंतस्माद्धर्मनोच्छिन्द्यादिति धर्मव्यतिक्रमपरिहारार्थंवृषलवचनम् ॥ १६ ॥ एकइति । तस्मात् अन्यत्सर्वंभार्यापुत्रमित्रादिशरीरेणैवसह नाशंगच्छति न धर्मस्त्राणार्थंकिञ्चिदपि पश्चादन्वेति तस्मात्सुहृद्धर्मोन हातव्यः ॥ १७ ॥ पादइति । तद्व्यवहारतोऽधर्मसंबन्धी चतुर्थोभागोऽर्थिनंप्रत्यर्थिनंवादिसंप्रवृत्तं गच्छत्यन्यश्चतुर्थभागोऽसत्यवादिनंसाक्षिणं चान्यः परःसर्वान् सभास्थितान् प्रेक्षमाणान् परित्यज्य राजानंप्रयातीति सर्वेषामधर्मसंबन्धोभवतीत्येतत्प्रतिपादनपरमेतत् ॥ १८ ॥ राजेति । यत्र पुनः सभायांअसद्वादित्वादर्थी प्रत्यर्थी वासम्यग्दर्शनेन कुत्स्यते तत्र राजाऽपापोभवति सभासदश्च पापेनन संबध्यन्तेचार्थादिकर्तारमेव गच्छति ॥ १९ ॥ जातिमात्रोपजीवीति । केवलंब्राह्मणजातिमात्रंयस्य तस्य तेन ब्राह्मणधर्मानुसरणेन सतु ब्राह्मणोऽस्य राज्ञोविद्वद्ब्राह्मणाभावे व्यवस्थाने धर्मस्य प्रवक्ताधिकृतः स्यात् नकदाचित् शूद्रइति । तदा नियुञ्ज्याद्विद्वांसंब्राह्मणमित्यनेनैव सिद्धेशूद्रप्रतिषेधे पुनर्वचनं क्षत्रियवैश्यनियोजनाच्छूद्रनियोजनस्यदुष्टत्वख्यापनार्थम् ॥ २० ॥ यस्मात् यस्येति । यस्य राज्ञः शूद्रोधर्मविचारंकुरुते तस्य पश्यतएव कर्दमइव गौः तद्राष्ट्रमवसीदति ॥ २१ ॥ यदिति । यद्राष्ट्रंशूद्रबहुलं परलोकायतिकाक्रान्तं अविद्यमानद्विजं तत्सर्वंदुर्भिक्षव्याधिपिडितंभूत्वा विनश्यति अग्नौ प्रास्तेत्येतदभावाच्छान्त्यर्थयागाद्यभावाच्च ॥ २२ ॥ धर्मासनमिति । प्रणम्यलोकपालेभ्यःकार्यदर्शनमाचरेत् ॥ धर्मदर्शनार्थं आसने उपविश्याच्छादितदेहोऽनन्यमनालोकपालान्नमस्कृत्य ततोव्यवहारेक्षणं राजा चरेत् ॥ २३ ॥ अर्थानर्थाविति । प्रकृतिसंप्रसादकोपात्मकान् तथाविधान् लोकगतानालोच्य परलोकार्थंच धर्माधर्माविव केवलावालोक्य यथाधर्महानिः अधर्मानर्थोत्पादश्च न भवति तथा सर्वान् व्यवहारान् पश्येत् । सन्निपाते च वर्णानांब्राह्मणादिक्रमेण पश्येत् ॥२४॥ बाह्यैरिति। गद्गदत्वादि चक्षुःस्वरपाण्डुरादिवर्णवेपथुरोमाञ्चादीङ्गितविवर्णत्वाद्याकाराधोनिरीक्षणादि चक्षुर्गतहस्तनिष्पेषादि विशेषचेष्टाकारैर्बाह्यलिङ्गैरवश्यगमकेन स्वभावैर्गूढमभिप्रायंसदसद्रूपंव्यवहारिणांनिश्चयं अनुभूय ॥ २५ ॥ यस्मात् लोकेपि आकारैरिति । नेत्रवक्त्रविकारैश्चज्ञायतेन्तर्गतंमनः ॥ आकारादिभिः पूर्वोक्तैर्गत्या च स्खलद्रूपया निगूढसद्रूपंज्ञायते ॥ २६ ॥ बालदायादिकमिति । अनाथबालस्वामिकंधनंतावद्राजा रक्षेत् । यावदसौ गुरुकुलान्निवृत्तोयावद्वा निवृत्तबालभावः स्यादिति भावः पितृव्यादिभ्यः स्वामित्वोपन्यासादिव्याजेनापजिहीर्षद्भ्योरक्षितार्थमिदमस्मिन् व्यवहारउच्यते । सामान्यविषयस्य रक्षणस्य राज्ञः सर्वविषयत्वात् ॥ २७ ॥ वन्ध्यापुत्रास्विति । यथा बालधनस्य राज्ञो रक्षणंस्यादेवंसत्यपि भर्तरि वन्ध्यासु स्त्रीष्वप्रजासु निष्कुलासु च कन्यकासु मृतप्रोषितभर्तृकासु साध्वीषु व्याधितासु च रक्षणंस्यादत्र गोबलीवर्दन्यायेनानेकशब्दोपादानम् ॥२८॥ जीवंतीनामिति । भाविस्वाम्यादस्मादधीनत्वादिव्याजेन येबान्धवास्तासांजीवन्तीनांधनंहरेयुः । वक्ष्यमाणचौरदण्डेन धर्मप्रधानोराजा दण्डयेत् ॥ २९ ॥ प्रनष्टस्वामिकमिति । अज्ञायमानस्वामिकंधनंराजाकस्यकिंप्रनष्टमित्येवंपटहादिनाख्याप्य द्वारादौ वर्षत्रयंस्थापयेत् । वर्षत्रयादर्वाक् स्वाम्यायातो गृह्णीयादूर्ध्वंपुनर्नृपतिर्गृह्णीयात् । यावत्स्वाम्यागच्छति तावदपहरेत् । एवंपरकीयस्य धर्मतोवर्षशतैरपि स्वापहारस्याभ्याम्यस्वात् प्रनष्टद्रव्यादिसोर्वाक् ॥ ३० ॥ ममेति । मत्संबन्ध्येतद्धनमितियोब्रूयात् स किंसारं किंसङ्ख्याकंकप्रनष्टमित्येवमादिविधानेन पर्यनुयोक्तव्यः । तत्तोवदिरूपसङ्ख्यादीन् सत्यान् ब्रवीति तद्धनं ग्रहीतुमर्हति ॥ ३१ ॥ अवेदयानइति । नष्टद्रव्यस्य देशकालौ यथासंभवंच वर्णशुक्लादिकं आकारंकण्टकत्वादिकं प्रमाणंच यथावदजानतः तत्तुल्यंदण्डमिति ॥ ३२ ॥ सङ्ख्यादिसंवादे पुनः आद-

**प्रीतेति** । यदेतत्प्रनष्टंराज्ञा प्राप्तंततः स्वामिगतसङ्ख्यादिसंवादानन्तरं रक्षणक्लेशापेक्षया षड्भागंदशमंद्वादशंवा साधूनामयंधर्मइत्येवंजानन् राजा गृह्णीयात् शिष्टंपुनः स्वामिने उत्सृजेत् ॥ ३३ ॥ **प्रनष्टाधिगतमिति** । यद्द्रव्यंकस्यचित्प्रनष्टंसद्राजपुरुषैर्लब्धंतद्रक्षयेत् । नियुक्तैरक्षितंकृत्वा राज्ञा स्थाप्यं तस्मिंश्च द्रव्ये यान् चौरान् राजा गृह्णीयात् तान् शतादभ्यधिकेवधइतिदर्शनात् सुवर्णशतमूल्यादिचौर्येसति हस्तिना घातयेत् ॥ ३४ ॥ **ममायमिति** । तत्संबन्धीदंनिधायमित्येवंनिधिं अन्येन वा तथ्ये सति तयोरूपसंङ्ख्यादिपूर्वप्रतिज्ञासंवादेन मनुष्योब्रूयात्तस्य ततोनिधानाद्देशकालवर्णाद्यपेक्षया षड्भागंद्वादशमेव वा राजागृह्णीयात् शिष्टंतस्योत्सृजेत् ॥ ३५ ॥ **अनृतमिति** । आत्मपुनः सत्यंब्रुवन् स्वधनस्याष्टमंभागंदण्ड्यः । यद्वा तस्यैव निधानस्यात्यन्ताल्पंभागंविगणय्य सविषादंन गच्छति विनयंच गृह्णीयात्तंदण्ड्योगुणवदगुणापेक्षया विकल्पः ॥ ३६ ॥ **विद्वानिति** । शास्त्रवित्पुनर्ब्राह्मणः पित्रादिस्थापितंनिधिंदृष्ट्वा राज्ञोभागंन दद्यात् । अशेषं गृह्णीयाद्यस्मात्सर्वस्य धनजातस्य ब्राह्मणः प्रभुः इत्यशेषग्रहणार्थवादः । एवंचममायमिति । अयमविद्वद्ब्राह्मणविषयः क्षत्रियादिविषयश्च ॥ ३७ ॥ **यमिति** । यंपुनः चिरंतनस्वामिकंभूमिप्रक्षिप्तंनिधिंलभेत तस्मादर्धंब्राह्मणेभ्योदत्वा अर्धमात्मनोऽर्थागारे प्रवेशयेत् ॥ ३८ ॥ **निधीनामिति** । चिरंतनानांनिधीनामस्वामिकानां अन्येनापि लब्धानांभूमिगतानांच सुवर्णानां अर्धहरोराजा यस्माद्रक्षणादसौ भूमिस्वामीति ॥ ३९ ॥ **दातव्यमिति** । यच्चौरैर्हृतंलोकानांधनंतद्राज्ञा चौरेभ्यश्चाहृतंधनंतेभ्योदेयं । यस्मात् राजा स्वीकुर्वन् चौरस्य यावत्पापंतावत्प्राप्नोति ॥ ४० ॥ **जातिधर्मान्जानपदानिति** । जातिधर्मान् अध्ययनादीन् जानपदांश्चनियतदेशव्यवहारान् अविरुद्धान् एवंवणिक्कर्षणादिगतान् श्रेणीधर्मान् कुलधर्मांश्च प्रतिनियतकुलस्थितान् ज्ञात्वा यस्य यः स्वधर्मस्तंतथा तत्र स्थापयेत् । अतश्चतद्विरुद्धव्यवहारेषु वादिनंनिगृह्णीयात् ॥ ४१ ॥ **यस्मात्स्वानीति** । जातिकुलदेशधर्माण्यनुतिष्ठन्तः सन्तोपि निष्कर्षलेशाविदूरेपि वर्तमानामनुष्याः स्वेस्वे कर्मण्यवस्थिताः परकर्माणिपरलोकस्य प्रियाभवन्ति ॥ ४२ ॥ एवंधनप्रसङ्गेन प्रसक्तानुप्रसक्तिकयाभिधायाधुना प्रकृतमाह ॥ **नोपादयेत्स्वयंकार्यंराजानान्यस्यकस्यचिदिति** । यद्यपि पश्येत्कार्याणि कार्यिणामित्युक्तंभवति तथापि तदाक्षेपान्तरेण ऋणादानादिषु राजकर्तव्यसाहसाधिरक्षणवर्जितेषु राजा स्वयमुपजापेन व्यवहारान्नोत्पादयेत् । नापि राजाधिकृतः स्वयमुत्पादयेत् तथाप्रत्यर्थिनामपि तदा वेदितव्यंकार्यार्थंकेनापि प्रकारेण रागद्वेषादिना नोपेक्षेत ॥ ४३ ॥ **यथेति** । यथा मृगस्यविद्धस्यसतोदृष्टिनष्टस्य पदंव्याधोरुधिरस्रावबिन्दुदर्शनेन नयति तथा राजानुमानप्रमाणेन धर्मस्य गतिंनयेत् । विद्वद्भिर्धर्मप्रधानैर्द्विजातिभिर्यच्चाशास्त्राविरुद्धमासेवितं तद्देशकुलजातीनामत्ररूपंकल्पयेत् । वादिवाद्याशयग्रहणाय यत्नातिशयंकुर्यात् इत्येवमर्थम् ॥ ४४ ॥ **सत्यमिति** । व्यवहारकर्मप्रवृत्तोराजा सत्यंदृष्टादृष्टसुखहेतुतया संपश्येत् । अर्थंच सारासारत्वेन आत्मानंच सदसत्कर्मनणादेशंच समनन्तरराजान्तरविहारं कालंच जीवितसंबन्धमतिक्रान्तबलंरूपंचेदंव्याधिजराभोज्यमायं लोभादिनास्खलनार्थंसंपश्येत् ॥ ४५ ॥ **सद्भिरिति** । एवंच विरुद्धंव्यवहारेषु वादिनंगृह्णीयादिह च सद्भिराचरितमित्युपादानादिदं सदाचारविषयं जातिजानपदाद्येतत् पुनः सदाचारव्यतिरिक्तधर्मविषयम् ॥ ४६ ॥ एवंसकलव्यवहारसाधारणपरिभाषात्मकमुक्त्वाऽधुना ऋणादानाद्यधिकृत्याह **अधमणार्थसिद्ध्यर्थमिति** । **दापयेद्धनिकस्यार्थमधमर्णाद्विभावितं** ॥ अधमर्णेन धनग्राहिणा गृहीतंतत्प्राप्त्यर्थंधनंस्वामिना राज्ञाज्ञापितः सन् वक्ष्य-

माणलेख्यादिनाप्रतिपादितंधनंधनस्वामिनोधमर्णंदापयेदित्युत्तरमपञ्चस्यैवायंसामान्यनिर्देशः ॥ ४७ ॥ **यैर्यैरिति** । उत्तमर्णोयैर्यैरुपायैः स्वधनंलभते तैस्तैरुपायैः अधमर्णंनिगृह्य तमर्थंदापयेत् ॥ ४८ ॥ केः पुनस्तैरित्यतआह **धर्मेणेति** । यदधमर्णस्य प्रयुक्तंधनंतद्धर्मेण प्रीत्या व्यवहारेण वक्ष्यमाणेन छलेनोपाधिपूर्वकंप्रतिद्रव्यग्रहणेनाचरितेनाभोजनादिना बलेन गृहावरोधादिनापञ्चममेनोत्तमर्णंसाधयेत् ॥ ४९ ॥ **स्वयंयइति** । उत्तमर्णोव्यवहारमन्तरेणैव धर्मादिभिरुपायैर्वा नरैः स्वंराजनिरपेक्षमधमर्णात् धनंसाधयेत् । सआत्मधनंसाधयन् मदनपेक्षंबन्धनादिकृतवानसीति एवंराजा नक्षेप्तव्यः ॥ ५० ॥ **अर्थेविवदमानंतुकरणेनविभावयेदिति** । नाहमस्मै धारयामीत्येवंधने विप्रतिपाद्यमानं अधमर्णंकरणेनालिख्यसाक्षिशपथात्मकेन प्रतिपादितमुत्तमर्णस्य धनंदापयेत् । दण्डलेशंचापह्नवे द्विगुणमपि वक्ष्यमाणाद्दशभागान्न्यूनमपि शक्त्यपेक्षया दापयेत् ॥ ५१ ॥ **अपह्नवइति** । **अभियोक्तादिशेद्देशंकरणंवासमुद्दिशेत्** ॥ अधमर्णस्यदेहीत्युत्तमर्णस्य धनमित्येवं सभायांप्राड्विवाकेनोक्तश्च नधारयामीत्येवमपलापे सत्याक्षेपकोधग्रहणदेशं तत्तस्य साक्ष्युपन्यासाद्यपह्नवत्वात्करणंशंसेत् ॥ ५२ ॥ **अदेशंयश्चदिशतिनिर्दिश्यापह्नवतिचेति** । **अपदिश्येति** । **असंभाष्येति** । **ब्रूहीति** । अभियोक्ता दिशेदित्युक्तंतत्र योऽर्थी तथाविधंदेशमपह्नवादिकंनिर्दिशति यत्र दानग्रहणे न संभाव्येते अधमर्णस्यतत्रातदानीतत्रावस्थानंसंभवतीति यश्चादेशादिकंनिर्दिश्य न तन्मया निर्दिष्टमित्येवंपश्चादपजानीते योवा पूर्वपश्चादुक्तानर्थान् परस्परविरुद्धान्नावगच्छति यश्चानेन मम हस्तात्सुवर्णंगृहीतमित्येवंनिर्देष्टव्यं निर्दिश्य एतत्पुत्रेण गृहीतमित्येवमादिना पुनरपसरति योवा प्रतिज्ञाकालेोपन्यस्तमर्थं कस्मात्पुनस्तथाराम्यादौदानग्रहणंकृतमित्येवमादिरूपेण पूर्वपक्षविस्तारकाले प्राड्विवाकेन सम्यक् पृष्टःसन्नन्तर्धत्ते यश्च संभाषणानर्हे उपह्वरादौ देशे साक्षिभिः परस्परंभाषते यश्च साक्षिप्रश्नंक्रियमाणंनोगच्छति वा सभान्तःप्रतिवादिसंनिहिते हठादुत्क्रुत्य गच्छति यथाख्यिन्पूर्वपक्षे किंब्रूहीत्युक्तउत्तरंच नब्रूयात् योवा प्रतिज्ञातंसाक्षिभिर्न विभावयेत् पूर्ववासाक्षिगतंन जनीयात् स्वगतत्वयश्चाधरोत्तराणि त्यक्तत्वात्सतस्माद्यवहाराद्धीयते ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ **साक्षिणइति** । साक्षिणोत्रमम विद्यन्ते इत्युक्ता ब्रूहि तानित्युक्तोयस्मान्नब्रूयात्तंपूर्वोक्तैरेभिः पराजयकारणैः धर्मनिर्णयप्रवृत्तः प्राड्विवाकोजितोयमिति कथयेत् ॥ ५७ ॥ **अभियोक्तेति** । योर्थी सद्यएव पूर्वपक्षंन ब्रूयात् तदा धर्मव्यतिक्रमतारतम्यापेक्षयावधार्हीदण्डनीयश्चस्यात् । आक्षिप्तःपुनःपक्षत्रयेयदि नब्रूयात्तदा धर्मविषये पराजितोऽन्याय्यप्रवृत्तत्वेनाधार्मिकत्वात् ॥ ५८ ॥ **यइति** यः प्रत्यर्थी यत्परिमाणंधनमपजानीते यत्परिमाणंवा धनमर्थी मिथ्या कथयति अधर्मप्रवृत्तौ तत्पावपह्नुताम्मिथ्योक्ताच्च धनात् द्विगुणंदण्डार्थंदापनीयः । अधर्मज्ञावितिवचनादिदमत्यन्ताभिनिवेशादिप्रवृत्तविषयम् । अभिनिवेशेत्वपह्नवे तद्द्विगुणमपि दशकंशतं वक्ष्यति ॥ ५९ ॥ **पृष्टइति** । प्रत्यर्थी धनार्थिनोत्तमर्णेन कृतराजपुरुषकर्षणादिपरिभावः प्राड्विवाकेन पृष्टोयदावधारयामीत्येवमपह्नवानोभवति तदा राजाधिकृतब्राह्मणसमक्षंयद्यत्यन्तन्यूनैस्ततः त्रिभिःसाक्षिभिः तत्रधनार्थिना भावनीयः ॥ ६० ॥ **याइति** । यथाविधाः साक्षिणऋणादानादिव्यवहारेषु उत्तमर्णादिभिः कर्तव्याः तथाविधान्कथयिष्यमि यथा च तैःसत्यंकर्तव्यंतमपि प्रकारमभिधास्यामि ॥ ६१ ॥ **गृहिणइति** । गृहस्थाः पुत्रवन्तः तद्देशाभिजनाःक्षत्रियवैश्यशूद्रजातीयाअर्थिनिर्दिष्टाः सन्तः साक्षित्वयोग्याभवन्ति । तेपि गृहादिपरिभवभयात्तान्यथाब्रुवते । ननु ये कोपवत्वादानादनपेक्षेव्यवहारे वाग्दण्डपारुष्यादौ पुनः साक्षेपउक्तगृहस्थादिव्यतिरिक्ताअपि भवन्ति ॥ ६२ ॥ **आप्ताइति** । सर्ववर्णानांव्यवहारेष्वसंवादिनः

सर्वधर्मशास्त्रज्ञालोभरहिताः साक्षिणः कार्याः । एतद्विपरीतान् पुनर्वर्जयेत् इत्यर्थः । सिद्धस्य तु शब्दाभिधानं दण्डार्थम् ॥ ६३ ॥ नेति । साक्षिणोभयलोभरागद्वेषस्मृतिभ्रंशादिनान्यथाभिधानाशङ्कायांन कार्याः । ऋणाद्यर्थसंबन्धिमित्रवैरकृतकौटसाक्षिव्याधिमूर्च्छितमहाव्याधिकादूषितान कार्याः ॥ ६४ ॥ नसाक्षीति । राजानन्तत्वाघवहारदृष्टत्वाच्च शास्त्रधर्मेण च प्रष्टुमशक्यत्वात् न साक्षी कार्यः । सूपकारनटादयश्च वेदसंन्यासिनोगृहस्थएते धर्मपरान कार्याः नटादयश्च प्रायेणार्थपराःस्वकर्मप्रस्ताश्च व्यग्राश्च ते न कार्याः । श्रोत्रियोब्रह्मचारितापसभिक्षवश्च लिङ्गस्थाः सङ्गवर्जितान कार्याः । श्रोत्रियग्रहणादध्ययनानुष्ठानरहितस्य ब्राह्मणस्य न निषेधः ॥ ६५ ॥ नाध्यधीनइति । अध्यधीनोगर्भदासोत्यन्तपरत्वान्न कार्यः । न वक्तव्यसर्वकर्मदोषाद्गर्हणीयः यःकुत्सादितरतएव वचनादिदस्युर्भृतकसत्युपदासइतिकर्माणीति नैरुक्तात्सोपि पारतन्त्र्यान्न कार्यः । तस्करस्य तथाभिधास्यमानत्वात्प्रतिषिद्धकर्मकृदनास्वासात् न वृद्धोतिक्रान्तव्यवहारकत्वात् । नशिशुः अव्यवहारकत्वात् । एकोपि ननाशप्रवासाशङ्कया तस्यष्यवैरिति निषेधसिद्धौ कस्यांचिदवस्थायांद्वयोरभ्यनुज्ञानार्थंवचनम् । अन्त्यश्चाण्डालादिः धर्मानभिज्ञत्वात् । विकलेन्द्रियउपलब्धिवैकल्यात् ॥ ६६ ॥ नार्त्तइति । आर्त्तोबन्धुविनाशादिना मत्तोमद्यादिना उन्मत्तोभूताद्याविष्टः क्षुधापिपासया चाक्रान्तः श्रान्तोध्वगमनादिखिन्नः कामाक्रान्तअत्यन्तक्रोधबुद्धिवैकल्यात् नकार्याश्चौराअधार्मिकत्वात् ॥ ६७ ॥ स्त्रीणामिति । स्त्रीणांस्त्रियः साक्षिणोभवन्तीति अन्यागोचररहस्यप्रायः स्त्रीकार्यविषयमिदम् । तत्र पुंसःसाक्षित्वेकोयस्यान्नगोचरइति नित्याभिधानाशङ्का स्यात् । अन्यत्र ऋणादानादिव्यवहारे तासांपूर्वोक्ताएवसाक्षिणो भवन्तीत्येवंद्विजानामित्येवमादावपि द्रष्टव्यम् । द्विजानांब्राह्मणादीनांसमानजातिगुणाद्विजाः शूद्राणांसाधवः शूद्राः चाण्डालादीनांतज्जातीयाएव भवन्ति ॥ ६८ ॥ अनुभावीति । येन गृहाभ्यन्तरे रत्नादिचौरकृतोपद्रवे शरीरोपघाते चाततायादिभिः क्रियमाणे ऋणादानादिस्वस्थकार्यवशाच्चोक्तसाक्षिसंपादनाय शक्य यःकश्चिदुपलब्धवान् सवादिनांसाक्षी भवति ॥ ६९ ॥ स्त्रियेति । अन्तर्वेश्मादौ मनुष्याभावे सति स्त्रीबालवृद्धशिष्यबन्धुदासकर्मकराअपि साक्षिणोभवन्ति ॥ ७० ॥ नन्वस्थिरबुद्धित्वादिकारणावगमे स्त्र्यादीनांसाक्ष्यंनिषिद्धमतोत्रापि कथंतद्वचनान्निश्चयइत्यतआह बालवृद्धातुराणामिति । बालवृद्धव्याधितानां अप्लुतमनसांच मत्तोन्मत्तादीनां अनृतंवदतां अस्थिरात्वाग्भवत्यतस्तान्साक्ष्ये अनुमानेन बाह्यैर्विभावयेल्लिङ्गैरिति जानीयात् ॥ ७१ ॥ साहसेष्विति । वस्त्रपाटनाग्निदानादिसर्वेषु साहसेषु चौर्यस्त्रीसंग्रहणवाग्दण्डपारुष्येषु च मृहस्थपुत्रधनादिना साक्षिणोन परीक्षेत । बालार्थसंबन्धादीनांपुनरनुमानपरीक्षा न निषिध्यते । तथा सति नन्वनिश्चयभावः बालवृद्धातुराणांचेत्यादेश्चोक्तत्वात् ॥ ७२ ॥ यत्रार्थिप्रत्यर्थिनोसाक्षिणस्तत्र बहुत्वमिति । साक्षिणः सर्वेषु अधिगतानांपरस्परविरुद्धभावे सति बहुभिः यदुक्तं तदेव निर्णयार्थत्वेन प्राड्विवाकोगृह्णीयात् । समेषु-तूभयोरुक्तवत्सु गुणवतःप्रमाणीकुर्यात् । गुणवतांविप्रतिपत्तावुभयत्रगुणवत्सुब्राह्मणान् प्रमाणीकुर्यात् ॥ ७३ ॥ समक्षदर्शनादिति । चक्षुर्ग्राह्ये साक्षाद्दर्शनात् श्रोत्रग्राह्ये च साक्षात् साक्ष्यंसिध्यति तत्र साक्षी सत्यमभिवदन्धर्मार्थाभ्यां न मुच्यते सत्यवचनधर्मोत्पादाद्दण्डाभावः ॥ ७४ ॥ साक्षीति । साक्षोदृष्टश्रुतविपरीतं ब्राह्मणसभायांविरुद्धंवदन्नधोमुखोनरकंव्रजति । परलोके धर्मान्तरजनकात् स्वर्गादेस्तत्पापप्रतिबन्धे सति प्रतिहीयते ॥ ७५ ॥ यत्रेति । त्वंमेसाक्षी स्याइत्येवंनिबद्धोपि यत्र किंचितऋणादानादि पश्येद्वाक्पारुष्यादि शृणुयात्तत्रापि पृष्टः सन् साक्षी नद्यर्थोपलब्धंकथयेत् ॥ ७६ ॥ एकोलुब्धस्त्वसाक्षीति । लोभ-

वानेकः साक्षी न भवत्येवंचालुब्धोत्यन्तगुणवान् कस्यांचिदवस्थायां एकोभवति। स्त्रियश्चस्थिरचापल्यात् बह्व्योऽपि अर्थशौचयुक्तापि साक्षिण्योन भवन्त्येवं ऋणादानादौ स्वस्थे व्यवहारे आत्ययिकेतूक्तं स्त्रियोऽप्यसंभवे कार्यमित्येवमन्यतोपि ये यैः अशुच्यादिभिर्दोषैः मामास्तेपि स्वस्थव्यवहारे साक्षिणोन भवेयुः ॥ ७७ ॥ स्वभावेनेति । असाक्षिणः स्वाभाविकंसत्यरूपंब्रूयुः तद्व्यवहारनिर्णयार्थंस्वाभाविकात् पुनः यदन्यकारणार्थंविरुद्धंब्रूयुस्तन्निष्प्रयोजनमतश्चनग्राह्यम् ॥ ७८ ॥ सभान्तरिति । सभामध्यंसाक्षिणः संप्राप्तान् अर्थिप्रत्यर्थिसमक्षंराजाधिकृतोब्राह्मणः प्रियंकुर्वन्वक्ष्यमाणप्रकारेण पृच्छेत् ॥ ७९ ॥ यद्दिति। असम्यक् वस्तुह्यनयोरर्थिप्रत्यर्थिनोर्यत्परस्परंवृत्तंजानीध्वे तत्सर्वंसत्येन कथय । तत् युष्माकमत्र साक्षाद्द्रष्टव्यम् ॥ ८० ॥ सत्यमिति । साक्ष्यकर्मणि सत्यंकथयन् सर्वोत्कृष्टान् ब्रह्मलोकादीन् इहलोके चाप्युत्कृष्टां ख्यातिंप्राप्नोति । यस्मादेषा सत्यात्मिका वाक् प्रजापतिना पूजिता ॥ ८१ ॥ साक्षीति । यस्मात्साक्ष्यकर्मणि साक्ष्यसत्यंकथयन् वरुणसम्बन्धिभिः पाशैः सर्परज्जुभिः परवशः सन् जन्मशतंबाध्यतेऽत्यर्थंतस्मात्साक्ष्ये सत्यमेववदेत् ॥ ८२ ॥ सत्येनेति । यस्मात् सत्येन अन्यस्मादपि पापकर्मणः साक्षी मुच्यते । धर्मश्चास्य सत्याभिधानेन वृद्धिमेति । तस्मात्सर्ववर्णविषये साक्षिभिः सत्यंवक्तव्यम् ॥ ८३ ॥ आत्मेति । यस्मात् शुभाशुभकर्मप्रवृत्तस्यात्मनः चात्मवै साक्षी तथात्मैवात्मनः शरणं तस्मादेनस्वमात्मानंनराणांमध्यादुत्तरंसाक्षिणमसत्याभिधानेन मावज्ञासीः केन ममतेद्दृष्टमित्येवंबुद्धिंकृत्वा यतआत्मातवात्र सर्वसाक्ष्युत्तमः साक्षीविद्यते एकस्यैवात्मनः कर्मकर्तव्यापदेशोऽसत्यनिवृत्त्यर्थः ॥ ८४ ॥ मन्यन्तेऽमीति । तांश्चदेवाःप्रपश्यन्तिस्वश्चैवान्तरपूरुषः ॥ अस्मान्न कश्चित्पश्यतीत्येवंपापवृत्ताबुध्यन्ते न पुनर्वक्ष्यमाणादेवाः पश्यन्ति स्वश्चान्तरात्मा पश्यति ॥ ८५ ॥ द्यौरिति । द्युलोके पृथिव्युदकचन्द्रादित्याग्निवायुरात्रिसंध्याधर्माणां इतिहासादिदृष्टा विग्रहवद्रूपसद्भावाएतेत्द्दयायतनश्चात्मा यमश्च सर्वशरीरिणामाचरितंजानन्ति ॥ ८६ ॥ देवब्राह्मणसान्निध्यइति । आलेख्यादिविन्यस्तोक्तदेवसन्निधाने ब्राह्मणानांसमक्षंसभ्यानांयत्नकरणेन सत्यरूपतामापन्नंसाक्ष्यंद्विजातीन् प्रयतानुत्तराभिमुखान् पूर्वाभिमुखान्वा प्रयतः सन् प्राड्विवाकः पूर्वाह्णकाले तु पृच्छेत् ॥ ८७ ॥ ब्रूहीति । गोबीजकाञ्चनैर्वैश्यंशूद्रंसर्वैस्तुपातकैः ॥ ब्रूहीत्येवंशब्दमुच्चार्य ब्राह्मणंपृच्छेत् । सत्यमित्येवमभिधाय क्षत्रियम् । गोबीजसुवर्णापहारेयत्पातकंतवानृतवदनेस्यात् इत्येवंवैश्यम् । शूद्रंवक्ष्यमाणैः पापप्रतिपादकैः शब्दैः पृच्छेत् ॥ ८८ ॥ ब्रह्मघ्नानांस्मृतालोकायेचस्त्रीबालघातिनामिति । ब्राह्मणस्त्रीबालघातिनांये नरकादिलोकाऋषिभि स्मृताः ये च मित्रापकारिणोये च कृतापकारिणः तेतव च मिथ्यावदतोभवेयुः ॥ ८९ ॥ जन्मप्रभृतीति । हे कल्याण बाल जन्मप्रभृति यत्किंचित्पुण्यंकृतंतत्सर्वंतवसंबन्धि शुनः फलंब्रूयात् यदि त्वमसत्यंकथयसि ॥ ९० ॥ एकइति । हे भद्र एकएवाहंभवान् शरीरमात्रात्मकएव । अहं इत्येवंरूपंरूपमात्मानंयस्त्वंबुध्यसे तन्मैवंमंस्थाः । यस्मादेषपुण्यपापानांद्रष्टा मुनिस्वरूपतोऽत्यन्तशुद्धरूपस्तवहृदयेनित्यमवस्थितः ॥ ९१ ॥ यमइति । सर्वभूतमयः सविता विवस्वत्पुत्रोयमाख्योदेवोऽयंलोकतः कर्णगोचरीभूतत्वात्तव हृदये परिस्फुरति तेन सह यदि तवाधर्मकारित्वाभावाद्विवादोनास्ति तदापापनिर्हरणार्थंमागङ्गांमाकुरुक्षेत्रंयासीः ॥ ९२ ॥ नग्नइति । अन्धःशत्रुगृहं गच्छेदिति । यः साक्ष्यमनृतंब्रूयात्सनग्नः कृतकेशमुण्डनः परिभावादन्धः क्षुत्पिपासार्तः खर्परेणयुक्तोभिक्षार्थंशत्रुगृहं गच्छेदिति साक्षिमात्रविषयत्वेनैतदुच्यते न शूद्रप्रश्नार्थंमध्यपुरुषानिर्देशादेते शपथाः ॥ ९३ ॥ अवागिति, योधर्मनिश्चयनिमित्तंपृष्टः सन् असत्यंप्रश्नंब्रूयात् सपापी अधोमुखोनिरान्ध्रे तमसि नरके पतेत ॥ ९४ ॥ अन्धइति

यः सभांप्रामः तस्त्वस्य विप्रलब्धमुखलेखभ्रान्त्याश्चदृष्टंभाषते सोन्धइव सकण्टकान् मत्स्यान् भक्षयति । सुखहेतोर्वर्तमानोदुःखमेवातिशयंतदुपार्जयति ॥ ९५ ॥ **यस्येति** । यस्य वदतः शुभाशुभंसत्यंवदति उतानृतमित्येवंसाशङ्केन भवत्यपि निश्चितमेवार्थंसत्यंवक्तीत्येवंनिर्विशङ्कस्तस्मात्पुरुषादन्यंप्रशस्यतरंपुरुषंदेवानमन्यन्तइत्यर्थः ॥ ९६ ॥ **यावन्तइति** । यस्मिन्पश्वादिनिमित्ते साक्ष्ये अनृतंब्रुवन् यत्सङ्ख्याकान् मित्रादिबान्धवान् नरकेण योजयति तस्मिन् साक्ष्ये तत्सङ्ख्याकान् क्रमेणसङ्ख्ययामयोच्यमानान् शृणुत इत्यतश्च नरकपातनिमित्ताचरणस्तस्यापि नरकंभवतीत्युक्तं भवति तत्रचानृतवादिबान्धवाः स्वार्जितकर्मचरान् नरकमुपयान्ति । अकृताभ्यागमकृतविप्रणाशचोद्यापत्तिर्यथाविषादिना कश्चित्किञ्चिद्व्यापादयति तत्र प्राक्जन्मार्जितकर्मवशतोऽसौ तथा म्रियते यथायमपितंनिमित्तभावमुपगच्छन् फले चात्रनिरालंबनार्थवादमात्रपर्यवसयितायुक्ता अप्रमादाभिधाइति ॥ ९७ ॥ **पञ्चेति** । पशुविषयेऽनृते पञ्चबान्धवानरकेणयोजयति दशगोविषये शतमश्वविषये सहस्रंपुरुषविषये ॥ ९८ ॥ **हन्तीति** । हिरण्यविषये अनृतंवदन् जातान् पित्रादीन् अनुजातांश्च पुत्रादीन् आत्मानृतत्वात् नरके योजयति । भूमिविषये चानृतंवदन् सर्वप्राणिजातंनरके योजयति तस्माद्भूमिविषयेऽनृतंन वदेत् ॥ ९९ ॥ **अप्स्विति** । उदकविषये अनृते स्त्रीणांभोगेषु विषये अब्जेषु पद्मरागादिषु पाषाणमयेषु च सर्ववैडूर्यादिषु अनृते भूमिवद्दोषमाहुः सर्वंहन्तीति ॥ १०० ॥ **एतानिति** । एतान् सर्वाननृतभाषणे दोषान् ज्ञात्वा दृष्टश्रुतानतिक्रमेण सर्वमेतत् तत्त्वतोब्रूहि ॥ १०१ ॥ **गोरक्षकानिति** । गोरक्षकवाणिज्यसूपकारादिकारुकर्मदास्यप्रतिषिद्धजीविनोब्राह्मणान् साक्षिप्रश्ने शूद्रवत् पृच्छेत् ॥ १०२ ॥ **तद्वदन्निति** । तदेतत्साक्ष्यमन्यथा जानन्नपि मनुष्योधर्मेण दयया हेतुभूतयोपाधिरहितोव्यवहारेष्वन्यथा ब्रुवन् न स्वर्गात् लोकात् भ्रश्यति यस्मादेतन्निमित्तविशेषाणां अनृताभिधानं एतांदैवसंबन्धिनींवाचंमन्वादयोवदन्ति । अन्येतुप्राड्विवाकविषयमिदंव्याचक्षते प्राड्विवाको गोरक्षकादिषु ब्राह्मणेषु सच्छूद्रप्रश्नंकुर्वन्नधर्महानिंप्राप्नोति ॥ १०३ ॥ कः पुनस्तदनृतंवक्तव्यमित्यतआह **शूद्रविट्क्षत्रविप्राणांयत्रचैवभवेद्वधइति** । यत्रतत्प्राणसंरक्षणेनेदंचात्यन्तधार्मिकप्रमादस्खलितपुरुषविषयंन त्वत्यन्ताधार्मिकविषयम् तथा च गौतमोनानृतवचने दोषोजीवनंचेत्तदधीनंनतुपापीयसोजीवनमित्यादितंच विषये प्रमाणान्तरेण राजा निर्णयंकुर्यात् न साक्षिभिः न प्रमाणान्तरान्न चैवानुमानादिनात्यन्तंसाक्षिपरीक्षांकुर्यात् । न जातु ब्राह्मणंहन्यादितिवचनात् कथंब्राह्मणस्य वधआपतेदित्याशङ्कनीयं कृतदण्डत्वाद्राज्ञः कथंसंभवाद्व्यवहारोन्यत्रापि चैवंविधे विषयेऽनृतस्येष्यमाणत्वात् वधस्यामङ्गलत्वात् शूद्रादिक्रमेण निर्देशः ॥ १०४ ॥ **वाग्दैवतैरिति** । वाग्वै सरस्वतीतिश्रुतेर्वाक्सरस्वत्योरैक्याद्वाग्देवताकैश्चरुभिः सरस्वतींते साक्षिणोऽनृताभिधायिनस्तस्यासत्यस्ययत्पापंतस्य प्रकृष्टांसंसिद्धिंकुर्वाणायजेरन् । अत्रैके साक्षिणः अपिकपिञ्जलवच्चरुत्रयं आहुस्तदसदेवश्चेद्वर्षे बहवोब्राह्मणायजेरन् इति । इत्येतत्प्रायश्चित्तंकर्तृबहुत्वापेक्षया चरुभिरितिबहुवचनं व्रात्यस्तोमवदेषांसंपाद्य यागाश्चोत्पादिताः । अत्र प्रायश्चित्तस्य प्रकरणोत्कर्षोलाघवार्थं तत्रहि क्रियमाणे विट्क्षत्रियविषयानृताभिधाने वृद्धएततकर्तव्यंस्यात् ॥ १०५ ॥ **कूष्माण्डैरिति** । यद्देवादेवहेडनमित्येभिर्मन्त्रदेवताकैर्घृतमग्नौ परिस्तरणादिहोमविधिना जुहुयात् । उदुत्तमंवरुणदेवताकया ऋचा आपोहिष्ठेत्यनेनाब्देवताकेन जुहुयात् ॥ १०६ ॥ **त्रिपक्षानिति** । अव्याधितः साक्षी ऋणादानादिव्यवहारेषु पक्षत्रयंयावत् यदि साक्ष्यंन दद्यात्तदा तद्विवादा

(१) कृत=उप (गो० २, ५)

स्पदीभूतंसर्वंऋणमप्युत्तमर्णस्य दद्यात् । तस्माच्च ऋणात्सर्वस्माद्दशमंभागंराज्ञोदण्डंदद्यात् ॥ १०७ ॥ यस्येति । यस्य साक्षिणउक्तसाक्ष्यस्य समाहस्य मध्यान्निमित्तान्तरंविनापि व्याध्यग्निबन्धुदाहमरणानामन्यतममुत्पद्यते सदैवप्रतिपादितमिथ्याभावात्तद्दिशंदण्डंदाप्यः ऋणंच ॥ १०८ ॥ असाक्षिकेष्विति । अविद्यमानसाक्षिके परस्परंविवदमानयोः वादिनोस्तत्त्वेन सत्यं अलभमानः प्राड्विवाकः शपथेन वक्ष्यमाणेन सत्यमुद्धरेत् ॥ १०९ ॥ महर्षिभिरिति । महर्षिभिरगस्त्यादिभिर्विशस्तैर्म्याद्दैवैश्चन्द्रादिभिः संदिग्धकार्यनिर्णयार्थंशपथाः कृताः । वसिष्ठोपि अनेन पुत्रशतंभक्षितमित्येवंविश्वामित्राकृष्टःपिजवनापत्ये सुदासे राजनि परिशुद्ध्यर्थंशपथंचकार । न वृथाशपथंचकार ॥ ११० ॥ नेति । स्वल्पेपि कार्ये विद्वान् मिथ्याशपथंन कुर्यात् । मिथ्याशपथं कुर्वन् इहलोकपरलोकयोरकीर्तिनरकावाप्य नश्यति ॥ १११ ॥ कामिनीष्विति । बहुभार्यस्यनान्यामहंकामये त्वंमेप्राणेश्वरीत्येवंविधिविषये न च त्वयान्यावोढव्या इत्येवंविधे गवार्थंघासापहारे वा संभवादुपायन्तरएवंशास्त्रितामिहोमार्थंचर्वपहारे ब्राह्मणरक्षायांच धनदानादिविषयायांमिथ्याशपथे पातकंन भवति ॥ ११२ ॥ सत्येनेति । ब्राह्मणंवादिनंसत्यशब्दोच्चारणेन शापयेत् । क्षत्रियंच वाहनायुधंनिष्फलंस्यादित्येवम् । वैश्यंच गोबीजकाञ्चनादीनि ते निष्फलानि स्युः इत्येवम् । शूद्रंसर्वाणि ते पातकानिस्युरित्येवंशापयेत् ॥ ११३ ॥ कार्यगुरुत्वापेक्षयाच अग्निमिति । अग्निवर्णंसुवर्णपिण्डंशूद्रमश्वत्थपत्रावृतहस्तंयाज्ञवल्क्याद्युक्तयेतिकर्तव्यतया समपदानि भावयेत् । अप्सुवागृहीत्वान्तर्जलंविशेदित्येवमादितदेतद्युक्तयेतिकर्तव्यतयैव निमज्जयेदथवा पुत्राणांदाराणांच एतस्य शप्यइत्येवं पृथगेकैकस्य शिरांसिस्पर्शयेत् ॥ ११४ ॥ यमिति । दीप्तोग्निर्यम दहति आपश्चनोप्लवयन्ति न च समनन्तरमेव निर्निमित्तांमुर्छावस्थांप्राप्नोति सशपथेषु वृद्धोविज्ञेयः ॥ ११५ ॥ अतःपुराकृतार्थवादमाह वत्सस्येति । यस्मात् पूर्वस्मिन् काले च समाप्ते ऋषे ब्राह्मणोसिशूद्रापुत्रइत्येवंवैमात्रेयेणकनीयसाभ्रात्राकृष्टस्य नैतदेवमिति शपथार्थं अग्निप्रविष्टस्य अग्निःसर्वस्य जगतः सदसत्कर्तव्येषु चारभूतः सत्येन हेतुभूतेन लोममात्रमपि न दग्धवान् ॥ ११६ ॥ यस्मिन्निति । यस्मिन्यस्मिन्व्यवहारे साक्षिभिः अनृतमुक्तंस्यात् तत्तत्कार्यमप्यकृतमेव प्राड्विवाकोनिवर्तयेत् । यदपि कृतंदण्डपर्यन्तंतदपि पुनः परीक्षयेत् ॥ ११७ ॥ लोभादिति । लोभविपरीतज्ञानभयमैत्रीकामक्रोधादज्ञानमौर्ख्यैः बालभावात्साक्ष्यमसत्यमुच्यते इति दण्डवैचित्र्यार्थोऽयमुपन्यासः ॥ ११८ ॥ एषामिति । एषांलोभादीनामन्यतमस्मिन् निमित्ते सति योऽसत्यंसाक्ष्यंब्रूयात तस्य दण्डविशेषात्क्रमेण वक्ष्यामि ॥ ११९ ॥ लोभादिति । लोभेनानृताभिधाने सति पणानांवक्ष्यमाणानांसहस्रंदण्ड्यः । मोहेन प्रथमसाहसंवक्ष्यमाणम् । भयेनवक्ष्यमाणसाहसौद्वौ । मैत्र्यात्प्रथमसाहसंचतुर्गुणम् ॥ १२० ॥ कामादिति । कामेनानृतंवदन् प्रथमसाहसंदशगुणंदण्ड्यः । क्रोधेनोत्तमसाहसंवक्ष्यमाणंत्रिगुणम् । अज्ञानेन द्वे शते पणे संपूर्णे मौर्ख्येण शतमेव च ॥ १२१ ॥ एतानिति । शास्त्रव्यवस्थायाअपरिलोपार्थंव्यवस्थायाश्चोत्पत्तिवारणार्थं एतान् कूटसाक्षिविषये चिरंतनैर्विद्वद्भिः मोक्तान् दण्डान् मन्वादयः प्राहुः । एतच्च सकृद्धिकरणे ॥ १२२ ॥ कूटसाक्ष्यमिति । क्षत्रियादीन् त्रीन्वर्णान् कृतकूटसाक्ष्यान् पूर्वोक्तेन दण्डेन दण्डयित्वा धर्मप्रधानोराजा राष्ट्रान्निर्वासयेत् । ब्राह्मणंपुनर्दण्डयित्वा नग्नीकुर्यात् ॥ १२३ ॥ दशेति । हैरण्यगर्भोमनुर्दशदण्डस्याश्रयानुक्तवान् ये क्षत्रियादिवर्णत्र-

(१) चर्व=दार्व (गो० २, ५)

यविषये भवन्ति । ब्राह्मणंपुनर्महत्यपि अपराधे अक्षतशरीरंदेशान्निर्वासयेत् ॥ १२४ ॥ **उपस्थमिति** । लिङ्गादेतानि दण्डस्थानानि ततस्तदङ्गापराधे अपराधभूयिष्ठापेक्षया ततदङ्गापराधताडनादिकर्तव्यम् । अल्पापराधे तु धनदण्डइति ॥ १२५ ॥ **अनुबन्धमिति** । पुनःपुनरिच्छातोऽपराधकरणमवलोक्य ग्रामारण्यादि चापराधस्थानंदिवाराच्यादिकंचापराधकालं सम्यगवेक्ष्य सारंचापराधकारिणोधनशरीरादि सामर्थ्यमपराधंच गुरुलघुभावेनालोक्य दण्डनीयेषु दण्डंकुर्यात् इतीदमुक्तानुक्तदण्डशेषभूतम् ॥ १२६ ॥ **अधर्मदण्डनमिति** । यस्मादनुबन्धाद्यनपेक्ष्य दण्डनमिह लोके यशसोजीवनख्यातेर्नाशमनृतस्य च परलोके समनन्तरनरकपातात्कर्मान्तरार्जितस्वर्गप्रतिबन्धकं तस्मात्तत्परिहरेत् ॥ १२७ ॥ **अदण्ड्यानिति** । राजा दण्डानर्हान् दण्डयन् दण्डार्हाश्चोत्सृज्य महदयशः प्राप्नोति नरकंच गच्छति ॥ १२८ ॥ **वाग्दण्डमिति** । न साधु कृतवानसि नैवंभूयः कार्षीः इत्येवंवाग्भिर्भर्त्सनंकर्मभिरधर्मापराधे गुणवतः कुर्यादिति । यदि तु तथा नोपशाम्यति तदा धिग्जाल्म त्वामभिभवति स्तेयंभूयादित्येवमादितस्य कार्यंततोपि यदि तन्मार्गान्न निवर्तते तदा धनदण्डंतृतीयंतस्य कुर्यात् । एवमपि चेन्नावतिष्ठते अतः परंवधताडनाङ्गच्छेदादिरूपं तस्य कुर्यात् ॥ १२९ ॥ **वधेनेति** । यदा पुनस्ताडनाङ्गच्छेदनादिनापि एतान्वशीकर्तुंन शक्नुयात् तदेष्वपराधिषु एतद्वाग्दण्डादि चतुष्टयमपि सर्वंकुर्यात् ॥ १३० ॥ **लोकसंव्यवहारार्थमिति** । ताम्ररूप्यसुवर्णानांपणादिसंज्ञाक्रयविक्रयलोकव्यवहारार्थं पृथिव्यांविशेषेणाभिधास्याम्युपयोगार्थंदण्डादेः ॥ १३१ ॥ **जालान्तरगतइति** । **त्रसरेणवइति** । **सर्षपाइति** । **पलमिति** । **तइति** । **धरणानीति** । गवाक्षादिमविष्टाभिरादित्यरश्मिषु यद्रजोदृश्यते तत्त्रसरेणुः । तेष्टौ लिक्षैका प्रमाणेन विज्ञेया । तालिक्षास्तिस्रोराजसर्षपः । तेत्रयःगौरसर्षपः । तेषट् यवोमध्यमः नस्थूलोनापि सूक्ष्मः । त्रिभिर्यवैः कृष्णालम् । पञ्चभिः कृष्णलैः । माषः । षोडशमाषाः सुवर्णः । चत्वारः सुवर्णाः पलम् । दशपलानि धरणं कृष्णलद्वयंतुलया धृतं रूप्यमाषकोबोद्धव्यः । षोडशरूप्यमयमाषकारूप्यंधरणंपुराणंवोच्यते । राजतोरूप्यसंबन्धीकर्षप्रमाणः ताम्रमयः कार्षापणः इतिविज्ञेयः दशरूप्यधरणानि रूप्यशतमानोबोद्धव्यः चतुर्भिः सुवर्णैर्निष्कप्रमाणेन विज्ञेयः ॥ १३२ ॥ १३३ ॥ १३४ ॥ १३५ ॥ १३६ ॥ १३७ ॥ **पणानामिति** । सार्धेद्वे शते पणानांप्रथमः साहसोमन्वादिभिः स्मृतः पञ्चपणशतानि मध्यमोविज्ञेयः सहस्रंत्वेवचोत्तमः ततः सहस्रएव ॥ १३८ ॥ **ऋणइति** । देयमयोत्तमर्णस्य ऋणमित्येवं अधमर्णेनसभायां उक्तेसत्यसौ अधमर्णः पणशतात्पञ्चपणाइत्येवंदण्डमर्हति । नकिञ्चिन् अस्मै धारयामि इत्येवमपह्नुतेसति दशकशतं दण्डमर्हति । एतन्मनुस्मृतंदण्डनम् ॥ १३९ ॥ **वसिष्ठविहितामिति** । वसिष्ठोक्तांवृद्धिंधर्मत्वात्धनवृद्धिकरीं वृद्धिजीव्युत्पादयेत् । साकत्यतआह अशीतिभागमिति । शतेप्रयुक्तेमासादुगतात्तस्माच्छतादशीतिभागंवृध्यर्थंगृह्णीयात् ॥ १४० ॥ **द्विकमिति** । पणशताद्वा मासेन द्वौ पणौ पूर्वंवृध्या च जीवन् साधूनां अर्थधर्मः नाधर्मइतिमन्यमानोगृह्णीयात् यस्मात् द्विकंशतंगृह्णन् परस्वादानपापयुक्तोन भवति ॥ १४१ ॥ **द्विकमिति** । ब्राह्मणादिवर्णानांक्रमेण द्विकत्रिकचतुष्कपञ्चशतंसममन्यूनाधिकंमासस्य संबन्धिवृद्धिंगृह्णीयात् ॥ १४२ ॥ **नत्विति** । भोजनार्थंबन्धे दत्ते धनप्रयोगाभवानन्तरीका याव़ृद्धिस्तामुत्तमर्णोन लभते । न च वृद्धिदत्तस्य बन्धस्य द्विगुणीभूतधनकालादूर्ध्वं अव्यवस्थानादन्यत्रबन्धेतनत्वेनार्थमस्ति नापिविक्रयोपिद्विगुणीभूतधनकालादूर्ध्वंसमोक्षणादाधिर्भुज्यतएव अन्यथा धनाप्त्यभावात् ॥ १४३ ॥ **नभोक्तव्यइति** । माभुङ्क्ष्व इति स्वामिवचनमवगणयन् यद्बलाद्धनंभुञ्जीत तथा भुञ्जानोवृद्धि-

नामुयात् यदि भोगेन बन्धः क्षयं यातस्तदा अक्षतबन्धसंबन्धिमूल्येन बन्धस्वामिनं तोषयेदन्यथा बन्धचौरः स्यात् ॥ १४४ ॥ **आधिरिति**। बन्धः प्रीतिभोग्यश्च पदार्थ एतौ द्वौ कालातिक्रमणं नार्हतोपि तु प्राप्ते काले स्वामिना प्रत्याहरणीयौ यस्मात्तस्मात्तौ दीर्घकालमन्यहस्तावस्थितौ आधित्वोपनिधित्वात् साक्ष्याद्यभावेन हारयितुं शक्याविति सुहृदुपदेशरूपतयैवेदं न कदाचिदपि ह्रियते आधिःसीमेत्यपहारस्य वक्ष्यमाणत्वात् ॥ १४५ ॥ **संप्रीत्येति**। दोग्ध्री गौरुष्ट्रो वहंश्चाश्वएते प्रीत्या अन्योन्यं भुज्यमानान कदाचिदपि स्वामिनोपहार्यन्ते। अश्वादिदमनार्थं दमनस्य दीयते संप्रीत्या भुज्यमानानीति सामान्योपक्रमविशेषाभिधानम् ॥ १४६ ॥ **यत्किंचिदिति**। यत्किञ्चिद्धनजातं समक्षमेवान्यैर्दशवर्षाणि भुज्यमानं धनस्वामी तूष्णीं प्रतीक्षते किमेतन्मामैवं भुङ्क्ते इति न प्रतिबध्नाति नासौ तत्पुनर्न्यायेन स्वीकर्तुमर्हति ॥ १४७ ॥ **अजडइति**। निधानस्वामी यदि बुद्धिविकलो न भवति बालो वास्य च तस्मिन्नेव देशे व्यवस्थितस्यान्येन तदीयं भुज्यते तद्धनं व्यवहारेण भग्नं स्वामिनस्तत्र विवादो न भवति। यतो भोक्तैव तद्धनमर्हति। व्यवहारेण भग्नमिति वचनाद्धर्मेण तत्स्वामिन एव सर्वदा स्वमेवं चायं पूर्वशेषश्लोकः ॥ १४८ ॥ **आधिरिति**। बन्धः क्षेत्रग्रामादिमर्यादा बालधनं निक्षेपः प्रीतिभोग्यं दास्यो राजश्रोत्रियधनादि उक्तेन दशवर्षभोग्येन स्वामिनो नापहारयितुं चास्य दशवर्षभोग्यद्रव्यापवादत्वाद्बन्धादीनां चाल्पकालभोग्यत्वेन नेहानन्तुप्रवेशाशङ्काऽस्थानं प्रीत्या भुज्यमानानीति पृथग्वचनम् ॥ १४९ ॥ **यइति**। योवृद्धिदत्तं धनं भोगेनाविनश्यद्रूपं स्वामिनाननुज्ञातो मूर्खो रहसि भुङ्क्ते बलभोगेन भोक्तव्यो बलादवधिरित्युक्तान्तेन तस्य शुद्ध्यर्थमर्धवृद्धिस्त्यक्तव्या ॥ १५० ॥ **कुसीदवृद्धिरिति**। यावृध्यर्थप्रयुक्तधनसंबन्धिनी वृद्धिरति भूयस्यकाले गते सकृदधमर्णादानीता शनैः शनैः मासं प्रत्यब्दं वाऽसौ द्वैगुण्यं नातिक्रामति मूलद्विगुणैव भवति न ततोधिका लभ्यते धान्ये पुनर्वृद्धिप्रयुक्ते सदे वा वृक्षफले लवे वा ऊर्णमये वाहनीये च बलीवर्दादौ प्रयुक्ते भूयस्यपि कालगते सकृदधमर्णादाहृता सती मूलधान्यादिना सह पञ्चगुणतां नातिक्रामति ॥ १५१ ॥ **कृतानुसारादिति**। गृहीतृनृगतमर्थितां विशेषमुत्तमर्णेन विज्ञाय उक्तवृद्धिरधिका वृद्धिः कृता सती यतः शास्त्राद्यासाच नोसिध्यति। प्रतिषिद्धवृद्धिमार्गे किलैनं शिष्टाः प्राहुः। यदि परं शूद्रविषये यदुक्तं पञ्चकं शतं तदसावुत्तमर्णो द्विजातेरादातुमर्हति। शूद्रविट्क्षत्रियद्विजातेरप्यादातुमर्हति ॥ १५२ ॥ **नातिसंवत्सरीमिति**। यदि द्वयोर्वा त्रयाणां वर्षाणां रूपकान् न गृह्णाति ततो ददाति। या तु संवत्सरमतिक्रान्ता वृद्धिस्तां न गृह्णीयात्। अदृष्टां चानुपचितामसंहतो भूतामेकद्विपञ्चाहादिजातां न गृह्णीयात् ॥ चक्रवत् गन्त्र्यादियानप्रयोगे सति या वृद्धिः सा चक्रवृद्धिः। सा पूर्वोक्तवृद्धेरधिकापि स्यादित्येवं नानुज्ञाता सा चार्यस्याभिमता प्रथमनिर्देशान्न विनिहरेदित्येतत्संबन्धाभावाच्चक्रवृद्धिसमारूढइति च वक्ष्यमाणत्वादत एव चेह वृद्धेर्वृद्धिश्चेकवृद्धिरित्येवमादिका चक्रवृद्धिशब्देनोच्यते। अपि तु गन्त्र्याश्रिते वा कालिका प्रतिमासं तु कालिकेति स्मरणान्मासि ग्राह्या। कारिता स्वकृता परस्परापेक्षया वणिक्प्रभृतीनां स्याद्न्येषां पुनः कृतानुसारादधिकेत्युक्तम्। कायिका कायकर्मसङ्ख्यावाच्या स्यात् ॥ १५३ ॥ **ऋणमिति**। योऽधमर्णो धनदानासामर्थ्यात् आनीतं स्यादिति क्रियां कर्तुमिच्छेत् आनीतां वृद्धिं दत्वा करणं लेख्यादि पुनः कुर्यात् ॥ १५४ ॥ **अदर्शयित्वेति**। दौर्गत्याद्वृद्धिहिरण्यमप्यदत्वा तत्रैव पुनः क्रियमाणे लेख्यादौ तदारोपयेत्। यत्परिमाणं किंवृद्धिधनं तदानीं संभवति तद्दातुमर्हति अवशिष्टं करणमारोपयेत् ॥ १५५ ॥ **चक्रवृद्धिमिति**। भाटकपूर्वकं गन्त्र्यादिसनेन गन्त्र्यादिवृद्धिमाश्रित्य उत्तमर्णो देशकालव्यवस्थितस्य गतदे-

(१) धनं=बन्धं (गो० २,५)

शकालविशेषस्तौ देशकालौ देयादेयापरिपूरयंस्तद्दन्त्रीवहनलाभं न प्राप्नोति ॥ १५६ ॥ **समुद्रयानकुशलाइति** । वार्यब्ध्वयानकुशलाअस्मिन् देशे कालेऽस्मिन्नर्थे हिरण्यादिकउद्यमाने अयंलाभइत्येवमादिवेदिनोवणिक्प्रभृतयो-यांवृद्धिंतथाविधविषयेनिरूपयन्ति सा तत्र निश्चयार्थेविज्ञेया ॥ १५७ ॥ **यइति** । **अदर्शयन्मतंतस्ययतेत-स्वधनादृणं** ॥ प्रतिभूः दानकाले मया अयंदर्शनीयइत्येवंधनंप्रयोगकालेऽन्यदा च योयस्याधमर्णस्योत्तमर्णप्रतिभू-त्वेन तिष्ठेत् । सतमधमर्णंतस्मिन् काले उत्तमर्णस्यादर्शयन् स्वधनादृणदानंयतेत ॥ १५८ ॥ **प्रातिभाव्यमिति** । प्रतिभुवा यद्देयंवृथादानंपारितोषिकादि यत्पित्रा देयत्वेनाङ्गीकृतं द्यूतसमाह्वयाभ्यांयज्जितं पित्रा सुरापानादि यच्छु-ल्किनः सुरामूल्यं दण्डशेषंशुल्कशेषंच यत्पितृसंबन्धिपितरिमृते पुत्रोदातुंनार्हति ॥ १५९ ॥ **दर्शनप्राति-भाव्यइति** । योयंप्रातिभाव्यं नपुत्रोदातुमर्हतीतिपूर्वोक्तविधिः सदर्शनप्रतिभूकर्मणिपितृकृते विज्ञेयोदानार्थे-पुनर्यः प्रतिभूः स्थितः तस्मिन्मृते रिक्थभाजोपिदापयेत् किमुतपुत्रान् ॥ १६० ॥ **अदातरीति** । तद्ग्रहणपूर्वकत्वेऽयंप्रतिभूःस्थितइत्येवंविज्ञातप्रातिभाव्यकरणे पुनर्दर्शनत्वप्रत्ययप्रतिभुवि प्रेते सत्यनन्तरंधनप्र-योक्ता केन हेतुना प्रतिभूपुत्राद्धनंप्राप्तुमिच्छेत्किंतस्य प्राप्तिहेतुर्विद्यते उतनेतियतोसौ दानप्रतिभूपुत्रोन भ-वत्यतोप्राप्त्याशङ्का विद्यते । यतस्तु धनग्रहणेपूर्वकंतत्पितादर्शनप्रतिभूर्वास्थितोस्ति तत्पुत्रात्प्राप्त्याशङ्का ॥ १६१ ॥ एवंसंदेहमुपन्यस्येदमाह **निरादिष्टधनइति** । असौ दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा यदि निसृष्टधनोभवति । अत्रप्रतिभूरिदंते विश्वासार्थंधनमित्येवं प्राप्तधनश्च यावत्यसौ प्रतिभूः स्थितः तावत्प्रमाणंतस्यहस्ते दत्तंतदास्वधनादेव त-द्धनंनिरादिष्टपुत्रः प्रकृतं उत्तमर्णायदद्यादिति शास्त्रमर्यादा ॥ १६२ ॥ **मत्तोन्मत्तार्त्तान्यधीनैरिति** । क्षी-बोन्मत्तव्याध्याद्युपहतचित्तगर्भदासबालातिवृद्धैः असंबद्धेन पितृभ्रातृनियुक्तादिव्यातिरेकेण योव्यवहारऋणदानादिकृ-तः नसिध्यति ॥ १६३ ॥ **भाषानसत्याभवतीति** । इदंमया तवानुष्ठेयमित्यादिकापरिभाषालेख्या-द्युपनिबन्धेन यद्यपि स्थिरीकृता भवति तथापि यद्यनादिपारंपर्यायातालोकशास्त्रव्यवहारवर्तिनोधर्माद्बहि-र्भाव्यते । तद्विरुद्धा निरूप्यते तदा सत्या न भवति न तदीयार्थानुष्ठेयम् ॥ १६४ ॥ **योगा-धमनविक्रीतमिति** । उपाधिना ये बन्धविक्रयदानप्रतिग्रहाः क्रियन्ते न ग्रहणादि तान् राजा विनि-वर्तयेत् **कृतानकृतान्कुर्यात्** । तथान्यत्रापि निक्षेपादौ यत्र छद्मार्थंकरणंजानीयान्नवस्तुतोनिक्षेपादिकृतं तत्सर्वं **विनिवर्तयेत्** ॥ १६५ ॥ **ग्रहीतेति** । अविभक्तोविभक्तोवा भ्रात्रादिसाधारणकुटुंबव्ययार्थेविभक्तभ्रातृकुटुंबव्ययार्थेच-ऋणंगृहीत्वा **कुटुंबव्ययकृत्** मृतोबाधितोवा तदा तदृणं अविभक्तैर्विभक्तैर्वा ऋक्थिभिः स्वधनाद्दातव्यम् ॥ १६६ ॥ **कुटुं-बार्थइति** । कुटुंबार्थेधनीनोपि व्यवहारंसमाचरन् स्वदेशे विदेशे वा गतंसन्तं आगच्छन्तंप्रतीक्षयेत् ॥ १६७ ॥ **बलादिति** । बलादत्तंकुत्सितकन्यादि बलाद्भुक्तंक्षेत्रादि बलाच्च लेखितंपत्रादीत्येवमादीन् सर्वान् बलकृतानर्थान्निवर्तनीयान्मनु-राह ॥ १६८ ॥ **त्रयइति** । साक्षिणः प्रतिभुवोधर्मद्रष्टारो त्रयः क्लिश्यन्ते क्लेशमनुभवन्त्येते । न हठा-द्वेते साक्ष्यादिकारयितव्याः । चत्वारः पुनः ब्राह्मणोत्तमर्णवणिग्राजानःपरार्थदानफलोत्पादनोद्यमेधनार्पणविक्रयव्य-वहारेण **उपकुर्वाणाधनोपचयंप्राप्नुवन्ति** । तस्मान्नैवहठादनाग्रहणक्रयव्यवहारकरणेषु दात्रधमर्णकव्यवहारे प्रवर्तनीयाः ॥ १६९ ॥ **अनादेयमिति** । क्षीणकोशोऽपि राजा अग्राह्यंन गृह्णीयात् । समृद्धोपि स्वल्पमपि-ग्राह्यमर्थंन **परित्यजेत्** ॥ १७० ॥ **अनादेयस्येति** । अग्राह्यग्रहणात् ग्राह्यपरित्यागाच्चाशक्तानसद्दण्डे योजयति-

शक्तानांपुनः प्रकृतमप्युपेक्षतेभीरुतयेत्येवंपौरैर्दौर्बल्यंराज्ञः प्रकाश्यते सचादेयादाने अलधर्मोत्पादप्रकृतिकोपाभ्या- मादेयवर्जनेन च क्षीणकोशतया राज्यविनाशादिहलोकपरलोकयोर्विनश्यति ॥ १७१ ॥ **स्वादानादिति** । **बलवान्स्व्याप्यतेराजासप्रेत्येहचवर्धते** ॥ न्याय्यधनग्रहणाद्वर्णानांसमानजातीयैर्वर्णैः स्त्रीषु च संबन्धादुर्बलानांच- बलवद्भ्योरक्षणाद्बलवानिति राजा लोके कथ्यते । अतश्चासाविहलोकयोर्वर्धते ॥ १७२ ॥ यतः **तस्मादिति** । तस्माद्यमइव राजा वशीकृतक्रोधेन्द्रियआत्मनश्च प्रियाप्रिये परित्यज्य यमसंबन्धिन्या चेष्टया रिपुमित्रसाम्यत्वेन वर्तते ॥ १७३ ॥ **यइति** । यः पुनर्नृपोलोभादिव्यामूढतया अधर्मेण व्यवहारदर्शनादीनि कार्याणि कुरुते तमधर्मपरकृतिन्वा त् क्षिप्रमेव शत्रवश्चासादयन्ति ॥ १७४ ॥ **कामक्रोधाविति** । यश्च द्वेषपरित्यागेन योराजा धर्मेण कार्याणि निवारयति तं नद्यइव समुद्रंप्रजाः संभजन्ते तन्मनाश्च भवन्ति ॥१७५॥ **यइति** । **सराज्ञर्णचतुर्भागंदण्डार्थंतस्यतद्धनं** ॥ योधम- र्णोराजवल्लभाभिमानी सामादिना साधयन्तमुत्तमर्णमनृपे निवेदयेत् सराज्ञा ऋणचतुर्भागंदण्डार्थंतस्य तद्धनंदापनीयः ॥ १७६ ॥ **कर्मणेति** । समहीनजातिश्चाधमर्णोधनाभावे सति स्वजात्यनुरूपकर्मकरणेनापि च नसंशुध्येदुत्तमर्णेन समनि- वृत्तोत्तमर्णाधमर्णव्यपदेशं आत्मानं कुर्यात् । उत्कृष्टजातिः पुनर्नकर्मकारयितव्योपि तुशनैः तद्धनंयथासंभवंदद्यात् ॥१७७॥ **अनेनेति** । परस्परंविवदमानयोरर्थिप्रत्यर्थिनोरनेनोक्तप्रकारेण राजा साक्षिनिर्णीतानि अनुमानशपथादिप्रत्य- यनिर्णीतानि कार्याण्यर्थिप्रत्यर्थिविप्रतिपत्तिरोधेन समीकुर्यात् ॥ १७८ ॥ **कुलजइति** । महाजने आचा- रवर्तिनि धर्मज्ञे सत्यवादिनि बहुसुहृत्सुजनके धनवति ऋजुप्रकृतौ मनुष्ये व्यभिचाराभावान्निक्षेपंन्नीदये- दिति सुहृदुपदेशोयंदृष्टार्थः ॥१७९॥**यइति** । योमनुष्योयेन प्रकारेण समुद्रंवा ससाक्षिकमसाक्षिकंवा यदर्थंसुवर्णादिकंयस्य हस्ते निक्षिपेत्सोर्थस्तेन निक्षेप्त्रा तेनैव प्रकारेण ग्रहीतव्यः यस्माद्येनैव प्रकारेण समर्पणंतेनैव ग्रहणंन्याय्यम् । एवंअन्य- थाकरणे दण्ड्यः ॥ १८०॥ **योनिक्षेपमिति** । **सइति** । **तेषामिति** । **साक्ष्यभावइति** । देहि मे निक्षिप्तंहिरण्यादि इ- त्येवंयः प्रार्थ्यमानः साक्ष्यैभावान्निक्षेप्तुर्न ददाति तस्य निक्षेप्त्रार्थित्वेन प्राड्विवाकेन तस्मिन्निक्षेप्तर्यसंनिहिते कश्चित चारपुरुषैः सुचिरप्रायैः सौम्याकृतिभिर्नृपोपद्रवव्याजाभिधायिभिः हिरण्यंतत्त्वेन यथा तस्य शङ्का नोत्प- द्यते तथा निक्षेपयित्वा ततोसौ कालान्तरे प्राड्विवाकेन पूर्वनिक्षेप्तुरसंनिधौ तेन तच्चारनिक्षेप्तृहिरण्यंतैरेव पुरुषैर्देह्यस्माकंनिक्षेपहिरण्यं इत्येवंयाचितव्यः । सच निक्षेपधारी यथान्यस्तसमुद्रममुद्रंवा यथाकृतंच कटसू- त्राद्याकारेण यदितथैव प्रतिपाद्यते समस्तैर्गृहीततदिति तदा यत्पूर्वैर्निक्षेप्तृभिः प्राड्विवाकवेदिभिः अस्यहस्ते अस्माकंविद्यतइत्याक्षिप्यते तैत्तत्र किञ्चिद्विज्ञेयम् । यदि पुनरस्तेषांचारपुरुषाणां तन्निक्षिप्तंहिरण्यंयथान्यस्तंन दद्या- त्तदा द्वावपि निक्षेपौज्ञापकचारसंबन्धिनाववष्टभ्यदापनीयः स्यादित्येवरूपोधर्मनिश्चयः । इत्येवमेतत्श्लोकचतु- ष्टयम् ॥ १८१ ॥ १८२ ॥ १८३ ॥ १८४ ॥ **निक्षेपोपनिधीइति** । **नश्येतांविनिपातेवाविनिपातेत्व- नाशितौ** ॥ निक्षेपप्रीतिभोग्यौनिक्षेप्तृत्रुपनिधात्रोःजीवतोस्तद्धनेनाह पुत्रभ्रात्रादौ नकदाचिद्देयौ । यतस्तस्य पुत्रादेर्विनाशे तौ निक्षेपोपनिधीह्यर्थस्वामिनियाचमाने किंवक्तव्यं पुत्रादेः पुनरविनाशे कदाचिदविनाशौ स्याताम् ॥१८५॥ **स्वयमिति** ।

---

(१) कृति=प्रकृति ( गो० २,५ ) (२) छादयेत=स्थापयेत् ( गो०२,५ ) (३) साक्ष्य=साक्ष्याय ( गो० २,५ )

( ४ ) तत्तत्रांकिंचिद्विज्ञेयं=तत्रनकिंचिद्दियतेइतिविज्ञेयं ( गो० २,५ ) ( ५ ) पौ=प्ता ( गो० २,५ )

निक्षेप्तुः मृतस्य योऽज्ञातंनिक्षिप्तंस्वयमेव तद्धनार्हे पुत्रादौ दद्यान्नराज्ञा निक्षेप्तुः पुत्रादिभिर्बन्धुभिः न नियोक्तव्यः ॥ १८६ ॥ अथास्यतस्योपरिकिञ्चिद्भ्रान्तिः स्यात्तदा **अच्छलेनेति** । **विचार्यतस्यवादेयंसाम्नैवपरितोषयन्** ॥ तद्वस्तुधनान्तरसद्भावलक्षणवाक्छलादिपरिहारेणैव प्रीतिपूर्वेणावक्रगतिदिव्यादिदानेननिश्चिनुयात् तस्यवानिक्षेपधारिणः- शीलमवेक्ष्यधार्मिकोऽयमितिज्ञात्वासामादिप्रयोगेणैव प्रतिनिश्चिनुयात् तद्दण्डादिनादिव्यैर्वा ॥ १८७ ॥ **निक्षेपे- ष्विति** । सर्वेषु निक्षेपेषु प्रत्यायनेसाक्ष्यभावइत्यादिविधिः स्यात् मुद्रिते पुनः प्रत्यर्थिते निक्षेपधारी न किञ्चिद्दो- षजातंप्राप्नुयाद्यदि तस्मादधः श्रवणप्रतिमुद्रादिना न किञ्चिदपहरेत् ॥ १८८ ॥ **चौरैरिति** । चौरैर्मुषितं उदकेन- देशान्तरंप्रापितं अग्निनाचदग्धं निक्षेपधारीनद्यात् । यदितत्त्वतोनिक्षेपातकिञ्चिन्नापहरति ॥ १८९ ॥ **निक्षेपस्येति** । निक्षेपस्यापहर्तारं मुनिभिस्तत्त्वदर्शिभिः सर्वैरुपायैः सामादिभिर्वैदिकैश्च शपथैरग्निहरणादिभिः राजानिश्चिनुयात् । अनिक्षेमारममिति ब्रुवन् नियोक्तुरपि इति ज्ञापयति ॥ १९० ॥ **निक्षेपमिति** । योनिक्षेपंनत्यजति यश्चानिक्षिप्यै- वार्थयते तौ द्वौ महत्यपराधेकृतापराधे चौरवदुत्तमसाहसादिकंदण्ड्यौ । स्वल्पे वा तस्यनिक्षेपस्य समंदण्ड्यौ ॥ १९१ ॥ **निक्षेपस्येति** । निक्षेपापहारिणंतत्समंदण्डयेदिति पूर्वसिद्धस्य पुनर्वचनंप्रथमापराधेमहत्यपि पुनश्चौरव- दित्येवमर्थं । ये तु ब्राह्मणस्याङ्गविच्छेदादि चौरदण्डनिवृत्त्यर्थं इदंपुनर्वचनं इत्यादिष्टंतदसत् नजातुब्राह्मणंहन्या- दित्यादेर्वक्ष्यमाणत्वात्तथा प्रीतिभोग्यद्रव्यापहारिणं अविशेषेण जातिमात्रविशेषेण तत्सर्वमेव दापयेत् ॥ १९२ ॥ **उपधाभिस्तुयत्किंचिदिति** । योनरःपरद्रव्यंहरेत्ससहायःकरचरणच्छेदादिभिःनानाप्रकारैः वधोपायैः शकलंकृ- त्वा राजमार्गादौराज्ञा हन्तव्यः ॥ १९३ ॥ **निक्षेपइति** । यज्जातीयंद्रव्यंद्रव्यपरिमाणंच अथसाक्षिसमक्षंनि- क्षिप्तंद्रव्यंतत्परिमाणमेव साक्षिप्रत्ययेन बोद्धव्यंन प्रमाणान्तरेण तत्र परीक्षा कार्या । तत्रचनिक्षेप्तावितथं- ब्रुवन् विष्णूक्तंदण्डमर्हति ॥ १९४ ॥ **मिथइति** । रहसि येन निक्षेपोर्पितोनिक्षेपितः । निक्षेपधारिणा- पि रहस्येव गृहीतः सनिक्षेपोरहस्येव प्रत्यर्पणीयः । नप्रत्यर्थेन साक्ष्याद्यपेक्षं यस्माद्येन प्रकारेण दा- नंतेनैव प्रत्यर्पणं इतीव निक्षेपधारिनियमार्थंप्रदातव्यइति योयथा निक्षिपद्वस्तु इतीदंनिक्षेप्तृनियमार्थंगृहीत- व्यश्रवणाधिक्ये सति यदस्य श्लोकप्रतिविधिविषयत्वंव्याख्यातं सामान्यविशेषं तावत् व्याख्यानं वा केषां- चित्तच्छिष्टैः परीक्ष्यम् ॥ १९५ ॥ **निक्षिप्तस्येति** । निक्षेपधारणमपीडयन् निक्षिप्तस्य द्रव्यस्य प्री- त्या च सांप्रतिकोपभोगार्थं अर्पितस्य अनेन प्रकारेण निर्णयंकुर्यात् ॥ १९६ ॥ **विक्रीणी- तइति** । योऽस्वामी स्वामिनाननुज्ञातः परकीयंद्रव्यंविक्रीणीते तमचौरंमात्मानंश्रुतचौरंप्राड्विवाकः साक्षिकर्म- न कारयेदिति साक्षिकर्मनिषेधद्वारेण तस्यापकारित्वप्रतिपादनंक्रियान्तरेष्वप्ययोग्यत्वप्रतिपादनार्थम् ॥ १९७ ॥ **अवहार्यइति** । एषचपरस्वविक्रयी यदिस्वामिना पुत्रादिरूपत्वेनाऽनुगतोभवति षट्पणशतानि दण्डार्थमान- यितव्यः । यदि पुनः स्वामिनोनानुमतोभवति अविद्यमानापसरश्च यदि स्वामिसंबन्धपुत्रादेः सकाशात् कार्यादिना तद्द्रव्यंतस्य न संश्रितंभवति तदा चौरसंबन्धिपापंप्राप्नोति । पापापदेशे च पापसहचरितदण्डातिदेशः ॥ १९८ ॥ **अस्वा- मिनेति** । अस्वामिना अदत्तंविक्रीतंवा तदकृतमेव बोद्धव्यमित्येवंविधाव्यवहारमर्यादा ॥ १९९ ॥ **संभोगइति** । यस्मिन्वस्तुनि भोगोदृश्यते आगमः पुनः क्रियादि न क्वचिदस्ति तत्रागमः कारणं न संभोगोऽतश्च शुद्धा- गमस्य दशवर्षभोगेनापि कार्यसिद्धिः ॥ २०० ॥ **विक्रयादिति** । आपणभूमौ [ यत् ] प्रयच्छेततद्य- वहर्तृपुरुषसमक्षंबोद्धव्यम् । किञ्चिन्मौल्येन गृह्णीयात्सयस्मात्प्रकाशोचितः मूल्यकुलसंनिभ्यापणस्थानानुष्ठितेनन्याय-

क्रमेण विशुद्धंतदीयंधनंमूल्यमानाधिकंहस्तान्न लभते ॥ २०१ ॥ अथमूलमनाहार्यंप्रकाशक्रयशोधितमिति। यदि तेन किञ्चिद्देशान्तरंगत्वा क्रीतद्रव्यमूल्यमाहर्तुमशक्यं तदा पूर्वश्लोकन्यायेन प्रकाशक्रयशोधितंकृत्वा क्रेतादण्डतएव राज्ञा द्रष्टव्यः। स्वामी च तद्द्रव्यंयदस्वामिना विक्रीतंतत् क्रेतृहस्ताल्लभते ॥२०२॥ नेति। मसावद्यमिति। कुङ्कुमादिद्रव्यं-कुसुंभादिना व्याजबुध्या मिश्रीकृतंन विक्रेतव्यम्। नचामकटान्तःक्लेशादिदोषोपेतं यत्तुलादिनापि व्यवस्थितं न च रागादिनास्थगितरूपं एवंचात्रात्वामितिक्रयदण्डवत्स्यात् ॥ २०३ ॥ अन्यामिति । शुल्कदेयांकन्यांशुल्कवृध्ये-च्छाकाले निरवद्यांदर्शयित्वा यदि सावद्या वरस्य दीयते तदा द्वेअपि कन्ये तेन एकेनैव शुल्कदानेन हरेत्। इतिवि-क्रयसाधर्म्येणास्येहाभिधानम ॥ २०४॥ नेति। उन्मत्तायाः कन्यायास्तथाकुष्टत्वत्या या चानुभूतमैथुना तस्याब्राह्मयादिवि-वाहादावपि दानात् पूर्वमुन्मत्तादोन् दोषान्वराय कन्यांदत्वा ख्यापयन् दण्डं अर्हति। दण्डंचदोषवतीमिति वक्ष्यते ॥२०५॥ संभूयचसमुत्थानमाह ऋत्विगिति। प्रधानऋत्विक् होमादिश्रौतकरणेन कृतकरणोज्योतिष्टोमादौ यदि व्याधिना स्वंकर्म परित्यजेत् तदा तस्य तदनुयाचितमित्रावरुणादिभिः तस्य कृतकर्मानुसारेण दक्षिणादातव्याः ॥ २०६ ॥ दक्षिणास्विति। दक्षिणासुच माध्यंदिने सवने दक्षिणानयन्तीत्येवमादिदक्षिणाकाले दत्तासु दैवात्स्वसाध्यंकर्म परित्यजन् कृत्स्नमेव दक्षिणाकर्मशेषंचान्येनासौ प्रकृतऋत्विक् कारयेत् ॥ २०७ ॥ यस्मिन्निति । यस्मिन्कर्मणि आधानाग्नौ अङ्गं-मङ्गंप्रति यादक्षिणाश्च उदिताः स्युः यथारब्धमध्वर्युमित्यादौ प्रधानदक्षिणाश्च गावोदेयाः आदिनाकियत् उद्देशेनश्रूयन्ते सएवश्रुतत्वात्स्वीकुर्यात्। अथ पर्षद्वारिकावत्प्रतिग्रहमात्राव्यापारात्सर्वएव उदितः इतिसंदेहे उपन्यासः॥२०८॥ अत्रश्रुत-त्वात्तादर्थ्यपक्षमाश्रित्य निर्णयमाह रथमिति। अध्वर्योरथोदेयत्वेन श्रुतोवसतामेव स्वीकुर्यात्तथाधाने ब्रह्मा अश्वोदेयइति तस्य श्रुतेः आददीत होताप्यश्वमात्मसात्कुर्यात उद्गातापि सोमक्रये यच्छकटंतद्गृह्णीयात् ॥२०९॥ अधुना प्रधानदक्षिणावि-धिमाह सर्वेषामिति। तंशतेन दीक्षयतीति श्रूयते । तत्र सर्वेषामृत्विजांमध्यांशेमुख्याऋत्विजोहोत्रध्वर्युर्ब्रह्मोद्गातारस्ते अर्धहराअष्टाचत्वारिंशद्गोभाजएवंतदर्धादिसङ्ख्याभिधानंवक्ष्यमाणंसमञ्जसंभवति । कात्यायनश्चद्वादशद्वादशाद्येभ्यः इत्याह । तस्याअष्टाचत्वारिंशतोऽर्धेन चतुर्विंशत्याश्च परेद्वितीयस्थानामतिप्रस्थातृमैत्रावरुणब्रह्माछंसिप्रस्तोतारोऽर्ध-वन्तः कात्यायनश्च षट्षट् द्वितीयेभ्यइत्याह। तृतीयस्थानिनोच्छावाकानशद्वअग्नीन् प्रतिहर्तारोष्टाचत्वारिंशत्तृतीयांशषोड-शगोभाजः । कात्यायनश्चत्स्रश्चतस्रस्तृतीयेभ्यइत्याह पादिनश्चतुर्थव्यवस्थाः पादसुब्रह्मण्याग्रावस्तुनेतारेअष्टाचत्वारिं-शश्चतुर्थीशद्वादशगोभाजःकात्यायनश्च तिस्रस्तिस्रइतरेभ्यइत्यतआह ॥ २१० ॥ संभूयेति । एकीभूय गृहनिर्वर्त-नादीनि स्वकार्याणि स्थपतिवर्धकिसूत्रधारादिभिः मनुष्यैः संपादयद्भिरनेकयुक्तविधानाश्रयेण विज्ञानव्यापाराद्यपे-क्षया भागकल्पना कार्या ॥ २११ ॥ धर्मार्थमिति । येनयामाद्यर्थभिक्षमाणाय कस्मैचिद्धनंदत्तंप्रतिज्ञातंच स्यात्पश्चात्तद्धनमसौयागार्थंयदिनयुञ्जीततदास्यप्रतिश्रुतंनदेयंदत्तंवापत्याहरणीयम ॥ २१२ ॥ यदीति । यदितत्प्रति-श्रुतंधनमसौप्रतिग्रहीताहंकारात्लोभाद्वामार्गेस्वकृतंवा दातुंन त्यजेत् तदा तस्य चौर्यपापस्य संशुध्यर्थंराज्ञा दण्ड-नीयोभवेत् । हठादपि दण्डितस्य दण्डेन पापनिर्हरणंभवतीत्यस्मान्निष्कृतिवचनादवसीयते॥ २१३ ॥ दत्तस्येति। एतदस्य प्रतिपादनंधर्मादनपेतंतत्त्वं तदुक्तमतोनन्तरं अन्यतरमपि प्रतिपादनंकथयिष्यामि ॥ २१४ ॥ भृतइति । योभृतः परक्रीतोऽप्याध्याद्यपीडितोयथानिरूपितंकर्म अहंकारान्न कुर्यात् सकुर्वाणक्रियोक्तस्वरूपे सुव-र्णादिकृष्णलानष्टौ दण्ड्योभृतिश्चास्य कर्मभागादपि न देया ॥ २१५ ॥ आर्त्तइति । यदा पुनः पीडादिना वा कर्म न करोति तदा स्वस्थः सन् पूर्वयादृक निरूपितंतादृक कुर्यात् तांच वृत्तिसकलामपि कालाल्लभेतैव ॥ २१६ ॥

**यथोक्तमिति** ॥ २१७ ॥ **एवंधर्मइति** । एषा व्यवस्था वेतनदानाख्यस्य कर्मणोनिःशेषतउक्ता । अनन्तरंसंविद्व्यतिक्रमकारिणांदण्डादिव्यवस्थांवक्ष्यामि ॥ २१८ ॥ **यइति** । ग्राम्याणांदेशवासिनांवणिगादीनांमध्याद्यो-नरइदमस्माभिः कर्तव्यंपरिहार्यंचेत्येवंसंकेतंदृष्ट्वा विरुद्धेन रूपेण कृत्वा विचलेत्तंराष्ट्रात् राजा निर्वासयेत् ॥ २१९ ॥ **निगृह्येति** । यएवंसंविद्व्यतिक्रमेत् चतुःसुवर्णकार्षिकानिष्कानुक्तरूपान्तु सार्धशतंसुवर्णानांनिष्कानाहुरिति शास्त्रान्तरोक्तान राजतंच शतमानं उक्तम् ॥ २२० ॥ **एवंदण्डविधिमिति** । धर्मप्रधानोराजा ग्रामेषु ब्राह्मणादिषु व्यतिक्रमिणं एतद्दण्डविधानमनुतिष्ठेत् ॥ २२१ ॥ **क्रीत्वेति** । विक्रीय किंचिद्द्रव्यमचिरस्थभावंस्थिरार्थंविक्रीय वा यस्य लोभात्पश्चात्तापोभवति न साधुमया कृतमिति दशाहमध्ये प्रत्यर्थं यद्विक्रीतंतद्गृह्णीयात् ॥ २२२ ॥ **परेणेति** । दशाहोत्तरकालं क्रीतंचदापयेत् ॥ २२३ ॥ **यस्त्विति** ॥ २२४ ॥ **अकन्येति** । नेयंकन्याक्षतयोनिरियं इत्येवंयोमनुष्योद्वेषेण कन्यायाः कुर्यात् सतस्यास्तंदोषमविभावयन् पणशतंदण्डंप्राप्नुयात् उक्तस्याप्यतिक्रमकारित्वाद्दण्डः ॥ २२५ ॥ यस्मात् **पाणिग्रहणिकाइति** । अर्यमणंनुदेवंकन्या अग्निमयक्षतेत्येवमादयोवैवाहिकामनुष्याणांमन्त्राः ॥२२६॥ **पाणिग्रहणिकामन्त्रानियतमिति** । वैवाहिकामन्त्राः निश्चितंभार्यात्वेनिमित्तंतैः प्रयुक्तैर्भार्या भवति तेषांपुनर्मन्त्राणांसखासप्तपदीभवेतिमन्त्रेण कन्यायासप्तमे पदे दत्तेसति शास्त्रज्ञैःसमाप्तिर्बोद्धव्यैव च सप्तमात्पदादर्वागकन्यात्त्वपरिज्ञानेनुशये सति त्यजेन्नोर्ध्वंकानीनसहोढगुढोत्पन्नानांशास्त्रेवोढुःपुत्रदर्शनात् ॥२२७॥ **यस्मिन्निति** । नकेवलक्रयविक्रयः एवंयावद्यस्मिन्संविद्देदनादावपि कार्ये कृते यस्य लोकेपश्चात्तापः स्यात् तंपुत्रदानादिकविधिना धर्मादनपेते मार्गे नृपः स्थापयेत् ॥ २२८ ॥ **पशुष्विति** । पशुविवाददोषैरुत्पन्नैः स्वामिनांतत्पालानांच विवादमशेषंकृत्वा तात्त्विकव्यवस्थांवक्ष्यति ॥ २२९ ॥ **दिवेति** । पालकन्यस्तानां पशूनांदिवादोषउत्पन्ने पालस्य गर्हणीयता रात्रौ पुनः पालप्रत्यर्थिनांस्वामिनोदोषो यदि पुनारात्रावपि पालहस्तगताभवन्तितत्र दोषउच्यते । तदा पालएव गर्हतांप्राप्नुयात् अयोगक्षेमे **योगक्षेमशब्दप्रकाशवत** ॥ २३० ॥ **गोपइति** । योगोपालाख्योभृत्यः क्षीरभृतोन भक्तादिभृतः सस्वाम्यनुज्ञया दशभ्योगोभ्यएकांश्रेष्ठामात्मभृत्यर्थंदुहीत । सा भक्तादिना भृते पाले भृत्या स्यादेवचैकक्षीरादानेनदशगाःपालयेत् ॥ २३१ ॥ **नष्टमिति** । पालसंबन्धिरक्षणाद्यःसाक्षात्पुरुषव्यापारेणशून्यंसन्तंनष्टंदृष्टिगोचरातीतं कृमिभिः भक्षितंश्वभादिमृतंपालएव स्वामिनोदद्यात् ॥ २३२ ॥ **विघुष्येति** । चौरैः पुनः पटहाद्याघुष्य हृतं पालोदातुंनार्हति यदि तस्मिन्नेव देशे हरणंकालानन्तरमेवात्मीयस्य स्वामिनः कथयते ॥ २३३ ॥ **कर्णौचर्मचलोमांश्चेति** । **पशुस्वामिषुदद्यात्तुमृतेष्वङ्कांश्चदर्शयेत्** ॥ स्वयंमृतेषु पशुषु कर्णचर्मलोमबस्त्याख्यमूत्राधाराद्विशेषस्नायुगोरोचनाउपकारकत्वात् स्वामिनेदद्यात् । चिन्हानि वदताकर्णत्वगादीनि प्रत्यभिज्ञानंदर्शयेत् ॥ २३४ ॥ **अजाविकेत्विति** । अजैडके शृगालादिभिः आक्रान्ते भवति तदापालेनागच्छति यानभिभूय वृकोहन्यात् सपालस्यदोषः स्यात् । **बहुत्वाद्वृकाक्षेपासंभवे सत्यजाविग्रहणम्** ॥२३५॥**तासामिति** । यदि तासां अजाविकानांपालेनैवश्वानुगतश्चावरुद्धगमनानांसंहतीभूय वने चरन्तीनांमध्यात्कांश्चित्कुतश्चित् गर्तादेरुत्पत्य सृगालादिहन्यात् न तत्र पालोदोषभाक् ॥२३६॥ **धनुःशतमिति** । चतुर्हस्तंधनुःशम्यायष्टिः तस्याःपातः शम्याप्रक्षेपः ग्रामसमीपे सर्वासु दिक्षु चत्वारि हस्तशतानि त्री-

(१) पुत्रदानादि=पुत्रदासादि ( गो० ५ )

श्वायष्टिप्रक्षेपान्यावत्सस्यवापनपरिहारःपशुप्रचारार्थंकार्योनगरसमीपे पुनरयंत्रिगुणः कार्यः ॥ २३८ ॥ तत्रेति । तस्मिन्व्यवहारस्थानेयदि केनचिद्ग्राम्यमुप्येत आदत्तवृतिकेचेयदि पशवोभक्षयेयुः तदा तत्र पशुपालमंराजा दण्डंन कुर्यात् ॥ २३८ ॥ वृतिमिति । तस्मिन् परिहारस्थाने क्षेत्रे वृतिकण्टकादिमयींप्राकाराकृतींतथाविधामूर्जितां कुर्यात् वामपरपार्श्वतः यथा उष्ट्रोनावलोकयेत् । तस्यांच यावत्किंचिच्छिद्रंश्वशूकरमुखप्रवेशक्षममपि तत्सर्वस्य गयेयुः ॥ २३९ ॥ पथीति । यदि पुनर्मार्गसमीपवर्तिनि ग्रामसमीपे गते अकृतवृतौ सपालः पशुपालमक्षिप्तोन रक्षति तदा पणशतंदण्ड्यः । पशोर्दण्डासंभवात्पालएवदण्ड्योविपालंपुनर्भक्षणे प्रवृत्तंक्षेत्रस्वामी वारयेत् ॥ २४० ॥ क्षेत्रेष्विति । सर्वत्रत्वसितर्त्तेयमिति । पथिग्रामान्तव्यतिरिक्तेषु क्षेत्रेषु पशुर्भक्षयन् सपादंपणदण्डं अर्ह- तिअर्थात्पालएव सर्वास्मिश्च क्षेत्रे स्वामिनः पशुभक्षितंफलंपालेन पशुस्वामिना वा यथापराधंदातव्यमिति निश्चयः ॥ २४१ ॥ अनिर्दशाहामिति । गांप्रसूतां अनिर्दशाहांतथा प्रहणदत्तछागवृषभादिप्रतिमासंबन्धिपशून्यवान् रक्षा- युक्तान् शून्यान्वा सस्य भक्षणेऽदण्डार्हान्मनुराह । न पालस्य दण्डोस्वामिनइत्यर्थः । परिपालकोपेक्षानांदेवप्रकृ- तीनांपरिपालाय पशुसंबन्धिशङ्कृते अतोविपालदेवपशुस्सस्यभक्षकस्यदण्डइतिनचोदनीयः ॥ २४२ ॥ क्षेत्रिकस्येति । क्षेत्रस्वामिनः आत्मपशुसस्यभक्षणकालवपनसस्यापहारादौ अपराधे यावतोराजभागस्य तेन हानिःकृता ततोदशगुणो- दण्डः स्यात् । भृत्यानांपुनःक्षेत्रस्वाम्यविदितएवंकुर्वतांदशगुणादर्धदण्डःस्यात् । तदनुज्ञानात्तु तस्यैव दशगुणोदण्डइति क्षेत्रापराधेपीदमुक्तम् ॥ २४३ ॥ एतदिति । पशुभिः सस्यभक्षणेन स्वामिनांपालानांचापराधे देवपश्वा- दिसस्यभक्षणेधर्मप्रधानोराजा एतत् पूर्वोक्तंकर्तव्यमनुतिष्ठेत् ॥ २४४ ॥ सीमामिति । द्वयोर्ग्राममर्यादा- विषयायांविप्रतिपत्तौ उत्पन्नायांज्येष्ठेमासिग्रीष्मेतापसंशुष्कतृणत्वात्प्रकटीभूतेषु सीमालिङ्गेषु राजा सीमांनिश्चिनुयात् सीमापरिज्ञाने सर्वदा लोके जनानांभ्रान्ति दृष्टोमानि गूढानि वक्ष्यमाणानि सीमाचिन्हानि कारयेत् ॥ २४५ ॥ सीमावृक्षानिति । सीमालिङ्गभूतान्यग्रोधादीन् वृक्षविशेषान् क्षीरिणश्च वृक्षान् उदुंबरादीन् चिरस्थान् का- रयेत् ॥ २४६ ॥ गुल्मानिति । अप्रकाण्डाःस्मृताइतिकाण्डाभिधानात् गुल्मान् वृक्षान् विविधान् वेणूंश्च वेणुकीचकवेण्वादीन्नानाप्रकारान् शम्याख्यान् मल्लिकादिविविधानुमानभूभागान्शरान्कुब्जकसंबन्धिनोगुल्माअचिरो- पभोगस्त्वेन पृथक् विनिष्टत्वात् ॥ २४७ ॥ तडागानीति । तडागकूपपुष्करिण्युदकप्रणीतदेवगृहाणिसीमायांग्रामद्व- यसंधिस्थानेषूदकाभ्यर्थित्वेन जनसंसर्गे सति साक्षिसंभावनार्थे कर्तव्यानि ॥ २४८ ॥ उपच्छन्नानीति । सीमापरिज्ञाने सर्वदा लोके जनानांभ्रान्तिदृष्ट्वा ऽदृष्टानिगुह्यानि वक्ष्यमाणानि सीमाचिन्हानिकारयेत् ॥ २४९ ॥ अश्मनइति । यानीति । पाषाणास्थिगोवालतुषभस्मखर्परिकाशुष्कगोमयपक्वेष्टकाङ्गारदषत्कणिकासिकताअन्यान्यप्ये- वंविधानि खदिरसारिकाकालाञ्जनादीन् तानि ग्रामसंधिषु प्रच्छन्नानि स्थापयेत् ॥ ५० ॥ ५१ ॥ एतैरिति । विवदमानयोर्ग्रामयोः शून्ययोरशून्ययोर्वा एतैरुक्तैश्चिन्हैर्नृपः सीमांनिश्चिनुयात् । अशून्यत्वे पुनरपि पूर्वभुक्तया च शून्यत्वे आधिःसीमैत्युक्तत्वादुदकप्रवाहे चान्यकारणकेन ग्रामयोर्यत्संनिवेशकालवृत्तेन शून्यतावसतेः ॥ २५२ ॥ यदीति । लिङ्गदर्शनेपि ईषदुभयत्र यदि सीमांप्रति संशयएव भवेत् तदा साक्षिप्रत्ययः सीमाविवादनिर्णयः स्यात् ॥ २५३ ॥ ग्रामेयककुलानामिति । ग्रामजनसमूहानांग्रामेण नियुक्तयो- श्च विवादिनोः प्रत्यक्षसीमाचिन्हानि साक्षिणः प्रष्टव्याः ॥ २५४ ॥ तेपृष्टास्तुयथाब्रूयुःसमस्ताःसी- मनिश्चितमिति । ते साक्षिणः पृष्टाः सन्तोयेन प्रकारेण समस्तानद्वैधंसीमाविषयंनिश्चितंब्रूयुः तेन प्रकारेण

स्मरणार्थपत्रके सीमांलेख्य तांश्च सर्वानेव साक्षिणोनामविभागतोलिखेत् ॥ २५५ ॥ शिरोभिरिति । ते साक्षिणः कृतमाल्यरक्तवाससोमूर्धनि मृल्लोष्टंगृहीत्वा यदस्माकंसुकृतंतन्निष्फलंस्यादित्येवमादिभिः सुकृतैः शापिताः समस्तांसीमांसत्यादनपेतांकृत्वा निश्चिनुयुः ॥ २५६ ॥ यथोक्तेनेति । ते सत्यप्रधानाः साक्षिणः शास्त्रोक्तेन रूपेण निश्चयन्तः सत्याभिधाननियमाः सर्वे पवित्राभवन्ति । असत्यंपुनर्निश्चयन्तः प्रत्येकंपणशतद्वयंदण्डंदाप्याः स्युः ॥ २५७ ॥ साक्ष्यभावेतुचत्वारोग्राम्याःसीमान्तवासिनइति । तद्ग्रामद्वयस्य विवादीभूतस्य साक्षिणोभावे चतसृषु दिक्षु सीमान्तवासिनः चत्वारोग्राम्याः साक्षिधर्मेण राजसमक्षंसीमानिर्णयंकुर्युः ॥ २५८ ॥ सामन्तानामभावेतुमौलानांसीमसाक्षिणां ॥ इतरानपियुञ्जीतपुरुषान्वनगोचरान् ॥ २५९ ॥ ग्रामसन्निवेशकालादारभ्य तद्ग्रामाभिजनानांसीमान्तवासिनांसीमासाक्षिणामभावे इतरानपि वक्ष्यमाणान् वनमध्यवहारिणः पुरुषान् पृच्छेत् ॥ २५९ ॥ व्याधानिति । लुब्धकान् पक्षिवधजीविनोगोपालान् तडागादिखननवृत्तीन् वृक्षादिमूलोत्पाटकान्सर्पग्राहिणो शिलोंछजीविनोऽन्यांश्च फलपुष्पेन्धनाद्यर्थंवनव्यवहारिणःपृच्छेदेतैर्हिकार्यार्थंग्राममध्यंतेसकृद्वनंव्रजन्ति ॥ २६० ॥ तइति । ते व्याधादयः पृष्टाः सन्तः सीमायाः संधियथादिशंयेन प्रकारेण ज्ञापकंब्रूयुः ततेन रूपेण पक्षपातपरिहारेण राजा द्वयोर्ग्रामयोर्मर्यादांस्थापयेत् ॥२६१॥ क्षेत्रकूपतडागानामिति । सामन्ताइति । सीमानिमित्तंविवदमानानांमनुष्याणांयदि सीमान्तेवासिनःमिथ्याब्रूयुः तदा राज्ञा ते सर्वे प्रत्येकंमध्यमसाहसंदण्ड्याः । एवंच सामन्तरूपाणांद्वे शते दमः पूर्वोक्तोविज्ञेयः ॥ २६२ ॥ ॥ २६३ ॥ गृहमिति । गृहतडागोद्यानानामन्यतमंमारणबन्धनभयकथनपूर्वकंहरन् पञ्चशतपणानि दण्डनीयः स्यादत्रभान्त्या तु हरतेर्द्विशतोदण्डः ॥ २६४ ॥ सीमायामिति । सीमायांलिङ्गसाक्ष्याद्यभावात्परिच्छेत्तुमशक्यायांराजाधर्मज्ञोऽपक्षपातेन ग्रामद्वयस्य मध्यवर्तिनींभूमियेषामेव ग्रामीणानांतयाभूम्याउपकारोभवति तेषामेवेति मर्यादा ॥ २६५ ॥ एषइति । एषोऽनन्तरोक्तोधर्मादनपेतः सीमाविनिर्णयोनिःशेषेणोक्तः । अनन्तरंपरुषभाषणविषयनिर्णयंप्रकर्षेण वक्ष्यामि दण्डपारुष्यतोवाक्पारुष्यस्य प्रायेणासहत्वं । प्रथमंवाक्पारुष्यविचारोनुक्रमण्यांपुनः पारुष्ये दण्डः वाचिकइतिवृत्तानुरोधाद्दण्डशब्दस्य पूर्वाभिधानम् ॥ २६६ ॥ शतमिति । वादेष्वितिवक्ष्यमाणत्वान्मातृभगिन्याद्यश्लीलपत्नीयवर्जंपुरुषंब्राह्मणमाक्रुश्य पणशतंक्षत्रियो वैश्योध्यर्धशतंद्वे वा शूद्रस्तु वधमर्हति । पुनराक्रोशविशेषापेक्षया ताडनजिव्हाकर्तनाद्यमर्हति ॥ २६७॥ पञ्चाशदिति । ब्राह्मणक्षत्रियवैश्यशूद्रयोः उक्ताद्यपेक्षाम्पञ्चाशत्पञ्चविंशतिचार्धद्वादशपणान यथाक्रमंब्राह्मणोदण्ड्यः ॥ २६८ ॥ समवर्णइति । द्विजातीनांसमजातिविषये उक्तरूपे आक्रोशे कृते व्यतिक्रमेसति द्वादशैव पणान् दण्ड्यः अवचनीयेषुवादेषु मातृभगिन्याद्यश्लीलरूपेषु शतं ब्राह्मणमाक्रुश्येत्यादियदुक्तंतदेव दण्डंद्विगुणंदण्डाद्भवति ॥ २६९ ॥ एकजातिरिति । शूद्रोद्विजातीन् घातकार्याभियोगिन्यावाचा आक्रुश्य जिव्हाछेदंमाप्नुयात् यदासौपादाख्यनिकृष्टइति ॥ २७० ॥ नामजातिग्रहमिति । एषांद्विजातीनामाक्रोशबुध्या नामोच्चार्य जात्युच्चारणंच शूद्रस्य कृतवतः आयसकीलोग्निना दीप्यमानोदशाङ्गुलप्रमाणआस्येप्रक्षेप्तव्यः ॥ २७१ ॥ धर्मोपदेशमिति । छद्मना कुतश्चिद्धर्मलेशंबुध्वाअयंते स्वधर्मइत्येवमहङ्कारेण ब्राह्मणानांशूद्रस्योपदिशतः आस्ये कर्णयोश्च ज्वलत्तैलंराजा प्रक्षेपयेत् ॥ २७२ ॥ श्रुतिमिति । नत्वयैतच्छ्रुतं न भवानेतद्देशाभिजातोनतवेयंजातिः नतवोपनयनादि शरीरसंस्कारकंकर्म कृतं इत्येवमनृतमेवामर्षात्समानजातिंब्रुवन् द्विशतंदण्डंदाप्यः स्यान्न शूद्रः प्रकृतोद्विजातीनांब्रुवन्दण्डलाघवात् ॥ २७३ ॥

**काणमिति** । काणंपादविकलंवा अन्यमपि वा तथारूपं अङ्गविकलमन्धादिकंकाणादिशब्देन सत्येनापि ब्रुवन् यदि सर्वनिकृष्टंकार्षापणंदण्डंदाप्यः ॥ २७४ ॥ **मातरमिति** । क्षारिताक्षारितौ सद्भिरभिशस्तावुदाहृताविति त्रिकाण्डदर्शनात् मातृपितृभार्याभ्रातृपुत्रगुरूणांमहापातकाभिशापमुत्पादयन् गुरोश्च पन्थानमददच्छतंदण्ड्यः । अभ्यासानभ्यासाक्षारणेनवात्रमातृभार्यादीनांदण्डस्य विषमसीमाकरणंपरिहरणीयम् ॥ २७५ ॥ **ब्राह्मणक्षत्रियाभ्यामिति** । ब्राह्मणक्षत्रियाभ्यामितरेतरंपतनीयाक्रोशे कृते सति तयोःशास्त्राभिजनदेशजात्यादिनाऽयंदण्डः कर्तव्यः । क्षत्रियाक्रोशेसति ब्राह्मणे प्रथमसाहसः कर्तव्यः । ब्राह्मणाक्रोशेनिपुणः क्षत्रिये मध्यमसाहसः ॥ २७६ ॥ **विट्शूद्रयोरिति** । वैश्यशूद्रयोः परस्परजातिंप्रति पतनीयाक्रोशे ब्राह्मणक्षत्रियवत् । प्रथममध्यमसाहसात्मकंजिव्हाछेदवर्जंयथावद्दण्डस्य करणम् । एवंच ब्राह्मणक्षत्रियाक्रोशे । एवंशूद्रस्य जिव्हाछेदनमवतिष्ठते ॥ २७७ ॥ **एषइति** । एषोऽनन्तरोवाक्संबंधिनःपारुष्यस्य दण्डप्रकारोयः प्रागुक्तोस्मादनन्तरहस्तकाष्ठशस्त्रादिसंबन्धिनः पारुष्यस्य दुःखोत्पादनहेतोस्ताडनहिंसनादेर्दण्डनिर्णयंवक्ष्यामि ॥ २७८ ॥ **येनेति** । अन्त्यजः शूद्रोयेन केनचिद्धस्तपादादिना वा न साक्षाद्दण्डादिव्यवहितेन वा द्विजमेव प्रहरेत्तत्तदेवाङ्गमस्य छेदनीयमित्येवंमनुसंबन्धी उपदेशोमनुग्रहणमादरार्थमस्यैवोत्तरप्रश्नः ॥ २७९ ॥ **पाणिमुद्यम्येति** । हस्तंदण्डंवावगूर्य हस्तच्छेदनयोग्योभवति । पादेन क्रोधेन प्रहरन् पादच्छेदनार्हो भवति ॥ २८० ॥ **सहासनमिति** । ब्राह्मणेनसहैकस्मिन्नासने निकृष्टजन्मा शूद्रउपविशन् कट्यांकृततमायःस्थिरचिन्होदेशान्निर्वासनीयः । स्फिजाख्यंवाश्रोण्यधोकर्तनंकुर्यात् ॥ २८१ ॥ **अवनिष्ठीवनादिति** । निष्ठीवनेन श्लेष्मणांमर्षणेनश्लेष्माणंत्यजन् शूद्रस्य द्वावप्योष्ठौछेदयेदेवंमूत्रेणावमानयतोलिङ्गमधमाङ्गध्वनिनावमानयतः पायुंछेदयेत ॥ २८२ ॥ **केशेष्विति** । केशपादश्मश्रुग्रीवावृषणानांचान्यतमस्माद्ब्राह्मणंशूद्रस्य हस्ताभ्यामाकर्षयतोहस्तावविलंबमानोराजा छेदयेत् ॥ २८३ ॥ **त्वग्भेदकइति** । चर्ममात्रभेदकृत्समानजातिः नतुशूद्रोब्राह्मणस्यदण्डलाघवात्पणशतंदण्डनीयः । तथा रुधिरोत्पादी शतमेव दण्ड्योमांसभेदकृत् षट् निष्कान दण्ड्यो ऽस्थिभेदीदेशान्निर्वास्यः ॥ २८४ ॥ **वनस्पतीनांसर्वेषामुपभोगोयथायथेइति** । छायादानात्मकेननिकृष्टउपभोगःवनस्पतिवृक्षाणांसर्वेषांयेन येन प्रकारेण उपभोगः कुसुमदानरूपेण मध्यमः फलदानमायतोत्कृष्टः तदपेक्षयाछेदनेदण्डःकार्यः । छायामात्रोपभोगिनि तदादौ स्वल्पोदण्डः पुष्पोपभोगिनिमल्लिकादौ मध्यमः फलोपभोगिन्याम्रादावुत्कृष्टः ॥ २८५ ॥ **मनुष्याणामिति** । मनुष्याणांपशूनांचपीडोत्पादनार्थप्रहारे दत्ते सति यथा यथा महती पीडा त्वग्भेदादावपि मर्मभेदनादिना भवति तथा तथा त्वग्भेदकरोशतंदण्डइत्येवमादितोधिकमपि दण्डंकुर्यात् ॥ २८६ ॥ **अङ्गावपीडनानांव्रणशोणितयोस्तथा ॥ समुत्थानव्ययंदाप्यःशतदण्डमथापिवा** ॥ अङ्गेनोदरबाह्वादीनांयेन वस्त्रादिबन्धनादिना पीडनानि कृतानि तथा प्राणस्य वायोर्येन निरोधादिना पीडनानि कृतानि रुधिरस्यापियेन दृढमुष्टिरज्ज्वाद्याकर्षणेन बहिःस्रवणवर्जितमपि पीडनंकृतं सशरीरस्य प्राग्रूपापत्त्युत्पादकमौषधादिव्ययंतस्य राज्ञा दापनीयः । आत्मीयश्च दण्डमयासौ समुत्थानव्ययंन गृह्णाति तदा तद्व्ययंदण्डंचोभयमपि दण्डार्थंराज्ञा दापनीयः ॥ २८८ ॥ **द्रव्याणीति** । चर्मचार्मिकादिवक्ष्यमाणमतिरिक्तानि कटकाष्ठादादीनि द्रव्याणि यस्य संबन्धीनि योहठात्प्रमादाद्वा नाशयेत्सतस्य प्रतिसंस्कारादिना तुष्टिमुत्पादयेद्राज्ञे विनाशितद्रव्यसमानंदण्डंदद्यात् ॥२८९॥ **चर्मचार्मिकभाण्डेष्विति** । चर्मसु चर्मकाष्ठमृन्मयेषु भाण्डेषु पुष्पमूलफलेषु च परकीयेषु च नास्ति तेषु तन्मूल्यात्प-

शुगुणोदण्डोराज्ञोदेयस्तुच्युत्पत्तिश्च स्वामिनः कार्या ॥ २८९ ॥ यानस्येति । यानस्यगन्त्र्यादेर्यातुश्च सारथ्यादेर्यानस्वामिनः यत्संबन्धियानेतेषांछिन्ननासात्वादीनि वक्ष्यमाणानि निमित्तादीनि अतिवर्तनानि दण्डंचातिक्रम्य वर्तन्ते । तेषु सत्सु यानेन प्राणिहिंसाद्रव्यविनाशयोरपि कृतयोर्यानस्वाम्यादीनांसारथ्ये इत्येवंसारथ्यादिसंबन्धिवाग्दाने सति यानेन प्राणिहिंसाद्रव्यविनाशयोः सारथ्यादेः दण्डोन भवतीति मन्वादयआहुस्तन्न निमित्तव्यतिरेकेषु पुनर्दण्डःक्रियते ॥ २९० ॥ छिन्ननास्यइति । छेदनइति । छिन्ननासिकारज्जौ बलीवर्दभग्ने युगमाख्यकाष्ठे गन्त्र्यादौ भूमिविषमादिनातिरश्चीनंवागतप्रतीचीनंवा तथा यानस्य गन्त्र्यादेरवक्षमप्रविश्यकीलकादितस्य भङ्गे यन्त्राणांच चर्मबन्धानांछेदने योक्त्राख्यपशुग्रीवाकाष्ठरज्जुच्छेदनेऽपसरापसरेत्येवंसारथ्यादिसंबन्धिनि चाह्वाने सति यानेन प्राणिहिंसाद्रव्यविनाशयोः सारथ्यादेर्दण्डोन भवति इति मनुराह ॥ २९१ ॥ २९२ ॥ यत्रापवर्ततेयुग्यमिति । यत्र पुनः सारथेरकौशल्यात् यानमन्यथा व्रजति तत्रहिंसायामकुशलसारथिकरणाद्यानस्वामी द्विशतंदण्डंदाप्यः । सारथेश्च मनुष्यमारणे सत्यपि अविलंब त्वंक्षिप्रमित्येवसारथिर्वक्ष्यमाणोभवति । एवंच द्विशतग्रहणस्योत्तरश्लोके च शतग्रहणस्य विवक्षितत्वमाहुस्तदसदप्रमादाभिधायित्वादस्य ॥ २९३ ॥ प्राजकइति । यदि पुनः सारथिः कुशलस्तदा सारथिरेव मनुष्यमारणे इत्यादिवक्ष्यमाणं अर्हतिदण्डं न स्वामी द्विशतं अकुशले न सारथौ स्वाम्यतिरिक्ताअन्येपि यानारूढाः अकुशलसारथिकयानारोहणात्सर्वे शतंशतंदण्ड्याः । सारथिस्तुमनुष्यमारणइत्यादिस्थितएव ॥ २९४॥ सइति। स प्राजकः सम्मुखागतयानान्तरादवरुद्धैर्बलीवर्दादिभिः संरुद्धयानोरथान्तरेण वा भूमिवैषम्यात्प्रत्यगपसर्पिणा अकुशलत्वात्प्राणिनोरथप्रमापयेत्तत्र दण्डोमन्वादिभिर्विचारितः ॥ २९५ ॥ मनुष्यमारणइति । प्राजकस्याकौशलेन मनुष्यमारणे सत्यपि विलंबत्वमेव चौरवत्तस्य उत्तमसाहसोन तु वधादिचौरदण्डः । प्राणभृत्सु महत्त्वर्धदर्शनाच्महत्सु च प्राणिषु प्रभावतोगवादिषु प्रमाणतःस्यात् [मारितेषु] उत्तमस्य साहसपञ्चशतानि दण्डोभवेत् ॥ २९६ ॥ क्षुद्रकाणामिति । अजाविकानांवक्ष्यमाणत्वादपचितप्रमाणानांवत्सकिशोरादीनांपशूनांहिंसायांद्विशतोदण्डः कार्यः । पुनर्मृगपक्षिषु वराहादिषु हिंसायांपञ्चाशत्पणोदण्डोभवेत् ॥ २९७ ॥ गर्दभाजाविकानामिति । खरच्छागाविविषयवधे रूप्यमाषकपरिमाणोदण्डः स्यादुत्तरोत्तरमपचितंदण्डाभिधानदर्शनादहैरण्यंमाषग्रहणंपूर्वदण्डानूनत्वान्नापिताभ्रिकस्यकरणमत्यन्तलघुत्वोदवंश्वशूकरमारणेपि रूप्यमाषकपरिमाणोदण्डः स्यात् ॥ २९८ ॥ भार्याशिष्यश्चदासश्चपुत्रोभ्राताचसोदरइति । भार्यादयः कृतापराधारज्ज्वा वेणुत्वचा वा दण्डनीयाः स्युरिति हिंसादण्डोपराधार्थः । साधने दण्ड्याः स्युः॥२९९॥ पृष्ठतइति । ते पुनः शरीरस्य पृष्ठदेशे ताडनियाः न तु कदाचित् उत्तमाङ्गे न वक्षसि उत्कप्रकारव्यतिरेकेणताडयित्वादण्डरूपेण वाग्दण्डरूपचौरदण्डंप्रामुयात् ॥ ३०० ॥ एषइति । अनन्तरोक्तोवाग्दण्डः पारुष्यस्य निर्णयोनिःशेषेणोक्तः । अतऊर्ध्वंचौरदण्डस्य व्यवस्थायाविधानंवक्ष्यामि ॥ ३०१ ॥ परममिति । चौरनियमे प्रकृष्टमभियोगंराजा कुर्यात् । यस्मात्तन्निग्रहात् राज्ञः प्रजानिरुपद्रवतया च देशोजनधनबाहुल्येन वृद्धिमेति ॥ ३०२ ॥ अभयस्येति । चौरपापस्य निग्रहणेन साधूनामभयंददाति ससदा सर्वस्य पूज्योभवति । यस्मात्सत्रेक्रतुविशेषवत् स्तेननिग्रहः संपद्यते । स्तेननिग्रहाख्यंतस्यान्यसत्रविलक्षणमतिशये

---

( १ ) [ मारितेषु ] = अहिमहिषु ( गो१, ५ )

( २ ) दण्ड्याःस्युः=नियमार्थआरंभः ( गो०५ )

नसंपद्यते । अन्यत् किलसत्रंनियतकालंभवतीदंसदैवभवतिच अदक्षिणंच अन्यत्सत्रं इदंपुनरभयंदक्षिणा यस्य तद- भयदक्षिणम् ॥ ३०३ ॥ सर्वतइति । सर्वतोभृतिप्रदानव्यतिरिक्तात् श्रोत्रियादीनांसाधूनांसकाशाद्धर्मषड्भागोराज्ञःप्रजारक्ष- णाद्भवति अरक्षितश्चाधर्मादपि लोके चार्यमाणात् षड्भागोऽस्यभवति तस्माद्यत्नतःस्तेननिग्रहेणप्रजासरक्षणंकुर्यात् । नचवृत्तिपरक्रीतत्वाद्राज्ञोधर्मप्राप्तिरयुक्तावृत्तिपरिक्रयवद्धर्मभागपरिक्रयस्यापिशास्त्रीयत्वात् ॥ ३०४ ॥ यदधीतइति । यःकश्चिदध्ययनयजनयाजनदेवतार्चनादियत्फलं तस्यफलस्यराज्ञासम्यक्प्रजापालनात् षड्भागःप्राप्यते ॥ ३०५ ॥ रक्षन्धर्मेणेति । भूतानि स्थावरजङ्गमानि शास्त्रव्यवस्थया राजा रक्षन् वध्यानस्तेनादीनयथाशास्त्रंघातयन् लक्षदक्षिणानांयज्ञानांसंबन्धिफलंप्रत्यहमर्जयति । तत्र महाप्रयासकर्मसंबन्धिफलंकथमल्पप्रयासात्कर्मणःप्राप्यते तथास- तिकोनामप्रयासेषु वर्ततइतिचोदनीयम् । फलोपभोगकालाल्पभूयस्त्वेच विशेषसंभवात् । एवमन्यत्रापिद्रष्टव्यम् ॥३०६॥ योरक्षन्निति । भूतिभोगंचेति । योराजाप्रजासंरक्षणमकुर्वन्धान्यादेःषड्भागादिकंकरं गुल्मदास्यादिकंस्थलपथादि- जीविभ्योगतागतिभ्योभूतेर्भोगंफलंफलकुसुमाद्युपायेनशुल्कंदण्डं व्यवहारादौगृह्णाति सआयुःक्षयेणसत्यमेवनरकंयाति ॥ ३०७ ॥ अरक्षितारमिति । योराजानरक्षति अन्यच्चधान्यादिषड्भागंबलिरूपंगृह्णाति तंसकललोकसंबन्धिसर्वपापत्वी- करणंमन्वादयआहुः ॥ ३०८ ॥ अनपेक्षितमर्यादमिति । अतिक्रान्तशास्त्राचारमर्यादं परलोकाभावबु- द्धिमसद्दंडादिधनच्छेदनं करबल्यादेर्भक्षितारंचराजानंनरकगामिनंजानीयात् ॥ ३०९ ॥ अधार्मिकमिति । अधार्मिकंचौरमपराधापेक्षया त्रिभिर्नियमनप्रकारैः प्रयत्नेननियच्छेत् । बन्धनागारस्थापननिगडादिबन्धनकरचर- णकर्तनादि नानाप्रकारैर्हिंसनैरिति ॥ ३१० ॥ निग्रहेणेति । यस्मात्पापकर्मणोनिग्रहेण साध्वाचाराणांचानुग्रहेण राजानोद्विजातयइव महायज्ञादिभिः सर्वकालंपवित्रीभवन्ति तस्मादधार्मिकंनिगृह्णीयात् ॥ ३११ ॥ क्षन्तव्यमिति । बालवृद्धातुराणांचकुर्वताहितमात्मने ॥ कार्यवतांक्षिपतांस्तेनहतबान्धवादीनां संतापेनाक्रोशतांबालवृद्धव्या- धितानांचाक्रोशतां आत्मनेवक्ष्यमाणमुपकारमिच्छतांपार्थिवेन सर्वदा क्षमणीयम् ॥ ३१२ ॥ यःक्षिप्तोमर्ष- यतीति । संतप्तैराकृष्टोयस्तेषांक्षमते तेन स्वर्गलोकेमहीयते महिमानंभजते यत्पुनःप्रभुत्वदर्पान्नसहते तेन नरकं- व्रजति ॥ ३१३ ॥ राजेति । स्कन्धेनेति । सुवर्णस्तेयकृद्विप्रइत्यादिना प्रायश्चित्तप्रकरणे वक्ष्यमाणस्तेनकर्तव्यः अनेनश्लोकद्वयेन अस्मिन्दण्डप्रकरणेऽनूद्यतेसुवर्णस्तेनंप्रतिदण्डाख्यराजकर्तव्यस्योपदेशार्थः । ब्राह्मणसुवर्णचौरेण मुक्तकेशेनादराद्वेगगतिना ब्राह्मणसुवर्णमियन्मयापहृतं इत्येवंतत्स्तेयंख्यापयता मुशलाख्येनायुधंखदिरमयंवा लगुडंश- क्त्याख्यंचायुधंतीक्ष्णोभयप्रान्तमयोमयंवा दंडं स्कन्धेन गृहीत्वा राजसमीपंगन्तव्यम् । गत्वाच ब्राह्मणसुवर्णापहारी- चाहं अनेनमुशलादिना मां जहीत्येवं राज्ञोवक्तव्यम् ॥ ३१४ ॥ ३१५ ॥ शासनादिति । प्रशाधित्वेति । राजा- संबन्धिहननेनपरित्यागेनवा सचौरस्तस्मात्पापात्प्रमुच्यते । तंपुनःस्तेनं नजातु ब्राह्मणंहन्यात्सर्वपापेष्वपिस्थितमिति वक्ष्यमाणत्वात् ब्राह्मणतर्जनहन्ताराजा तस्य संबन्धियत्पापंप्राप्नोति तस्मादसौ राज्ञा हन्तव्यः । इत्येवंपरमेतत्सर्व- मिहाभिधानम् ॥ ३१६ ॥ यस्मात् अन्नादइति । योब्रह्महासतत्संबन्धि अन्नं अत्ति तद्विषयं आत्मीयंपापं- शोधयति पापंतस्य भवतीत्येवं एतदेवात्र विवक्षितम् । न तु भ्रूणहापापप्रायश्चित्तधिया । तथा एवंभार्याव्यभिचा- रिणी उपपतिंक्षममाणे भर्तरि पापंतंश्लेषयति । शिष्यश्चयमनियमाननुष्ठानजन्यंपापंगुरौसहमाने अर्पयति । याज्यश्चयागेऽन्यथाप्रचरन् याजकेक्षममाणे प्रक्षिपति । स्तेनश्च राजनि सहमाने न्यस्यति तस्माद्राज्ञावक्तव्यः

---

( १ ) पाप····धिया=पापमेति अन्नदानस्यप्रायश्चित्तत्वेन अश्रवणात् ( गो० ५ )

॥ ३१७ ॥ राजभिरिति । ते समुद्धृताः पापानि कृत्वा पूर्वार्जनंतथाक्रतुवरान् कृत्वा स्वर्गमपापाः सन्तः शिष्टाइव शुभकारिणोव्रजन्ति । ये तत्पापनिमित्तं राजनिकृतदण्डाभवन्ति इहपापानीति बहुवचनात् हिरण्यस्तेनविषयएव दण्डाङ्कः नकार्यनिष्कृतिः अपि तु सकलैनःस्वविषयेत्यवसीयते न च स्वयमागतविषयैव दण्डेन पापनिष्कृतिः न हठदण्डितविषये मन्तव्यम् । हठदण्डितस्यापि यदिसंसाधयेत्तच्चित्यादिनिष्कृतेर्दर्शितत्वाधाम्ययातनाभिर्वाकथंपरवशस्य निष्कृतिः स्यात् ॥ ३१८ ॥ यइति । यः कूपाद्रज्जुंघटं अपहरेत् योवा उदकदामगृहं विदारयेत् सरूप्यं सुवर्णवामाषंस राज्ञा गलकेशाद्यपेक्षया दण्डंमाप्नुयात् । तत्रचरज्ज्वादि तस्मिन्कूपे प्रत्यानयेत् ॥ ३१९ ॥ धान्यमिति । द्विपलंशतंद्रोणं विंशतिद्रोणएककुंभः । दशकुंभेभ्यः अधिकंधान्यंहरतोहर्तृक्रियमाणगुणापेक्षयासुभिक्षदुर्भिक्षाद्यपेक्षयाच ताडनाङ्गच्छेदनाद्यात्मकोवधदण्डः कर्तव्योराज्ञादशकुम्भंपुनर्यावदपहृतं एकादशगुणंदण्डंदाप्यः । तस्यचतद्धनंदाप्यः । वक्ष्यमाणंच सर्वत्रस्वामिनोदाप्यः ॥ ३२० ॥ तथेति । सुवर्णरजतादीनांमहार्घाणां चवाससां ॥ नकेवलंधान्ये यथापूर्वोक्तो यावत्तुलाछेद्यानामपि सुवर्णरजतप्रवालादीनां उत्कृष्टानांच वाससां चान्तःपट्टादीनां एतेच्छताद्यभ्यधिकेपहृते वधः कर्तव्यः । विषमसमीकरणंचात्र देशकालापहृतद्रव्यंस्वामिजातिगुणाद्यपेक्षया परिहरणीयम् । अन्यथा महार्घाल्पार्घ्ययोः तुल्यदण्डतास्यादेवंद्रष्टव्यम् ॥ ३२१ ॥ पञ्चाशतइति । एषांपूर्वनिर्दिष्टानांपञ्चाशतऊर्ध्वंशतस्य यावदपहृते चैतद्धस्तच्छेदनं मन्वादिभिरुच्यते । पञ्चाशतः यावदपहृते तन्मूल्याद्दशगुणंराजा दण्डं कुर्यात् ॥ ३२२ ॥ पुरुषाणामिति । महाकुलानांमनुष्याणांविशेषेण च स्त्रीणांमहाकुलोत्पन्नानां प्रधानानांमणीनांवज्रवैडूर्यादीनांहरणे देशकालहर्तृस्वामिजात्याद्यपेक्षया ताडनाङ्गच्छेदनात्मकंवधमर्हति ॥ ३२३ ॥ महापशूनामिति । हस्त्यश्वगोमहिष्यादीनांमहतांपशूनांहरणे खड्गादीनांकल्याणघृतादेश्च कालविग्रहदुर्भिक्षात्मककार्यंचापहारप्रयोजनं द्यूतवैररव्यवसायादिरूपं पर्यालोच्य राजान्यूनाधिकंदण्डंप्रकल्पयेत् । अनुबन्धंपरिज्ञाय अनेनैतल्लाघवार्थमपि सादरार्थमुच्यते शस्त्रौषधहस्त्याद्यपहारे विग्रहादौ स्थूलानर्थोत्पादनात् ॥ ३२४ ॥ गोषुब्राह्मणसंस्थासुनासिकायाश्चभेदनइति । ब्राह्मणसंबन्धीनांगवां अपहरणे एवंवन्ध्यायाश्च गोः वाहनाद्यर्थंनासिकाभेदनेपशूनांचैडकादीनांदण्डभूयस्त्वाद्यागाद्यर्थानामपहरणे समनन्तरमेव पादार्धच्छेदयुक्तोदण्डःकार्यः ॥ ३२५ ॥ सूत्रकार्पासकिण्वानामिति । अणुवैदलभाण्डानामिति । मत्स्यानामिति । अन्येषामिति । ऊर्णादिसूत्रस्यकिण्वाख्यस्यच सुराद्रव्यस्य तक्रस्यगोरसस्य वैदलानांच वेण्वादित्वङ्निर्मितानांभाण्डानांलवणानांसैन्धवबिडलवणादीनांमधुनः माक्षिकस्य यद्प्यल्पतपशुप्रभवं शृङ्गदन्तादि तस्य तथान्येषामप्येवंविधानांच सारद्रव्याणांमनःशिलसिन्दूरादीनां ओदनस्यच भक्तसक्त्वादेः पक्वान्नानांचापूपमोदकानांसर्वेषांच कार्पासादीनांच प्रसिद्धानांहरणान्मूल्याद्द्विगुणोदण्डःकार्यः ॥ ३२६ ॥ ३२७ ॥ ॥ ३२८ ॥ ३२९ ॥ पुष्पेष्विति । पुष्पेषु नीलीक्षेत्रेषु धान्येषु गुल्मलतावृक्षेषु पुरुषभारप्रायेषु वक्ष्यमाणाच्छ्लोकात् परिवपनसंभवाच्च धान्येषु खलवासितापहृतेषु देशकालापेक्षया सुवर्णस्य रूप्यस्य वा पञ्चकृष्णलपरिमाणोदण्डःस्यात् ॥ ३३० ॥ परिपूतेष्विति । अपासितेषु शेषेषु शाकादिषु वापहृतेषु स्वामिनासह संग्रामेऽपहारेपणशतदण्डः । संगतेषु पुनःपञ्चाशतंदण्डः ॥ ३३१ ॥ स्यात्साहसमिति । यत्कर्मधान्यापहा-

( १ ) एतच्छता=पणशता ( गो०२,५ )
( २ ) संग्रामे=संग्रहे ( गो०५ )

रादिद्रव्यस्वामिसमक्षमेव प्रसह्य कृतंतत्साहसंस्यादतस्तत्र स्तेयदंडोनकार्यः इत्येवमर्थस्तेयप्रकारस्योपदेशः । य-त्पुनःपरोक्षंकृतंतत्स्तेयंभवेत् । यद्यपि च तत्वापह्नुवते तदपिस्तेयमेव ॥ ३३२ ॥ यस्त्वेतानिति । एतानि सूत्रादीनि द्रव्याणि उपभोगार्थमुद्यमितानि योमनुष्यश्चोरयेत् यश्चाग्निलौकिकमपिचोरयेत् तंप्रथमसाहसं राजा द-ण्डयेत् । अग्नेश्चमूल्यव्यवहाराप्रसिद्धेस्तन्मूल्यात् द्विगुणोदमइत्येतदसंभवेसति सूत्रादिभ्यःपृथग्ग्रहणं ॥ ३३३ ॥ येनयेनेति । यच्च येन हस्तपादादिकाङ्गेन येन प्रकारेण ग्रन्थिच्छेदनिःश्रेण्यारोहणादिना चौरोमनु-ष्येषु विरुद्धंधनापहारादिकर्तुमीहतेतत्तदेवाङ्गंतस्याभ्यासप्रवृत्तौसत्यां तदपराधछेदनाय राजा छेदयेत् ॥ ३३४ ॥ पिताचार्यइति । पिताचार्यमित्रमातृभार्यापुत्रपुरोहितानां मध्याद्यःस्वधर्मेनप्रवर्तेत सनादण्डनीयोनाम राज्ञोवर्तते अपितुसोपि दण्डनीयः । पितृमात्रादीनांगौरवस्नेहाभ्यांअदण्डशङ्कायामिदंवचनं ॥ ३३५ ॥ कार्षापणमिति । यस्मिन्नपराधे राजव्यतिरिक्तोजनःपणंदण्डनीयोभवेत्तस्मिन्नपराधे राजापणसहस्रंदण्डनीयःइतिनिश्चयः । अप्सु प्रवेश्य तंदण्डमित्यादिवक्ष्यमाणेन तन्मध्ये राजात्मकोदण्डःप्रक्षेप्तव्योब्राह्मणायवादेयः ॥ ३३६ ॥ अष्टापाद्य-मिति । ब्राह्मणस्येति । यस्मिस्तेयेयोदण्डउक्तः सगुणदोषज्ञस्य शूद्रस्याष्टभिरापद्यते गुणतोष्टगुणःकार्यः । षोडशगुणोविदुषोवैश्यस्य द्वात्रिंशद्गुणःशास्त्रोक्तस्य क्षत्रियस्य चतुःषष्टिगुणोब्राह्मणस्य द्विचतुःषष्टिगुणोवा पूर्णंवा शतंगुणातिशयापेक्षया यस्मादसौब्राह्मणःस्तेयगुणदोषज्ञः ॥ ३३७ ॥ ३३८ ॥ वानस्पत्यमिति । पुष्पाणि फलानि अपरिवृत्तानामिति गौतमस्मरणादपरिवृत्तवनस्पत्यादिसंबन्धिमूलफलंगवाग्निसाहचर्यरक्षार्थंशास्त्रि-तात्यर्थचदारुगत्यन्तराभावेचत्रगोग्रासार्थं तृणंपरकीयमपि अस्तेयं मनुराहअतश्चात्रदण्डाद्यभावः ॥ ३३९ ॥ य-इति । अदत्तग्राहिणश्चौरस्य ब्राह्मणोयाजनाध्यापनप्रतिग्रहैरपि परकीयंधनमण्वपि गृह्णाति सोपि चौरोवि-ज्ञेयः अतश्चासौ चौरवद्दण्ड्यः ॥ ३४० ॥ द्विजइति । द्विजातिः पथिकः क्षीणपाथेयः द्वाविक्षू द्वे च मूलके तुत्रपुसीसादिपरक्षेत्रात् गृह्णन् दण्डंदातुंयोग्योन भवति ॥ ३४१ ॥ असन्दितानामिति । पर-कीयानामश्वादीनां अबद्धानांदर्पेण बन्धयिताबद्धानांवा मोचयितारथानांवा मन्दुरादौ चोरयिता योवादासाश्व-रथापहारी सचौरदण्डंप्राप्नुयात् ॥ ३४२ ॥ अनेनेति । अनेनोक्तविधानेन चौरनियमनंकुर्वन् नृपइह-लोके यशोलाभंपरत्रचोत्तमंसुखंप्राप्नुयात् ॥ ३४३ ॥ इदानींसाहसमाह ऐन्द्रमिति । सर्वाधिपत्य-लक्षणंपदंचाविनाशनं अनपचयं ख्यातिं चाभिमुख्येनेच्छन्राजा साहसेन बलवशेनापि अग्निदाहवस्त्र-पाटनादिकारिणंमनुष्यंक्षणमपि नोपेक्षेत ॥ ३४४ ॥ वाग्दुष्टादिति । वाक्पारुष्यकृच्चौरदण्डकारि-भ्यः सकाशात् साहसकृन्मनुष्योतिशयेन पापकृद्बोद्धव्यः ॥ ३४५ ॥ साहसइति । साहसे प्रवृत्तस्य यः क्षमते सोतिमात्रंप्रसङ्गात्साहसकारिभिः क्षिप्रमेव विनाश्यते द्वेष्यतांचलोके प्राप्नोति ॥ ३४६ ॥ नेति । मित्रोक्त्या वा महत्या वाधनप्राप्त्या साहसिकान् सर्वभूतभयजनकान् राजा न परित्यजेत् ॥ ३४७ ॥ शस्त्रमिति । आत्मनइति । ब्राह्मणादिभिश्च खड्गाद्यायुधंग्रहीतव्यम् । यस्मिन् काले वर्णाश्रमिणांचौरादि-भिः धर्मकर्तुंन दीयते तत्र तथाद्विजानांब्राह्मणादीनांराजाभावपरचक्राक्षेपकारादिभिः कालजनिते वर्णानांसंकरेतथा आ-त्मनश्च शरीरदायादिरक्षायांदक्षिणासंबन्धिनि सङ्करे अपहारनिमित्ते संग्रामे स्त्रीब्राह्मणरक्षायांच धर्मेण कूटयुद्धे-न तेन शस्त्रेणानेनान्यगतिकः परांहिंसन्नप्रत्यवैत्येवंचात्र साहसदण्डोन कार्यः ॥ ३४८ ॥ ३४९ ॥ गुरुमिति । अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः ॥ क्षेत्रदारापहारी च षडेते आततायिनः ॥ इतिवसिष्ठायुक्तं

गुरुबालवृद्धब्राह्मणानामन्यतमं आततायिनमायान्तं हननादिव्यापारामिमुखीभूतं अविलंबमानोहन्यादेव किमुतन्यमपि पूर्वार्थवादकामाय स्यात् । आचार्यंच प्रवक्तारमित्यादीनामपकारिणामपि गुर्वादीनांहिंसाया विनिन्दित्वात् ॥ ३५० ॥ नेति । प्रकाशंयुद्धेनाप्रकाशंवाभिचारेण चाततायिमारणे हन्तुर्न कश्चिदपि अधमदण्डप्रायश्चित्ताख्योदोषोभवति । यस्मात्तंवृकुतोमन्युः क्रोधाभिमानिदेवता तंमन्युहन्यमानगतंक्रोधंनिवर्तयतीति पूर्वार्थवादः कामः कामायस्यादितिवत् । साहसे चापराधापेक्षया प्रथममध्यमोत्तमसाक्षाद्दङ्गच्छेदनिर्वासनादयो दण्डाः कार्याः ॥३५१॥ स्त्रीसंग्रहणमिदानीमाह **परदाराभिमर्शेष्विति । उद्वेजनकरैर्दण्डैश्चिन्हयित्वाप्रवासयेत्** ॥ परदारसंभोगेषु बहुषु प्रवृत्तान मनुष्यान पीडाकरैर्दण्डैर्नासौष्ठकर्तनादिभिरङ्कयित्वा राजादेशान्निर्वासयेत् ॥ ३५२ ॥ **तत्समुत्थइति** । यस्मात्परदारसंगमनसमुद्भूतोलोकस्य वर्णसंकरउत्पद्यते येन वर्णसङ्करेण यागाद्यधिकृतयजमानाभावादग्नौ प्रास्तेत्येतदभावे सति वृष्ट्याख्यजगद्विनाशमूलधर्ममूलच्छेदेन विनाशायोत्पद्यते ॥ ३५३ ॥ **परस्यपत्न्यापुरुषःसंभाषंयोजयेत्सहेति** । परदारगमनपूर्वदोषैः पूर्वमुत्पन्नाभिशापः परभार्यया सह संभाषणंकुर्यात् सप्रथमसाहसंदण्डंप्राप्नुयात् ॥ ३५४ ॥ **यइति** । यः पुनः पूर्वाभिशापरहितकारणेन केनचिज्जनसमक्षं अभिभाषणंकुर्यात् सनदण्डंप्राप्नुयात् यस्मान्न कश्चिदपराधोस्ति ॥ ३५५ ॥ **परस्त्रियमिति** । उदकोत्तीर्यमाणे ग्रामाद्बहिर्निर्जने प्रदेशे वृक्षगुल्मलताकीर्णे वा देशे नदीनांवासंगमे यः परस्त्रियं अनाक्षारितोपि पूर्वकारणादिति संभाषेत् सवक्ष्यमाणंदोषंप्राप्नुयात् । सम्यग्गृह्यतेज्ञायतेऽस्याःअयंसंबन्धइतियेन तत्संग्रहणम् ॥ ३५६ ॥ **उपचारक्रियाकेलिरिति** । **सहखट्वासनमिति** । अङ्गानुलेपाद्युपचारकरणंक्रीडाअलंकरणवाससां स्पर्शनम् । एकखट्वासनं एकयानगमनं इत्येतत्सर्वंसंग्रहणंमन्वादिभिः स्मृतम् ॥ ३५७ ॥ **स्त्रियमिति** । योऽदेशे स्तनयोरङ्गे वा निर्जने प्रदेशे वास्पृशेत् तया वा अप्रदेशे श्रोण्यादौ निर्जने वा देशे स्पृष्टस्तूष्णीमासीत तस्यैतदन्योन्यस्याङ्गीकरणे सति संग्रहणंमन्वादिभिः स्मृतम् । अत्र यद्यपिसंगमोन जातः तदा संग्रहणमात्रेमुख्योपगमदण्डादूनदण्डकल्पना कार्या यतोऽनुबन्धंपरिज्ञायेत्युक्तम् ॥३५८ ॥ **अब्राह्मणइति । चतुर्णामपिवर्णानांदारारक्ष्यतमाःस्मृताः** ॥ दण्डभूयस्त्वादब्राह्मणशूद्रोब्राह्मण्यामनिच्छन्त्यांसंग्रहणे प्राणान्तंदण्डमर्हति । चतुर्णामपि वर्णानांधनपुत्रादीनांमध्यात् दाराअतिशयेनरक्षणीयाः । अतउत्कृष्टसंग्रहणादपि वर्णैः भार्यासंरक्षणीया ॥ ३५९ ॥ **भिक्षुकाइति** । भिक्षाजीविनःस्तावकाः यज्ञार्थंकृतदीक्षाःसूपकारादयोभिक्षादिस्वरूपार्थंगृहे स्त्रीभिः सह संभाषणं अनिवारिताएव कुर्युः । तेषांनिवारणानास्त्येव संग्रहणाभावः ॥ ३६० ॥ **नसंभाषंसहस्त्रीभिरिति** । स्वामिना निषिद्धः सन् स्त्रीभिः संभाषणंन कुर्यात् । निषिद्धः संभाषमाणस्तु राज्ञःसुवर्णंदण्डंददाति ॥ ३६१ ॥ **नैषइति** । परस्त्रियंयोभिवदेदित्यादिकः संभाषणनिषेधविधिः नटगायनादिदारेषु वेशजीविदारेषु च नास्ति यतश्चारणाआत्मोपजीविनश्च स्वभार्याःपरपुरुषे संश्लेषयन्ति प्रच्छन्नाश्च भूत्वा नैतत्किलास्माभिः ज्ञातमितिकृत्वा वेशकर्मणि सूचयन्त्यतस्तद्दाराणांवेश्याप्रकारत्वात् नास्ति संभाषणे निषेधः ॥ ३६२ ॥ **किञ्चिदेवतुदाप्यःस्याद्रहःसंभाषणंचरन्निति** । चारणआत्मोपजीविस्त्रीभिः रहोऽप्रकाशंसंभाषणंकुर्वन् किञ्चिदेवस्वल्पं दण्डंदापनीयः । दासीभिरवरुद्धाभिर्बौद्धाभिर्व्रतचारिणीभिश्च सहसंभाषणंकुर्वन् कांचिद्दण्डमात्रांदाप्यः स्यात् ॥ ३६३ ॥ **योऽकामांदूषयेत्कन्यांसमानोवधमर्हतीति** । यस्तुल्यजातीयोऽनिच्छन्तींकन्यांदूषयति गच्छति सतत्क्षणादेव ब्राह्मणवर्जलिङ्गच्छेदादिकंवधमर्हति ।

सकामांदूषयंस्तुल्योनवधंप्रामुयात् ॥ ३६४ ॥ **कन्यामिति** । उत्कृष्टंपुरुषंकन्यांसेवमानां न किंचिदपि दण्डंराजा दापयेत् । हीनजातिंपुनः सेवमानांरक्षितांपितृगृहे स्थापयेत् । यावदनिवृत्ताभिलाषा स्याद्वृत्तिहीनज्ञातिसंप्रयोगाद्यावज्जीवं स्थापयेत् ॥ ३६५ ॥ **उत्तमामिति** । **शुल्कंदाप्यःसेवमानःसमामिच्छेत्पितायदि** ॥ उत्कृष्टजातीयांकन्यां इच्छन्तींवा हीनजातिर्गच्छन् जात्यपेक्षयाङ्गच्छेदमारणात्मकंवधमर्हति । समानजातीयांपुनरिच्छन्तींगच्छन्यदि पिता इच्छति तदा पितुः शुल्कमनुरूपमासुरवद्द्यान्न तुदण्ड्योऽथ पिता नेच्छति तदाराज्ञाशुल्कपरिमाणंदाप्यः ॥ ३६६ ॥ **अभिषह्येति** । मनुष्यः प्रसह्य हठात् अहङ्कारेण समानांसमानजातीयांगमनवर्जं अङ्गुलिप्रक्षेपमात्रेणैव नाशयेत्तस्य क्षिप्रमेवाङ्गुलिद्वयंकर्तनीयंदण्डंषट्शतमसौ दापनीयः ॥ ३६७ ॥ **सकामामिति** । समानजातिरिच्छन्तींकन्यामङ्गुलिमात्रप्रक्षेपेण नाशयन् अङ्गुलिच्छेदंनप्रामुयात् किंतुपौनःपुन्येन एषःप्रसङ्गान्नावर्तते तदर्थंशतमयंदण्डंदाप्यः ॥ ३६८ ॥ **कन्येति** । **शुल्कंचत्रिगुणंदद्यात्शिखाश्चैवाप्नुयाद्दश** ॥ ३६९ ॥ याकन्यैव कन्यां अपरां अङ्गुलिप्रक्षेपेण नाशयेत्तस्याद्विशतोदण्डःस्यात् । शुल्कंवासौ कन्यापितुर्दद्यात् शिखाप्रहारांश्च दशप्रामुयात् ॥ ३६९ ॥ **येति** । या पुनः स्त्री कन्यांनाशयेत् सा तत्क्षणादेव शिरोमुण्डनसानुबन्धापेक्षया अङ्गुल्योरेव छेदनमर्हति । तथा खरेण राजमार्गे वहनमर्हति इदंचात्र पूर्वाभ्यांविकल्पिताभ्यांसमन्वितम् ॥ ३७०॥ **भर्तारमिति** । या स्त्री बलवदाढ्यपित्रादिबान्धवदर्पेण रूपवैदग्ध्याद्गुणगणगर्विता पूर्वेण च भर्तारंपुरुषान्तरकरणेनोल्लङ्घयेत् तांराजाबहुजनाकीर्णे प्रदेशे श्वभिर्भक्षयेत् ॥ ३७१ ॥ तंदार्पिताजारं **पुरुषंदाहयेदिति** । तंपापकारिणंपुरुषं अयोमये शयने अग्निज्वलिते राजा दाहयेत् । काष्ठानि निक्षिपेयुःयावदसौ पापकृद्दग्धः स्यात् ॥ ३७२ ॥ **संवत्सराभिशस्तस्येति** । परस्त्रीगमनदोषेण पुंसोदण्डितस्य पुनः संवत्सरेनीते तस्यामेवाभिशप्तस्य तस्य यथोपदेशस्य द्विगुणोदण्डः कर्तव्यः दण्डः कल्पते । इह चाण्डाल्यासह निर्देशात् सहस्रंत्वंत्यज स्त्रियः इतिचण्डालीगमनतुल्यएव सपुनः संवत्सरेऽतीतेतामेव व्रात्यांगच्छतोद्विगुणोदण्डः कार्यः । इतिचण्डालीगमनेदण्डः सहस्रंत्वंत्यजस्त्रियमिति चण्डालींसंवत्सरेऽतीते तामेव चण्डालींपुनर्गच्छति तदा द्विगुणः कर्तव्यः ॥ ३७३ ॥ **शूद्रइति** । शूद्रोयदि भर्त्रारक्षितामरक्षितांपुनर्गच्छेत्तदा स्त्रींरक्षितांगच्छन् लिङ्गच्छेदसर्वस्वापहाराभ्यांयोजनीयः । अरक्षितांपुनर्गच्छन् शरीरधनदण्डः कर्तव्यः । कार्यावरुद्धापेक्षया दण्डस्य गुरुलघुभावः कल्पनीयः ॥ ३७४ ॥ **वैश्यइति** । वैश्योगुप्तब्राह्मणीगमने संवत्सरबन्धने चरस्थाप्यःसर्वस्वंदण्डनीयः । क्षत्रियागमने वैश्यस्य वैश्यश्चेनक्षत्रियायांगुप्तायामिति वक्ष्यति । क्षत्रियोगुप्तब्राह्मणीगमने सहस्रंदण्डनीयः । शिरोमुण्डनंखरमूत्रेणास्य कार्यम् ॥ ३७५ ॥ **ब्राह्मणीमिति** । अरक्षितांपुनर्ब्राह्मणींयदि वैश्यक्षत्रियौ गच्छेतांतदा वैश्यःपञ्चशतंदण्ड्यः । पुनारक्षामकृतत्वाद्वैश्यादधिकदण्डःसहस्रदण्डोपेतःकार्यः ॥ ३७६ ॥ **उभाविति** । तावेव द्वावपि क्षत्रियवैश्यौरक्षितया ब्राह्मण्या सह कृतमैथुनौ शूद्रवत् गुप्ते सर्वेण हीयतइतिदण्ड्यौ वाग्निना वा सर्वथादग्धव्याविितिषात्यन्तश्रोत्रियदारगुणवद्ब्राह्मणीविषयं दण्डगुरुत्वात् । वैश्यः सर्वस्वदण्ड्यः स्यात् सहस्रंक्षत्रियस्तथा ॥ ३७७ ॥ **सहस्रमिति** । ब्राह्मणोरक्षितांब्राह्मणींहठात् गच्छन् सहस्रंदण्ड्यः । इच्छन्त्यातु पुनः सह मैथुने पञ्चशतानि दण्डनीयः ॥ ३७८ ॥ **मौण्ड्यमिति** । ब्राह्मणस्य वधदण्डस्थाने शिरोमुण्डने शास्त्रेणोपदिश्यते । क्षत्रियादीनांपुनरुक्तेषु वधदण्डोभवति ॥ ३७९ ॥ **नजात्विति** । सर्वपापकारिणमपि ब्राह्मणंकदाचिदपि नहन्यात् । अपि सर्वधनसंयुक्तमक्षतशरीरंराष्ट्रा-

न्निर्वासयेत् ॥ ३८० ॥ **नब्राम्हणवधादिति** । ब्राह्मणवधादपि अधिकोन्यः पृथिव्यामधर्मोनास्ति । ब्राह्मणं-सर्वपापकारिणमपि राजा मनसापि न हन्यात् ॥ ३८१ ॥ **वैश्यइति** । वैश्योयदि रक्षितायांक्षत्रियायांगच्छेत् क्षत्रियोवा वैश्यां तदा योब्राह्मण्यामरक्षितायांगमने क्षत्रियवैश्ययोः दण्डोवैश्यंपञ्चशतंकुर्यातक्षत्रियंतुसहस्रिणमिति दण्डंतौ क्षत्रियवैश्यौ वार्हतः । अतश्चवैश्यस्यक्षत्रियागमने पञ्चशतानि क्षत्रियस्य वैश्याधिगमने रक्षाधिकृतत्वा-दधिकगुणदण्डसहस्रमिति ॥ ३८२ ॥ **सहस्रमिति** । क्षत्रियवैश्येरक्षिते ब्राह्मणीगच्छन् सहस्रंदण्ड्यः । क्षत्रिय-वैश्यौरक्षितांशूद्रांगच्छतोसहस्रपरिमाणोदण्डः स्यात् ॥ ३८३ ॥ **क्षत्रियायामिति** ३८४ ॥ **अगुप्तेइति** । वैश्यांक्षत्रियांशूद्रांरक्षितांब्राह्मणोव्रजनपञ्चशतानिदण्ड्यः स्यात् । चण्डालादिस्त्रियंगच्छन्पुनःसहस्रंदण्ड्यः ॥ ३८५ ॥ **यस्येति** । यस्यराज्ञोराष्ट्रे चौरपारदारिकवाक्पारुष्यदण्डपारुष्याग्निदाहादिसाहसकारिणः न सन्ति सराजा स्वर्गंव्रजेत्॥३८६॥ **एतेषामिति** । एतेषांस्तेनादीनांस्वराष्ट्रे राज्ञोनिग्रहः समजातीयेषु मध्ये राजत्वस्य कारकोलोकेच ख्यातिरुत्पा-दकः ॥ ३८७ ॥ **ऋत्विजमिति** । योयाज्यऋत्विजंपारंपर्यागतंकर्मानुष्ठानसमर्थं अतिजापादिदोषरहितं अदुष्टंयाज्यंच त्यजति तयोःशतंशतंदण्डः कार्यइति प्रसङ्गादितदाह ॥ ३८८ ॥ **नमातेति** । मातृपितृभार्यापुत्रत्यागंभरणशुश्रूषाद्यकर-णात्मकं नार्हति । अतएतान्पतितानपि परित्यजन् अन्योन्यपरित्यागे राज्ञा षट् शतानि दण्ड्यः ॥ ३८९ ॥ **आश्रमेष्विति** । द्विजानांगृहस्थानां आश्रमविषये शास्त्रार्थोऽयंनेत्येवंपरस्परंविवदमानानांराजा आत्मने दृष्टाद-ष्टहितंकर्तुमिच्छन् नायंशास्त्रार्थइति महासनविशेषेणब्रूयात् ॥ ३९० ॥ किंतर्हि **यथार्हमिति** । यादृशोयः पूजा-मर्हति तंतथापूजयित्वा अन्यैर्ब्राह्मणैः सह राजा प्रथमशास्त्रादपगतकोपात् कृत्वा ततस्तेषांयः स्वधर्मः तं-बोधयेत् ॥ ३९१ ॥ **प्रातिवेश्यानुवेश्याविति** । यत्रान्येविंशतिमात्राधिकाभोजनीयास्तस्मिन् उत्सवे वे-श्मागात्पश्चान्निवासिनौ योग्यावभोजयन् ब्राह्मणादिरुत्तरत्र हिरण्यग्रहणादिहमाषकंदण्डमर्हति ॥ ३९२ ॥ **श्रोत्रियइति** ॥ ३९३ ॥ **अन्धइति** । अन्धबधिरपङ्गवः सप्ततिवर्षात्प्रभृतिचवृद्धः श्रोत्रियाणांच शुश्रूषादिनाप-क्रमकरणेकेनचिदपि क्षीणकोशेनापि राज्ञा धान्यषड्भागगुल्मदानादिकंराजदेयंनदापनीयः ॥ ३९४ ॥ **श्रोत्रियं-व्याधितार्तंचेति** । अध्ययनानुष्ठानवन्तंब्राह्मणंरोगिणंप्रियवियोगाक्रान्तं बालवृद्धदरिद्रमहाकुलीनोत्पन्नार्जवोपेतान् राजा दानमानप्रियकरणेनसर्वदापूजयेत् ॥ ३९५ ॥ **शाल्मलीफलकइति** । शाल्मल्यादिवृक्षसंबन्धिनि फलके अपरुषेवासोधावकःशनैःशनैःवासांसिक्षालयेत् । नच परकीयैर्वस्त्रैःसंवेष्टनवस्त्रादि बहिः नचान्यस्याच्छादनार्थंदद्यात् । यद्येवंकुर्यात्तदासौदण्ड्यःस्यात् ॥ ३९६ ॥ **तन्तुवायइति** । तन्तुवायिनाछेदे दशपलादिसूत्रस्य गृहीत्वा पि-ष्टखल्यानुप्रवेश्यादेकादशपलंवासोदद्यात् । अतोयच्छिष्टंतत्तद्द्वादशगुणंदण्ड्यः ॥ ३९७ ॥ **शुल्कस्थानेष्विति** । आपणादिव्यवहर्तृभ्योराजग्राह्यंशुल्कंचस्थाप्यापणस्थलपथजलपथादिषुनियतं लब्धुमशक्याःपण्यानांचसारासारादि-ज्ञास्तेपणेपणेऽनुरूपमर्घंकुर्युस्ततोलाभधनाद्विंशतिभागंशुल्कंराजादापयेत् ॥ ३९८ ॥ **राज्ञइति** । यानिराज्ञस्तद्देशोद्भवा-नि मणिमुक्तादीनि यानिच राज्ञामतिषिद्धानि तथा दुर्भिक्षे धान्यंदेशान्तरे ननेयमितितानि लोभाद्देशान्तरंनय-तःसर्वहरणंकुर्यात् ॥ ३९९ ॥ **शुल्कस्थानमिति** । उक्तपरि [ जि ] हीर्षया यउत्पथेनगच्छत्यकालेवा क्रयविक्रयशुल्काएवयथार्थंचात्मद्रव्यं स्वल्पंसंख्यांवक्ति सराजदेयं यत्तदष्टगुणंदण्डंदाप्यः ॥ ४०० ॥ **आगममि-ति** । **कियतोदूरादानीतमेतदिति** देशान्तरीयद्रव्यस्यस्थानंआगमनंविचार्य कियद्दूरंनीयतेस्वदेशोद्भवस्यनिर्गमंअवेक्ष्य **कियत्कालोवाणिज्यस्यविक्रीतमेतदासितमिति** एवंचस्थानमालोक्य तथा कियान् तस्यवणिजोलाभोऽनपायोवाभक्ता-

च्छादनकर्मकरादिमतइतिमत्वा सर्वपण्यानांयथावणिजांकर्तॄणांच पीडनं नभवति तथाक्रयविक्रयौकारयेत् ॥ ४०१ ॥ **पञ्चरात्र**इति । आगमोपयोगादेरनिपतित्वादेशांपण्यानामस्थिरार्घाणां पञ्चरात्रे पञ्चरात्रे तत्तत्स्थिरमायार्घाणांच पक्षेपक्षे गते मूल्यस्थापनमात्मनोराज्ञाप्रत्यक्षीकुर्यात् ॥ ४०२ ॥ **तुलामानमिति** । तुलां-तथामानं काष्ठादिमयं द्रोणकुडवादि प्रतीमानं सुवर्णादिपरिच्छेदकवर्तकादि तदेतत्सर्वंराजचिन्हाङ्कितंकार्यम् । षट्सुषट्सुमासेषुपुनःपुनः तत्सर्वं आप्तपुरुषैःपरीक्षयेत् ॥ ४०३ ॥ **पणमिति** । भाण्डपूर्णानि यानि तानीति वक्ष्यति अतोरिक्तंगन्त्र्यादि तरमूल्यंपणंराजादाप्यम् । एवंपुरुषवाह्योभारोर्धपणंदाप्यः । गवादिश्च पशुः स्त्री च पणचतुर्भागंदापनीयोभाण्डरहितोमनुष्यः पणाष्टभागंदापनीयः ॥ ४०४ ॥ **भाण्डपूर्णानी**ति । प्रत्यगूर्णानिगन्त्र्यादीनि द्रव्यगतोत्कर्षापकर्षगुरुलघुभावापेक्षया तरमूल्यंदाप्यानि पुमांसश्च परिच्छदार्हावणिक्प्रभृतयोपि अपरिच्छदाआयातायत्किञ्चिद्दापनीयाः । अन्यस्य पुंसःपादार्थरिक्तकः पुमानित्युक्तं अत्रनियमस्य कर्तुमशक्यत्वात् । एतावदेवोपदेशार्थं एवंद्रव्यरहितानि मञ्जूषादीनि भाण्डानि यचत्किञ्चित्त्वयंदाप्यानि ॥ ४०५ ॥ **दीर्घाध्वनी**ति । पारावारतरणार्थंपूर्वमुक्तंदूराध्वनि पुनः नदीमार्गेण नावादिना यातव्यस्खलनाद्युपलाद्युपेतदूरदेशापेक्षया ग्रीष्महेमन्तादिकालापेक्षया तरमूल्यंकल्पयितव्यमेतच्च नदीतीरेषु बोद्धव्यम् समुद्रे पुनर्वातवशतः पातालादिवहनात् आयतत्वाभावे सति तरमूल्यविशेषज्ञापकम् । नदी च योजनादिकंनास्त्यतोऽत्रोचितमेवशुल्कंग्राह्मम् ॥ ४०६ ॥ **गर्भिणी**ति । गृहीतगर्भास्त्री मासद्वयादूर्ध्वंप्रव्रजितोमुनिःभिक्षुः वानप्रस्थोब्राह्मणश्च लिङ्गिनोब्रह्मचारिणः तरमूल्यं ते न दाप्याः ॥ ४०७ ॥ **यदि**ति । **नावारूढैःप्रदेयंतत्समागम्यस्वतोंशतः** ॥ यत्किञ्चितद्रव्यंनाविकापराधेन विपद्येत तन्नावारूढैः संभूय स्वांशाद्दातव्यम् ॥ ४०८ ॥ **एष**इति । नाविकापराधेन यदुक्तंतत्सर्वंनाविकैर्दातव्यम् । इत्येषनौयायिनांव्यवहारनिर्णयउक्तोदैविके पुनर्दोषे उत्पातवातनौभङ्गादौ सचननाविकानांदण्डबन्धनादिविग्रहोविद्यते ॥ ४०९ ॥ **वाणिज्यमिति** । वाणिज्यधनप्रयोगकृषिपशुरक्षणानि दृष्टादृष्टार्थत्वाद्वैश्यंशूद्रंच द्विजन्मनांदास्यंनियमेन राजा कारयेत् अकुर्वाणौराज्ञादण्ड्यौ इहोपदेशात् ॥ ४१० ॥ **क्षत्रियमिति** । क्षत्रियवैश्यौ वृत्त्यभावे पीडितौ ब्राह्मणः कारयेत् स्वानि कर्माणि रक्षणकृष्यादीनि कारयन् ग्रासाच्छादनादिना बिभृयादेवंच महाधनोब्राह्मणस्तावद्विधिवत् राज्ञाताडनीयमितिप्रकरणम् ॥ ४११ ॥ **योदास्यमिति** । ब्राह्मणउपनीतान् द्विजान् दास्यकर्मणि लौल्यात्तदा तत्कर्म पादधावनादि कारयन् राज्ञा षट्पणशतानि दण्ड्यः ॥ ४१२ ॥ **शूद्रमिति** । शूद्रंपुनर्भक्तादिना भृतमभृतंवा दास्यंकारयेत् । यस्मादसौ ब्राह्मणदासार्थमेव प्रजापतिना सृष्टः ॥ ४१३ ॥ **नस्वामिनेति** । यस्यासौ स्वजातिविहित्वात् दासत्वमापन्नस्तेनविमुक्तोपि शूद्रोदास्यान्न मुच्यते । तस्माद्दास्यंहिशूद्रस्यसहजंशूद्रत्ववदतः कः शूद्रात्तद्दास्यमपनेतुंदृष्टार्थमपिदृश्यते । नदास्यंकर्तव्यमित्येवंपरमेतदन्यथा वर्तमानदासयोनिगणितम् ॥ ४१४ ॥ **ध्वजाहृत**इति । संग्रामे स्वामिना कोशाज्जितोवेतनभूतोदासीपुत्रोन्यस्मात्क्रीतोन्येन दत्तः पित्रादिप्रबन्धायातोनिर्धनतया दण्डशुद्ध्यभावे सति शुद्ध्यर्थंदास्यमुपगतइति सप्तध्वजासप्तत्वादीनि दासत्वकारणानि ॥ ४१५ ॥ **भार्येति** । अतोपि निर्धनएवमन्वादिभिः स्मृतः यस्माद्वित्तंतेर्जयन्ति यस्य तेभार्यादयस्तत्संबन्धि तद्धनमिति । तत्पारतन्त्र्यादि वा यस्यैतदुच्यते ॥ ४१६ ॥ **विश्रब्धमिति** । ब्राह्मणोनिर्विचिकित्समेव प्राकृताद्दासशूद्रत्वेनप्रयुक्तः । तस्मात्तस्य दासशूद्रस्य नकिंचित्स्वंविद्यते यतोस्य स्वामिनोधनमपह्रियते एवंचापदिविश्रब्धंद्रव्यं दासाद्ब्राह्मणोगृह्णन् नदण्ड्यएव इत्येवंसर्वमित्यतदुच्यते ॥ ४१७ ॥

**वैश्यशूद्रा**विति । वैश्यशूद्रौ कृषिदास्यादीनि स्वकर्माणि राजा कारयेत् । यस्माद्वैश्यःकृषिवाणिज्यादि शूद्रोदास्याद्यकुर्वन् धर्मक्षयादिदंजगत् आकुलीकुर्यात् । शूद्रश्च दास्यमकुर्वन् अनतिमभिज्ञात्वा कदाचित् द्वैजाते कर्मणि प्रवर्तमानोदुर्भिक्षनरकाद्युपद्रवकृत्स्यात् ॥ ४१८ ॥ **अहनी**ति । प्रत्यहंकर्मान्तान् कृषिशुल्कादिस्थानानि धनसंचयंचयोगक्षेमार्थंप्रति जागृयादिति व्यवहारदर्शनाशक्तस्यापि राजधर्मापरित्यागार्थंपुनर्वचनम् ॥ ४१९॥ **एवमि**ति । **व्यपोह्यकल्मषंसर्वंप्राप्नोतिपरमांगतिं** ॥ एवमुक्तनीत्या एतानृणादानादीन् व्यवहारान्निर्णयेनान्तंनयन् राजा अपक्षपातव्यवहारदर्शनेन शास्त्रदानसामर्थ्यात्प्रमादकृतसंचितपापं अपनुद्य ब्रह्मलोकंप्राप्नोति इतिसमस्तव्यवहारासमाप्तावपिप्रधानविवादसमाप्ताभिप्रायेणेदंफलकथनम् ॥ ४२० ॥ इतिश्रीभट्टमाधवात्मजगोविन्दराजविरचितायांमन्वाशयानुसारिण्यांसर्वव्यवहारनिर्णयोऽष्टमोध्यायःसमाप्तः ॥ ८ ॥ शिवमस्तु ॥

---

# ॥ अथ नवमोऽध्यायः ॥



ॐशिवायनमः ॥ **पुरुषस्येति** । स्त्रीपुंसयोर्दम्पत्योरन्योन्याव्यभिचारलक्षणे मार्गे वर्तमानयोः संयुक्तयोर्वियुक्तयोश्च नित्यान् धर्मान्वक्ष्यामि । जायापत्योरितरेतरविप्रतिपत्तौ कथंचित् राजनिवेदने सत्यनया व्यवस्थया राज्ञा दण्डादिनापि मार्गस्थापनंकरणीयम् । अकरणाद्राज्ञोदोषः । इत्येतदर्थंव्यवहारमध्ये राजधर्मेषु स्त्रीपुंसयोर्धर्माउच्यन्ते ॥ १ ॥ **अस्वतन्त्राइति** । भर्त्रादिभिः स्त्रियः सर्वदा परतन्त्राः कार्याश्चनिषिद्धेष्वपि च शब्दादिषु विषयेष्वतिसक्तिंभजमानास्ततोपास्यात्मवर्तिन्यःकार्याः ॥ २ ॥ **पितेति** । प्राग्विवाहात् पितास्त्रियंरक्षति । तदनु भर्तानदभावे पुत्राः अतएभिर्नकदाचित्स्वतन्त्राः कार्याः । भर्तृपुत्रयौवनवार्धक्यग्रहणंव्यवस्थार्थ अपि त्वौचित्यात्प्राप्तानुवादोयम् ॥ ३ ॥ **कालइति** । प्रदानंप्रागृतोरिति गौतमस्मरणात् अस्मिन्काले पिता कन्यामददन् गर्ह्यः ऋतुकालादगच्छन् भर्ता निन्द्यः । पतौ पुनर्मृते मातरमरक्षन् पुत्रोगर्हणीयः ॥ ४ ॥ **सूक्ष्मेभ्यइति** । अल्पेभ्योपि दुःसंपर्केभ्योदुःशीलत्वसंपादिभ्योऽतिशयेन रक्षणीयाः । किमुत महद्भ्योयस्मादरक्षिता सद्योभिचारोत्पत्त्या पितृभर्तृकुलयोर्द्वयोरपि संतापंकुर्युः ॥ ५ ॥ **इममिति** । यस्मात्सर्वेषांब्राह्मणादिवर्णानांभार्यारक्षणंवक्ष्यमाणश्लोकनीत्या सर्वधर्मेभ्यउत्कृष्टं अतोभर्तारोदुर्बलाअपि भार्यारक्षितुंयत्नंकुर्युः । यतः स्त्रियोरक्ष्याइतिपूर्वमेव ॥ ६ ॥ **स्वामिति** । भार्यायत्नतोरक्षन् स्वांसंततिंसङ्करानुत्पादनेन रक्षति । भार्यासंरक्षणे च तिष्ठन् समाचारंच रक्षति पितृपितामहाद्यन्वयमात्मानंचासंकीर्णापत्यौर्ध्वदैहिककरणेषु रक्षति । स्वंधर्मंविशुद्धनार्यस्याधानाद्यधिकाराद्रक्षति ॥ ७ ॥ **पतिरिति** । भर्ता भार्यायांसंप्रविश्य गर्भतामापद्येह जायते । एवंचाप्यक्षरवर्णसामान्यानि ब्रूयादिति तेन हेतुना जायायाजायात्वंपुनरसौ पुत्ररूपेणैवंचासौ रक्षणीयेत्येतदर्थंनामनिर्वचनम् ॥ ८ ॥ **यादृशमिति** । यस्माद्यथाविधंपुरुषंयथाचोदितंभर्तारंशास्त्रनिषिद्धंवा स्त्री सेवते तादृशंशास्त्रोक्तमेव तथोत्कृष्टंनिषिद्धसेवनेन च निकृष्टंपुत्रंजनयति । तस्मादपत्यशुध्यर्थंभार्यांयत्नतोरक्षेत् ॥ ९ ॥ एवंरक्षणीयमुपदिष्टे कथंरक्षाइति **नकश्चिदिति** । न कश्चिद्बलादन्तरोधादिना स्त्रियोरक्षितुं अनयोर्मनोव्यभिचारत्वेऽरक्ष्यत्वाद्वक्ष्यमाणैरक्षणोपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥ १० ॥ तानुपायानाह **अर्थस्येति** । धनावस्थापनविनियोगयोस्तथाद्रव्यशरीरशुद्धौ शौचे धर्मे च शयनासनादिषु प्रतिजागरणे एवंच तद्यापृतमनाश्चान्ता स्वपिति संयोगंन स्मरति ॥ ११ ॥ **अरक्षिताइति** । ताअपि अरक्षिताएव मनोव्यभिचारसंभवाद्या पुनरात्मनैवात्मानंसंयमाश्रयेण रक्षतएव सुष्टुमनाचारेण संयमाधानआसांयत्नः कार्यः । इति प्रधानसंरक्षणोपायोपदेशः ॥ १२ ॥ **पानमिति** । मद्यपानदुर्जनसंसर्गोऽसत्पुरुषेणसहाधिवासःभर्तृवियोगइतरगृहेवासः सर्वथैव नारीणांइत्येतानिषट् दूषणानि साधुप्रकृतेरपि नार्याव्यभिचाराख्यदोषजननानि तस्मादेभ्यएताः परिरक्षणीयाः ॥ १३ ॥ **नैताइति** । नैताः सुरूपकुरूपविचारंकुर्वन्ति । न ह्यासांयौवनवान् पुरुषश्च प्रियोभवति । अपि तु सुरूपंविरूपंवा पुमानित्येतावतैव ताः नरमुपभुञ्जते । अपि च पुंमात्रदर्शनेन धैर्यचलनायासांताः पुंश्चल्यः ॥ १४ ॥

**पौंश्चल्यादिति** । पुंश्चल्याःचलचित्तत्वात् स्वभावेनैव स्नेहाभावादेतायत्नेन रक्षिताअपि सत्योऽव्यभिचाराश्रयेण भर्तृषु विक्रियांगच्छन्ति ॥ १५ ॥ **एवमिति** । एवंश्लोकद्वयंदौःशिल्याच्चलचित्तत्वोक्तरूपमासांस्वभावंहिरण्यगर्भसृष्टिकाले जनितं ज्ञात्वा रक्षायांयत्नेनपुरुषेण कार्यम् ॥ १६ ॥ **शय्यासनमलंकारंकामक्रोधमनार्यतामिति** । स्वापोपवेशनालंकरणमर्णिकामक्रोधलोभापथातित्वकुत्सिताचारत्वानि स्त्रीभ्योमनुः सर्गादौ कल्पितवान् । ततोऽभासांरक्षाकरणे यत्नः कार्यः ॥ १७ ॥ **नास्तिस्त्रीणांक्रियामन्त्रैरितिधर्मोव्यवस्थितइति** । मन्त्रैर्जातकर्मादिसंस्कारक्रिया स्त्रीणांनास्तीति शास्त्रमर्यादा । एवंमन्त्रवज्जातकर्मादिसंस्काराभावात्स्वभावतश्चस्त्रियोनिर्वीर्याअध्ययनाभावाच्चामन्त्राश्चामन्त्रित्वे सति धर्मज्ञत्वाभावशौचेपि प्रवृत्तेरन् । तत्प्रवृत्तौ च भयाद्यभावत्वादशुभाः स्त्रियइति शास्त्रमर्यादा ॥ १८ ॥ **तथेति** । निश्चितमेव व्यभिचारात्मकत्वेज्ञापिकान चैतद्विदोब्राह्मणोवाइत्येवमाद्याबह्व्यः श्रुतयोवेदेष्वपि पठिताः । तासांच श्रुतीनांमध्यात्प्रायश्चित्तरूपांश्रुतिंशृणुत ॥ १९ ॥ **यन्मइति** । मम माता अपत्यपरायणा यथान्यपुरुषंसंजातलोभाऽभूत् परपुरुषसंकल्पदुष्टंमातृरजोमम पिता बोधयित्वान्यस्य व्यभिचारात्मकत्वस्यैतत् लिङ्गमिति कारणावस्थितोऽयंमन्त्रोयंचचातुर्मास्येष्वन्वष्टकायांच पाद्यानुमन्त्रणे विनियुक्तप्रसङ्गान्मन्त्रप्रयोजनमाह ॥ २० ॥ **ध्यायतीति** । भर्तुरनभिप्रेतंयत्किञ्चित् पुरुषगमनंमनसा चिन्तयति तस्य मनोव्यभिचारस्यानेन मन्त्रेणैषांसम्यगृबुद्धिरुच्यते । नवाङ्कायविषयोऽतस्तस्यांतद्व्यभिचारस्वभावत्वादेतायत्नतोरक्ष्या । मातेति श्रवणात् पुत्रस्यैवेदंमायश्चित्तंन मातुः ॥ २१ ॥ **यादृग्गुणेनेति** । यथारूपेण साधुना असाधुना वा स्त्रीभिः सह विधिना संयोगंभवेत् तथारूपेण तत्संपर्कात् साध्वाचारा दुःशीला वा भवति । समुद्रेणसंभुज्यमानागङ्गापि तथा स्वादूदकापि क्षारोदका संपद्यतइत्यात्मसंयमाख्यंस्त्रीरक्षणोपायान्तरोपदेशार्थं इदम् ॥ २२ ॥ अत्र दृष्टान्तमाह **अक्षमालेति** । **शार्ङ्गीचेति** । अक्षमालाख्याचण्डाली परिणीता वशिष्ठेन चाटविका शार्ङ्गी च मन्दपालाख्येन ऊढा सती पूज्यतांप्राप्ता ॥ २३ ॥ **एताइति** । **उत्कर्षंयोषितःप्राप्तास्तैस्तैर्भर्तृगुणैःशुभैः** ॥ एताः प्रकृतत्वे दर्शनार्थमनयोर्मत्वाएताइतिबहुवचनमाहुरपि तास्तथान्याधमकुलाद्यानिकृष्टपतयोनार्यः स्वभर्तॄनस्मिंल्लोके उत्कृष्टतांप्राप्ताः । अतोभार्यासंरक्षणार्थमयात्मसंयमआश्रयणीयः ॥ २४ ॥ **एषेति** । एषलोकाचारः सर्वोवःशुभोदंपतीनिर्णयउक्तःइदानींसुखहेतूनकृपणोपण्यसुतजीविनोश्चोभयोरित्येवंविधान् प्रजाधर्मान् शृणुत ॥ २५ ॥ **प्रजनार्थमिति** । एवमेषांदोषवत्यपि शक्यप्रतीकारत्वादतः स्त्रियोमाल्यवस्त्रालङ्करणादिदानेन संपादनार्हाएताश्चगृहशोभाभूताःस्त्रियः श्रियश्च गृहेषु तुल्यरूपानिःश्रीकंगृहं न राजते स्त्रींविना गृहंच । एवंमहाधनमपिप्रजानिमित्तत्वात्स्त्रीणामियंश्लोकत्रयेपि भूतिः ॥ २६ ॥ **उत्पादनमिति** । **प्रीत्यर्थंलोकयात्रायाःप्रत्यहंस्त्रीनिबन्धनं** ॥ अपत्योत्पादनंजातस्य च पालनंमित्रबन्धुभोजनादेश्च लोकव्यवहारस्य एकैकगुणः ॥ २७ ॥ **अपत्यमिति** । **दाराधीनस्तथास्वर्गःपितृणामात्मनःसदा** ॥ प्रजोत्पादनमग्निहोत्रसाधनशरीरशुश्रूषा रतिक्रीडा पितॄणामात्मनश्चापत्यजननादिना स्वर्गइत्येतत् सदा भार्यायत्तम् ॥ २८ ॥ **पतिमिति** । यामनोवाग्देहसंयता सती मनोवाग्देहैः पतिंन व्यभिचरति सा भर्त्रार्जितान् स्वर्गलोकान् प्राप्नोति सा साध्वीति चोच्यते ॥ २९ ॥ **व्यभिचारादिति** । महाप्रदुर्जनसंसर्गाल्लोके स्त्री गर्ह्यतांजन्मान्तरे सृगालयोनिंचाप्नोति । अन्तःक्रूरैश्च कुष्ठैरोगादिभिः पीड्यते । महाप्रयोजनतया स्त्रीणामुत्सेकोत्पत्याशङ्कायांतन्निवारणार्थमिह पुनरुक्तम् ॥ ३० ॥ **पुत्रमिति** । पुनरधिकृत्य शिष्टैर्मन्वादिभिः पूर्वजातैश्चान्यैर्महर्षिभिः संवक्ष्यमाणंसर्वजनहितंकल्याणकरंपरंशृणुत ॥ ३१ ॥ **भर्तुरिति** । योभर्ता-

साक्षादुत्पादितपुत्रइति तयो न मन्यते नात्र विप्रतिपत्तिं यत्र पुनरुद्वोढा जनयिता तत्र द्विःप्रकारा श्रुतिः । केचिदुत्पादकमवोढारं अपि तेन पुत्रेण पुत्रवन्तमात्मानमाहुः । अपरे तु क्षेत्रस्वामिनंवोढारमन्यजनितेनापि पुत्रेण पुत्रवन्तमाहुः ॥ ३२ ॥ **क्षेत्रभूतेति** । व्रीह्याद्युत्पत्तिस्थानतुल्याऋषिभिः स्मृता मनुष्यश्च व्रीह्यादिबीजतुल्यः स्मृतोयस्मात्क्षेत्रबीजसंयोगात्सर्वप्राणिनामुत्पत्तिरेवंचोभयोः कारणत्वस्यातिशिष्टत्वात् युक्ताविप्रतिपत्तिः । किं यत्संबन्धिक्षेत्रं तस्यापत्यं उतबीजिनइति ॥ ३३ ॥ **विशिष्टमिति** । कुत्रचिद्बीजंप्रधानं यत्रजाताये त्वनियुक्तायामिति न्यायेन शुल्कोपनीता स्त्री क्वचित्पुनः क्षेत्रंयत्रयतल्पजाप्रमीतस्येतिन्यायेनोपनता यत्र पुनर्बीजयोन्या माता पिता च समंजनयितारौतदपत्यंप्रशस्तंभवति ॥ ३४॥ तत्रप्राधान्यपक्षभात्रमाह **बीजस्येति** । बीजक्षेत्रयोर्मध्यात् बीजंप्रधानमुच्यते यस्मात्सर्वपदार्थानामुत्पत्तिर्बीजगतवर्णरूपादिचिन्हतोपलक्षिता दृश्यते ॥ ३५ ॥ तथाच **यादृशमिति** । यज्जातीयंदृष्यंव्रीह्यादि कालेसङ्कवादौ कर्षणादिना क्षेत्रे उप्यतेतज्जातीयमेवतद्बीजंस्वचिन्हैरुपलक्षितंतस्मिन्क्षेत्रेजायते ॥ ३६ ॥ एवमन्वयद्वारेण बीजप्राधान्यंप्रदर्श्य व्यतिरेकमुखेन संशयितुमाह **इयमिति** । यस्मात्तुगुल्मलतादीनां भूतानां एषा भूमिर्यदि योनिः क्षेत्रंसर्वलोकेरुच्यते न च भूम्याख्ययोनिधर्मः कांश्चित् अपि मृन्मयत्वादीन् गुणान् गुल्मादिबीजमात्मदोषेत्वाङ्कुरकाण्डव्यवस्थासु खलु वर्तते तस्माद्योनिगुणाननुवर्तमानाप्रक्षेपंप्रधानम् ॥ ३७ ॥ किञ्च **भूमाविति** । भूमावेकस्मिन्नपि क्षेत्रे कर्षकैर्योग्यवापनकाले कलममुद्गादीनि विचित्राण्युमानि बीजानि अन्नरूपाणि च बीजस्वभावानुवर्तमानाज्जायन्ते भूमावनेकरूपाणि भवन्ति ॥ ३८ ॥ **व्रीहयइति** । शूकधान्येषु मध्यादीयतृशूकाव्रीहयः षष्टिकाद्यानि दीर्घशूकाः शालयोरक्तशाल्यादयस्ते तथा मुद्गादयोबीजस्वभावानतिक्रमेणैव विचित्राजायन्ते ॥ ३९ ॥ एवंच सति **अन्यदिति** । तिलाद्युमंमुद्गादिजायतइत्येतत् न संभवति । यस्माद्यदेवबीजमुप्यते शाल्यादाविवमनुष्येष्वपिबीजप्राधान्यम् ॥ ४० ॥ इदानींक्षेत्रप्राधान्यमाह **तदिति** । तद्बीजंप्रज्ञावता नीतियुक्तेन लोकशास्त्रव्यवहारज्ञेन ईदृशमनायुष्यं इत्युक्तत्वादायुरिच्छता न कदाचित्परभार्यायां वप्तव्यंनिष्फलत्वात् । तथा च वक्ष्यति ॥ तथानश्यतितत्क्षिप्रंबीजंपरपरिग्रहइति ॥ ४१ ॥ **अत्रेति** । अस्मिन्नर्थे वायुप्रोक्तागाथाछन्दोविशेषयुक्तानि वाक्यानि नीतिकालज्ञाः कथयन्ति यथापरभार्यायांबीजंमनुष्येण न वप्तव्यं इति ॥ ४२ ॥ अत्रदृष्टान्तमाह **नश्यतीषुर्यथाक्षिप्तइति** । यथान्येन मृगंविद्धंतस्मिन्नेव छिद्रे अन्यथापश्चात्प्युतशरोनिष्फलोभवति पूर्वहन्तुरेव मृगभागत्वात् । एवं परभार्यायां उप्तं क्षिप्रमेव निष्फलंभवति । गर्भग्रहणसमनन्तरमेव क्षेत्रिणः फलमित्युक्तम् ॥ ४३ ॥ **पृथोरिति** । इमांअपिपृथिवीं अनेकराजसंबन्धिपरिगृहीतत्वात् यथा येनैव स्थाणुमुत्पाद्य क्षेत्रंक्षरितं तद्व्यपदेशंतत्क्षेत्रमाहुः । मृगमाहुरेवंपूर्वपरिग्रहीतुः स्वाम्यात्तस्यैवापत्यंभवति न जनयितुः ॥ ४४ ॥ **एतावानिति** । नैककः पुरुषोत्वापितु भार्या शरीरमपत्यानीत्येतत् परिणामएव । तथा चैवंतस्यामुत्पादितंभर्तुरेवापत्यंभवति यतश्चदंपत्योरैक्यमतः ॥ ४५ ॥ **नेति** । **एवंधर्मंविजानीमःप्राक्प्रजापतिनिर्मितं** ॥ बन्धविक्रयादिना त्यागेन न च भार्यात्वात् स्त्रीभर्तुरपैत्येवंप्रजापतिना स्मृतम् । पूर्वमेव स्त्रीच आत्मसात्कर्तुंन शक्येति ॥ ४६ ॥ **सकृदिति** । **सकृदाहददामीतित्रीण्येतानिसतांसकृत्** ॥ भागकाले पैतृकादिधनभागएकवारमेवापतति नधर्मभागकल्पनायांपुनर्भागीक्रियते । कन्यापि सकृद्दातव्या वाग्दत्तायाः कन्यायाः पण्यतःप्राप्ताया अपि न बीजिनोऽपत्यंभवति । तथा कन्यातोऽन्यस्मिन्नपि गवादिषु एतानि त्रीणि अङ्गनिपातनादीनि

साधूनांसकृद्भवन्ति । न पुनःकरणमेषामस्ति सकृदाहददामीति ॥ ४७ ॥ यथेति ॥ ४८ ॥ यइति । येक्षेत्रस्वामिनोनभवन्ति केवलंबीजस्वामिनः परकीये क्षेत्रे बीजे च पतिते तस्मिन् क्षेत्रे धान्यादेर्जातस्य यत्फलं न कदाचिद्देशेलभन्तइतिप्रकृतदृष्टान्तः ॥ ४९ ॥ यद्गीति । स्वामिनामिति । यद्यन्यसंबन्धिनीषु गोस्त्रीषु परकीयोवृषभः शतमपि वत्सानांजनयेत्तदा ते सर्ववत्सागोस्वामिनामेव तंनैकोपिबीजस्वामिनोवृषभसंबन्धीयकः शुक्रोवृषभस्वामिनोनिष्फलएव ॥ ५० ॥ तथेति । यद्वद्गोषु तद्वदेवाविद्यमानस्त्रीस्वाम्याःसन्तोये परकीयायां योषिति बीजंवपन्तिते क्षेत्रस्वामिनामेवापत्यलक्षणमुक्तंजनयितापत्याख्यंफलंन लभते ॥ ५१ ॥ फलमिति । यदत्रोत्पद्यते तयोरुभयोरपत्यं एवंक्षेत्रबीजिनोर्यत्रसंबन्धोनास्ति तत्र निःसंदिग्धमेवाक्षेत्रिणोपत्यं यत् उक्तनीत्याबीजात्क्षेत्रंबलवत् ॥ ५२ ॥ क्रियाभ्युपगमादिति । आवयोरुभयोरपत्यंस्यादित्येवंसंविदङ्गीकरणे पुनरेतत्क्षेत्रस्वामिना बीजवपनार्थंयद्बीजिनोफलम् ॥ ५३ ॥ ओघवाताहृतमिति । तत्क्षेपंक्षेत्रिकस्येहनबीजीलभतेफलं ॥ जलवाताभ्यामन्यदीयक्षेत्रादानीतंबीजंयदीयक्षेत्रे स्वामिनस्तद्बीजंभवति न तु तत्फलंयेन बीजंन्यप्तंसलभते । एवं स्वभावाच्चैवमेषांद्विपूर्वमपि परस्त्रीगमने क्षेत्रिणएवापत्यमित्येतत् अनेन सूच्यते ॥ ५४ ॥ एषइति । गोश्वोष्ट्रछागैडकपक्षिमहिषाणांसंततिंप्रत्येषा व्यवस्था ज्ञेया । यत्क्षेत्रस्वामनएवंगवादिसंततेःस्वाम्यंन ऋषभादेः ताःसंवेदात्तूभयोरपीति ॥ ५५ ॥ एतदिति । एतद्बीजयोन्योः सारफल्गुत्वंयुष्माकंकथितम् । अतोनन्तरंस्त्रीणांसंतानाभावे यत्कर्तव्यंतद्वक्ष्यामि ॥ ५६ ॥ भ्रातुरिति । यवीयसस्तुयाभार्यास्नुषाज्येष्ठस्यसास्मृता ज्येष्ठभ्रातृपत्नी अनुजस्य गुरुभार्यया तुल्या । कनीयसः पत्नीपुनर्ज्येष्ठस्य स्नुषाप्रचक्षतेः ॥ ५७ ॥ ज्येष्ठइति । ज्येष्ठःकनीयःपत्नीं कनीयान् ज्येष्ठभार्यायां वक्ष्यमाणनीत्या गुरुनियुक्तामपि सामान्यंगत्वा पतितौभवतः ॥ ५८ ॥ देवरादिति । स्त्रियाभर्तुरभावेश्वशुरादिभिर्भर्त्रा वा व्याधितेन वा पुत्रोत्पादनविधियुक्तत्वात् नियुक्ततया भर्तृभ्रातुस्तदभावेतत्सपिण्डस्यवा सकाशादभीष्टाःपुत्रलक्षणप्रजाः पुत्राभावात्संपादनीयाः ॥ ५९ ॥ विधवायामिति । यस्तल्पजः प्रमीतस्य वेतिदर्शनादभर्तृकाव्याधितभार्याविषये गुरुभिर्नियुक्तोघृताभ्यक्तोमौनवाक् रात्रावेकंपुत्रंजनयेत् न द्वितीयम् ॥ ६० ॥ द्वितीयमिति । केचित्पुनराचार्याः पुत्रविधिज्ञाएकपुत्रोऽपुत्रतुल्यइत्येवमेकपुत्रोत्पादने सति धर्मेण तयोरनिष्पन्नंनियोगप्रयोजनंमन्यमानाःस्त्रीषु द्वितीयपुत्रोत्पादनंमन्यन्ते ॥ ६१ ॥ विधवायामिति । विधवादिकायानियोगप्रयोजने संयोगाख्ये पुनर्यथाशास्त्रंसंपन्ने सति ज्येष्ठोभ्रातृभार्या च परस्परंगुरुवत् स्नुषावच्च वर्तेयाताम् ॥ ६२ ॥ नियुक्ताविति । यौज्येष्ठकनिष्ठौ नियुक्तौ घृताभ्यक्तत्वादिविधानंपरित्यज्य स्वेच्छातोवर्तेयातां तौ द्वावपि स्नुषागगुरुतल्पगौस्याताम् ॥ ६३ ॥ एवंनियोगमुक्त्वा दूषयितुमाह नान्यस्मिन्विधवानारीनियोक्तव्याकदाचनेति । विधवानारी अन्यस्मिन्देवरादौ न नियोजनीया यस्मात्ते देवरादौ नियोजयन्तोऽनादिधर्ममेकपत्नीव्रतंपरिषेधंनाशयेयुः ॥ ६४ ॥ नेति । विवाहप्रयोजनेषु मन्त्रेषु अर्यमणंनुदेवंन च विवाहशास्त्रे विधवायाअन्येन पुंसा सह पुनर्विवाहउक्तः ॥ ६५ ॥ अयमिति । यस्मादयंपशुसंबन्धीयव्यवहारोऽत्यन्तकुत्सितोवेनाख्ये राजनि राज्यंकुर्वाणेऽन्यत्वेन प्रोक्तस्तस्मादादिमन्वादिभिरेषश्रुतौ नास्तीति पूर्वोक्तस्यायंहेतुः ॥ ६६ ॥ सइति । सवेनः पूर्वंसमग्रांपृथिवींपालयन् तत्र एव राजर्षिश्रेष्ठोन तु धार्मिकः ततोब्राह्मणानुज्ञयैतद्भ्रातृभार्यागमनलक्षणंवर्णसङ्करंवर्ति-

तवान् ॥ ६७ ॥ ततःप्रभृतीति । एवंचेदानींतनत्वादमुष्याचारस्य तस्माद्वेनकालात्मभृतियोमृतभर्तृकांस्त्रियं- सम्यक्शास्त्रविगर्हिते एवंच विहितप्रतिषेधत्वान्नियोगस्यकालसूत्रनियोक्तृणांनिन्द्राश्रवणं स्त्रीधर्मेषु ॥ ६८ ॥ नियोगप्रकारकत्वात्कन्यागतमिदमाह यस्याइति । वाग्दत्तायाः कन्यायाः भर्ता म्रियेत तामनेन विधिना भर्तुः सोदर्योभ्राता उद्वहेत् ॥ ६९ ॥ यथेति । सदेवरोविवाहविधिना एतांस्वीकृत्य शुक्लवस्त्रां- वाक्कायसंयुतांरहस्यागर्भग्रहणात्प्रभृति वाचनिकत्वात् च संस्कारस्य नासौ देवरस्य भार्याभवतीति क्षेत्रस्वामिनएव तदपत्यंभवतीति ॥ ७० ॥ नेति । शास्त्रज्ञोन्यस्मैकन्यांपुनरन्यस्मैनदद्यात् ॥ ७१ ॥

[ अत्रद्विसप्ततितमश्लोकादारभ्याध्यायसमाप्तिपर्यन्तमुपलब्धेषु पुस्तकेषु गोविन्दराज- कृतटीका नदृश्यतेकेवलंमूलश्लोकाएववर्तन्ते अतस्तेश्लोकाअस्मिन्ग्रन्थे न गृहीताः । ]

# ॥ अथदशमोऽध्यायः ॥

ॐसिद्धिः ॥ संकीर्णानांवर्णेभ्यएवोत्पत्तिर्वर्णोत्पत्तिः अभिधानमन्तरेण तदुत्पत्तिकथनस्य अशक्यंत्वाद्वर्णोत्पत्त्यभिधानस्य प्रसङ्गेनोत्पादनाय द्वितीयाध्यायसिद्धं त्रैवर्णिकप्रधानधर्मं वेदाध्ययमनुवदितुमाह **अधीयीरन्निति** ब्राह्मणादयस्त्रयोवर्णाअध्ययनाङ्गभूतधर्मयमनियमारब्धस्वकर्मानुवर्तिनोवेदंपठेयुरेषांपुनरध्यापनंब्राह्मणएव कुर्यान्न क्षत्रियवैश्यावित्ययंनिश्चयइत्यध्ययनानुवादप्रसङ्गेन ब्राह्मणस्याध्यापननियममाह प्रब्रूयाद्ब्राह्मणस्त्वेषामित्यनेनैव क्षत्रियवैश्ययोरध्यापननिवृत्तिसिद्धौ स्वशब्देन निषेधवचनंनिषिद्धाचरणेन प्रायश्चित्तविशेषार्थम् ॥ १ ॥ किंच **सर्वेषामिति**। सर्वेषांसङ्करपर्यन्तानां आत्मकुटुम्बस्थित्युपायान् ब्राह्मणोयथाशास्त्रंजानीयात्। तथा तेभ्यश्चोपदिशेदात्मना चवृत्तिनियमाननुतिष्ठेत् ॥ २ ॥ अत्रार्थवादः **वैशेष्यादिति**। जात्युत्कर्षान्मुखोद्भवत्वेन च श्रेष्ठकारणजन्यत्वात् स्नातकस्य व्रतानांचकरणात् संस्कारस्यचोपनयनाख्यस्य बालस्यैव विधानेन विशेषाद्वर्णानांवृत्तिवेदनतदुपदेशयोर्ब्राह्मणएवेशता ॥ ३ ॥ **ब्राह्मणइति**।। ब्राह्मणक्षत्रियवैश्यास्त्रयोवर्णाद्विजाउपनयनस्य तेषांविहितत्वात। शूद्रः पुनश्चतुर्थोवर्णः एकवर्णउपनयनाभावात्। पञ्चमः पुनर्वर्णोनास्ति अन्तरप्रभवानांमातापितृजातिव्यतिरिक्तजात्यन्तरत्वादस्येतरवदेवंचायमेषांवर्णत्वोपदेशः शास्त्रेव्यवहारार्थः। शूद्रस्योपनयनानुपदेशादेवैकजातित्वसिद्धौ चतुर्थएकजातिस्त्वितीदंधर्मेणवस्तुधर्मज्ञाइत्यनेनामन्त्रकेशवपनादिना संस्कारान्तरवदुपनयनंनास्तीति सूचनार्थम् ॥ ४ ॥ **सर्ववर्णेष्विति** । **आनुलोम्येनसंभूताजात्याज्ञेयास्तथैवते** ॥ ब्राह्मणादिचतुर्ष्वपि वर्णेषु समानजातीयास्वक्षतयोनिषु यथाशास्त्रसमूढास्वानुलोम्येन ब्राह्मणेन ब्राह्मण्यांक्षत्रियेण क्षत्रियायामित्येवमनुक्रमेण ये जाताः ते पित्रोर्जातितज्जातीयाएवबोद्धव्याः । सवर्णेष्वित्युपादानाद्वर्णत्वमात्रेण तुल्यास्तु इत्याशङ्कानिवृत्त्यर्थमानुलोम्यग्रहणम् । इदमेव च सकलमातापितृप्रबन्धस्यापि जातिलक्षणमनादित्वेनपुनः संसारस्यास्यैव व्यापकत्वात्सर्वत्र चेहप्रकरणे जातिलक्षणप्रकरणंशास्त्रव्यवहारफलजातिपरिज्ञानार्थंगवाश्वादिवत् ब्राह्मणादीनांजातिभेदावबोधकस्याकारविशेषस्यानुपलब्धेः । एवंच पत्नीग्रहणादपत्न्युत्पन्नानांनैवतज्जातीयत्वम्। तथा च देवलः॥ द्वितीयेनतुयः पित्रा सवर्णायांप्रजायते ॥ अधरेटइतिख्यातः शूद्रधर्मा सजातितः ॥ व्रतहीनाअसंस्कार्याः सवर्णास्वपि ये सुताः ॥ उत्पादिताः सवर्णेन व्रात्याइतिबहिष्कृताइत्याह। तथा ॥ सवर्णेभ्यः सवर्णासुजायन्तेहिस्वेजातयः ॥ इत्येतदपियाज्ञवल्क्यवाक्यमानवैकवाक्यत्वाद्भिन्नास्वेषविधिः स्मृतइति चोपसंहारात् पत्नीविषयम् । एवंव्यासः ॥ स्वोढाजातासमानाः स्युः संकराः स्युरतोन्यथा इत्याह। बौधायनश्चैतानूवन्यान् विवाहारानाहुरेतैः संस्कृताभ्यः उत्पन्नास्तज्जातीयाभवन्ति न त्वन्यइत्याह। बृहस्पतिश्च ॥ प्रातिलोम्येन संभूतानियोगेन विनाच ये ॥ सावित्रीपतिताजातास्त्रयः संकरजातयः इत्याह ॥ अन्ये तु सत्यकामोजाबालोजाबालं मातरमामन्त्रयांचक्रे भवति ब्रह्मचर्यंच वत्स्यामि कंगोत्रोऽहमस्मीति। साहैनमुवाच नाहमेतद्वेद यद्गोत्रस्त्वमसि तात बह्वहंचरन्ती परिचारिणी यौवने त्वामलभे । साहमेतन्नवेद यद्गोत्रस्त्वमसि। जाबालानुनामाहमस्मि सत्यकामोनामस्त्वमसि। स सत्यकामएव जाबालोब्रवीथाइति। सहहा-

(१) अधरेटः=अध्वरेटः ( गो० २, ५ ).     (२) स्व=स ( गो० २,५, )

रिद्रुमंतंगौतममेत्योवाच ब्रह्मचर्यवै भगवति वत्स्याम्युपेयांभगवतमिति । तंहोवाचाकिंगोत्रोनुसौम्यासीति । सहोवाच नाह-मेतन्नवेद भोयद्गोत्रोहमस्म्यपृच्छंमातरं सा मांप्रत्यब्रवीद्वह्वहंचरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्नवेद यद्गोत्र-स्त्वमसि । जाबालानुनामाहमस्मिसत्यकामोनाम त्वमसि सोहंसत्यकामोजाबालोस्मि भोइति तंहोवाच नैतदब्राह्मणो-विवक्तुमर्हति समिधंसोम्याहरोतत्वानेष्यइति जाबालश्रुतिदर्शनात्कण्डगोलकयोश्च श्राद्धप्रतिषेधदर्शनाच्चैषांयस्यापि पितृजातीयत्वमिति । तच्चापरेण सह तेनाहमेतद्वेदेति मातुर्निश्चयाभावान्नैतदब्राह्मणोविवक्तुमर्हतीति पितृतोपि त-स्योत्पत्तिसंभवात् । तदभिप्रायमेतत्स्याद्यद्कुण्डगोलकयोः श्राद्धनिषेधदर्शनं तदुक्तंश्रुतिभ्रमेण ब्राह्मण्याशङ्कायांप-रिहारार्थंस्यान्नतु स्वभ्रष्टब्राह्मण्यजनकम् ॥ ५ ॥ **स्त्रीष्विति** । अव्यवहितवर्णजातीयासु भार्यासु द्विजातिभिर्ये-उत्पादिताः पुत्राः यथा ब्राह्मणेन क्षत्रियायांक्षत्रियेण वैश्यायांवैश्येन शूद्रायां तन्मातुर्हीनजातीयत्वे गर्हितानतएव पितृसदृशान् तान् मन्वादयआहुः । नतु पितृजातायनामानि चैषांमूर्धावसिक्तमाहिष्यकरणाख्यानि याज्ञवल्क्यादि-भिरुक्तानि । वृत्तयश्चैषामथोशनसा निर्दिष्टाहस्त्यश्वरथशिक्षा अस्त्रधारणंच मूर्धावसिक्तानांगीतनृत्यनक्षत्रैर्जीवनं सस्यरक्षा च माहिष्याणां स्वजातिशुश्रूषा धान्याध्यक्षता राजसेवा दुर्गान्तःपुररक्षा च पारशवोग्रकरणानामिति ॥ ६ ॥ **अनन्तरा-स्विति** । एषनित्योविधिरनन्तरजातिभार्योत्पन्नानां उक्तएकेन द्वाभ्यांव्यवहितास्तदुत्पन्नानांयथा ब्राह्मणेन वैश्यायांक्ष-त्रियेण शूद्रायांब्राह्मणेन च शूद्रायां इमंवक्ष्यमाणंधर्मादनपेतंनामविधानंजानीयात् ॥ ७ ॥

[ विप्रान्मूर्धावसिक्तस्तु क्षत्रियायांसुतोभवेत् ॥ क्षत्रियाद्वैश्यकन्यायां—षस्तुसुतः स्मृतः ॥१॥ ]

**ब्राह्मणादिति** । विन्नास्वेषविधिः स्मृतः इतियाज्ञवल्क्यदर्शनात् ब्राह्मणाद्वैश्यकन्यायामूढायां अंबष्ठाख्योजायते । शूद्रकन्यायामूढायांनिषादउत्पद्यते । यःपारशवइत्यनेन संज्ञान्तरेणाशास्त्रउच्यते संज्ञान्तरकथनंमत्स्यघातवृत्तिप्रतिलोम-निषादभ्रान्तिनिराकरणार्थम् ॥ ८ ॥ **क्षत्रियादिति** । क्षत्रियाच्छूद्रकन्यायामूढायांक्रूरचेष्टावान् पापस्वभावः क्षित्रयशूद्रो-त्पन्नदेहः प्राण्युग्राख्योनरोजायते । वृत्तिश्चास्य पूर्वश्लोके उशनसोक्ता दर्शिता ॥९॥ **विप्रस्येति** । ब्राह्मणक्षत्रियादिवर्ण-त्रयस्त्रीषु क्षत्रियस्य वैश्यादिवर्णद्वयस्त्रियोः वैश्यस्य च शूद्राख्यवर्णस्त्रियाम् । एतउक्तास्त सवर्णपुत्रकापेक्षयाऽपसदापुत्र-कार्यादवशीर्णाइत्येतेऽपसदास्तन्निकृष्टाःस्मृताः ॥ १० ॥ एवमनुलोमानुक्त्वा प्रतिलोमानाह **क्षत्रियादिति** । अस्मिन् श्लोके पूर्वार्धंसुगमम् । उत्तरार्धंव्याख्यातम् । अत्र विवाहासंभवात्कन्याग्रहणंस्त्रीमात्रप्रदर्शनार्थम् । क्षत्रियाब्राह्मण्योर्यथाक्रमंमा-गधवैदेहाख्यौ पुत्रौ भवतः एषांवृत्तयोऽस्मिन्नेव शास्त्रे निर्दिष्टाः । अनिर्दिष्टवृत्तीनांपुनः शास्त्रान्तरोक्ताअस्माभिर्यथा-वसरंनिर्दिश्यन्ते ॥ ११ ॥ **शूद्रादिति** । **वैश्यराजन्यविप्रासुजायन्तेवर्णसङ्करे॥** शूद्रात् द्विजातिवर्णानांमैथुनाख्यसङ्करे सति वैश्यायामायोगवः क्षत्रियायांक्षत्ता ब्राह्मण्यांचाण्डालोमनुष्याधमोजायते ॥ १२ ॥ **एकान्तरइति** । एकव्यवहिते वर्णे वर्णानुक्रमेण ब्राह्मणाद्वैश्यायांक्षत्रियाच्छूद्रायां उत्पन्नावम्बष्ठोग्रौ यथास्पर्शार्हौ तद्वत् प्रातिलोम्ये जननेपि क्षत्रियवैदेहिकौ स्पर्शादियोग्यौ विज्ञेयौ । एकान्तरोत्पन्नयोश्च स्पर्शाद्यभ्यनुज्ञानादर्थानन्तरोत्पन्नानामपि सूतमागधा योगवानांस्पर्शादियोग्यत्वंसिद्धंभवति । एवंचण्डालएवैकोत्रपर्युदास्यते ॥ १३ ॥ **पुत्राइति** । ये द्विजातीनां अन्तरै-कान्तरद्यन्तरजातिस्त्रीषूत्पन्नाः क्रमेणोक्ताः पुत्रास्तान् हीनमातृकत्वान्मातृजातिव्यपदेशानाचक्षतइतीदमेवंमातापितृव्य-तिरिक्तजातित्वाद्धर्मास्ते मातृजातिगतसंस्कारादिधर्ममाप्त्यर्थवचनं मातृदोषादितिहेतूपादानादनन्तरग्रहणमेकान्तरप्रद-र्शनार्थम् ॥१४ ॥ **ब्राह्मणादिति** । क्षत्रियेण शूद्रायामुत्पन्ना उग्रीतस्यांब्राह्मणादावृतोनामा जायते । ब्राह्मणेन वैश्याया-

मुत्पन्नाम्बष्ठी ब्राह्मणादाभीराख्योजायते। अनयोश्च हस्त्यादिस्वाधिका आवृतानांगोजाविरक्षा आभीराणामित्यथौश-नसे वृत्तिरुक्ता। शूद्रेण वैश्यायामुत्पन्नायोगवी तस्यांब्राह्मणादाभीराख्योजायते॥१५॥ **आयोगव**इति। अयोगवः क्षत्ता-चण्डालोमनुष्याधमइत्येते त्रयोऽप्युत्क्रमेण वैश्याक्षत्रियाब्राह्मणीषु शूद्रादपसदाः पुत्रकार्यादपगताः जायन्ते ॥ १६ ॥ **वैश्यादिति**। **जातोनिषादाच्छूद्रायांजात्या भवति पुल्कसः॥ शूद्राज्जातोनिषाद्यांतु सवै कुक्कुटकःस्मृतः॥** पुरुषजातेः प्रतिलोमत्वान्न निषादोत्र पारशवःपितुः प्रतिलोमे हि यथाव्यासः। उग्रामागधसंयोगाज्जातः कु-तलकासिधः। सनापितइतिप्रोक्तः क्षुरकर्मविधानकृत्॥ क्षत्रियाज्जायते वैश्यान्मागधोवाक्यजीवनः। शूद्रान्निषादा-मत्स्यघ्नः क्षत्रियायांव्यतिक्रमात्॥ इत्येवंचैतस्मान्निषादाच्छूद्रायांजातोजातितः पुल्कसः साक्षाद्भवति। निषाद्यां-पुनरेवंविधायामेव यः शूद्राज्जातः सकुक्कुटनामा स्मृतस्तस्य च कुक्कुटकानांप्रहरकः करणंचक्रतोमरभिण्डिमा-लप्रासासिपरशुलगुडलोहजालिकासरवघ्नानि कर्माणीति शङ्खेन वृत्तिरुक्ता ॥ १८ ॥ **क्षत्तुरिति**। क्षत्तुः शूद्राक्षत्रिय जातायामुत्पन्नः श्वपाकइत्युच्यते। वैदेहकेन वैश्यतोब्राह्मणजातेनाम्बष्ठ्यां ब्राह्मणेन वैश्याजा-तायामुत्पन्नोवेनइतिकथ्यते ॥ १९ ॥ इदानीं व्रात्यजातानामप्रतिलोमानामपि सतांसंस्कारत्वप्रतिपादनार्थमतऊर्ध्वं-त्रयोऽप्येतइत्याद्युक्तंव्रात्यलक्षणमनुवदितुमाह **द्विजातय**इति। द्विजातिस्त्रीषु यान्पुत्रानुत्पादयति तेचेदुपनयनाख्यव्रतहीं-नाभवन्ति तदा तानकृतोपनयनान् व्रात्यानित्यनया संज्ञया व्यपदिशेत्॥ २० ॥ **व्रात्यात्तुजायतेविप्रात्पा-पात्माभृज्जकण्टक**इति। उक्तलक्षणाद्व्रात्यात्सवर्णास्वित्यपुनरावृत्तेः ब्राह्मण्यां पापवतोत्पन्नत्वात् दुष्टशरीरभृज्ज-कण्टकाख्योजायते। तथावाटधानपुष्पधसैखाख्याजायन्तइति एकस्यैव देशभेदप्रसिध्यैतानि नामान्येवमुत्तरत्रापि गौतमेन ब्राह्मणाद्वैश्यायांजातोभृज्जकण्टकउक्तः। सचानुलोमत्वादपाप्मेति विशेषणं एषांचवृत्तयोथौशनसउक्ताअभि-चारमूलकर्मद्विषतांमन्त्रौषधीश्चाभिमुखीकरणंनाशनंवा भृज्जकण्टकानां आवन्त्यवाटधानैः स्वसैन्यानांविजित्वा चर्या व्रात्यजैरन्यैः परराष्ट्राणांकोशमन्त्रवृत्तज्ञानंमित्रामित्रताच ज्ञेयेति॥ २१ ॥ **झल्लोमल्लश्चे**ति। क्षत्रियाद्व्रात्यायांसवर्णायां-झल्लमल्लनिच्छिविनटकरणखसद्रविडाख्याजान्ते। इत्येषांचवृत्तयोथौशनसउक्ताः चारवृत्तित्वान्नटकरणानामुदकाहरणं-प्रपावेश्मदानंच खसद्रविडानांशिष्टानांव्रात्यजैरन्यैरित्यादिपूर्वश्लोके दर्शितम्॥ २२ ॥ **वैश्यादिति**। वैश्यात्पुन-र्व्रात्यासुधन्वाचार्यकारुषविजन्ममैत्रसात्वताख्याजायन्ते। वृत्तयश्चैषामप्यौशनसउक्ताः आचार्यसात्वतैः देवपूजनंशि-ष्टानांव्रात्यजैरन्यैरित्यादिदर्शनम्॥ २३ ॥ **व्यभिचारेणे**ति। ब्राह्मणादीनांवर्णानामितरेतरस्त्रीगमने स्वगोत्राद्यवि-वाह्यविवाहेनोपनयनाख्यस्वकर्मत्यागेन वर्णसंकरोनाम इत्युत्पद्यते। अतोयुक्तमित्यस्मिन्प्रकरणे व्रात्यजातानामभिधा-नम्॥ २४ ॥ **संकीर्णयोनय**इति। ये मिश्रयोनयः प्रतिलोमाभ्यः स्त्रीभ्यः प्रतिलोमैरनुलोमैश्च जायन्ते अनुलोमाभ्य-श्चानुलोमैः प्रतिलोमैश्च जायन्तएवंपरस्परसंबद्धांस्तानशेषेण प्रवक्ष्यामि॥ २५॥ **सूत**इति। सूतादयउक्तलक्षणाउत्तरार्ध-मनूद्यम्॥ २६॥ **एत**इति। एते षट् सूतादयः प्रतिलोमासजातीयासु स्त्रीषु सूतान् सूतायांसूतमेवजनयतीत्येवंसमानजाती-यान्वर्णप्रभवस्त्वाद्वर्णान् जनयन्ति। अनुलोमाः पुनर्मातृजातीयायांस्वजातीयायांच सदृशांजनयन्ति। तद्यथा अम्बष्ठोवैश्यायाम-

---

(१) कुक्कुट=कुर्कुट (गौ०२,५)

मबष्ठ्यांवाम्बष्ठमेवजनयति। संकीर्णयोनयोयेतु प्रतिलोमानुलोमजाः इत्यनुलोमानामपि प्रस्तुतत्वात्प्रतिलोमेभ्यश्च मातृजातीयायांसदृशजननासांभवात् द्वितीयार्धश्लोकोनुलोमविषयतया व्याख्यायते॥२७॥**यथेति**। **आनन्तर्यात्स्वयोन्यांचतथा बाह्येष्वपिक्रमः**॥ यथात्रयाणांवर्णानांक्षत्रियवैश्यशूद्राणांमध्यात् द्वयोर्वर्णयोः क्षत्रियवैश्ययोर्गमने ब्राह्मणस्यानुलोम्याद्विजउत्पद्यतेस्वजातीयायांच द्विजोजायते। एवंच बाह्येष्वपि वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योर्जाते व्युत्क्रमोभवतीति। शूद्रजातिप्रतिलोमापेक्षया द्विजात्युत्पन्नप्रतिलोमस्तुतिः। यत्तुद्विजत्वप्रतिपादकमेतदेषांवचनमुपनयनार्थमित्याहुस्तदसत्प्रतिलोमास्तुधर्महीनाइति गौतमीये प्रतिलोमानांसंस्कारनिषेधात् ॥ २८ ॥ तइति। तेप्यायोगवादयः षट् परस्परजातीयासु भार्यासु प्रतिलोमान् सुष्टुबहूनात्मनोधिकदुष्टान्निन्दितान् जनयन्ति। तत्तथायोगवः क्षत्र्याआत्मनोहीनतरंजनयति क्षत्तायोगव्यामात्मनोहीनतरमुत्पादयतीत्येवमन्येष्वपि प्रतिलोमेषु द्रष्टव्यम् ॥ २९ ॥ **यथेति। तथा बाह्यतरंबाह्याद्बाह्यो वर्णः प्रसूयते** ॥ यथा शूद्रोब्राह्मण्यांनिकृष्टंचण्डालाख्यंप्राणिनंजनयत्येवंबाह्याच्चण्डालादेर्ब्राह्मणादिषु चतुर्ष्वपि वर्णेषु चण्डालादिभ्योनिकृष्टतरंजायते ॥ ३० ॥ एतदेवप्रपञ्चयति **प्रतिकूलमिति**। चातुर्वर्ण्यबाह्याश्चण्डालाः क्षत्तायोगवाः शूद्रप्रभवास्त्रयश्चातुर्वर्ण्येगच्छन्तआत्मनोहीनतरान् परस्परापेक्षयोत्कृष्टानात्मनासहपञ्चदशवर्णप्रभवत्वाद्वर्णान्संपादयन्ति। तद्यथा चण्डालः शूद्रायामात्मनोहीनतरंवैश्याक्षत्रियाब्राह्मणीजातेभ्यउत्कृष्टंजनयति। ततोप्यपसदंक्षत्रियायांब्राह्मणीजातादुत्कृष्टंजनयति। ततोपि हीनंब्राह्मण्यांजनयत्येवंक्षत्त्रायोगवावपि चातुर्वर्ण्ये च चतुरश्चतुरोजनयेते इत्येते शूद्रप्रसवेभ्यः चण्डालक्षत्त्रायोगवेभ्यः [ अ० २ ] द्वादशप्रभेदाउत्पद्यन्ते आत्मनाचचाण्डालक्षत्त्रायोगवास्त्रयइत्येवंशूद्रप्रभवाःपञ्चदश [ अ० ४ ] क्षत्रियब्राह्मणप्रभवाश्चपञ्चदश भवन्त्येवंषष्टिः चातुर्वर्ण्येनसहचतुःषष्टिरपष्टप्रभेदाभवन्ति तेतु परस्परस्य गमनेनानन्तान् जनयन्ति ॥ ३१॥ **प्रसाधनोपचारज्ञमदासंदास्यजीवनमिति**। केशरचनादिप्रसादनाङ्गसंवाहनाद्युपचारज्ञमदासमशूद्रत्वात्प्रसाधनादिदासकर्मजीवनं पाशबन्धनेन च मृगादिवधजीवनंसैरन्ध्राख्यं मुखबाहूरुपज्जानामिति वक्ष्यमाणोदस्युरायोगव्यांशूद्राजातायांजनयति। एतस्यमृगादिहिंसनमार्याणांदेवपित्रौषधार्थं आत्मपुत्रदारात्ययप्रमाःस्यादेवमन्येषामपि प्रायोवधजीविनांवेदितव्यम् ॥ ३२ ॥ **मैत्रेयकमिति**। वैदेहोवैश्याद्ब्राह्मणीजातः प्रकृतायामायोगव्यांमैत्रेयकाख्यंमधुरभाषिणंजनयति यः प्रातर्घण्टामाताड्य राजप्रभृतीननवरतवृद्ध्यर्थंस्तौति ॥ ३३ ॥ **निषादोमागधमिति**। प्रतिलोमाधिकारात्प्रतिलोमोनिषादोव्यासोक्तोयउक्तः सप्रकृतायामायोगव्यांमागधंदासापरनामानंनौव्यापारजीविनंजनयति यमार्यावर्तनिवासिनः कैवर्तशब्देन ब्रुवते ॥ ३४ ॥ **मृतवस्त्रभृत्स्वनार्यास्विति**। एते सैरन्ध्रमैत्रेयकमागधहीनजातीयाः त्रयः शववस्त्रपरिधानासु क्रूरासूच्छिष्टादिभक्ष्यास्वायोगवीषु पितृभेदाद्भिन्नजातयोभवन्ति ॥ ३५ ॥ **कारावरइति**। वैदेह्यामेवजायतइत्यस्यवक्ष्यमाणस्यावधारणस्य पूर्वत्रापि वैदेहवबोधकत्वादिहाश्रुतापि वैदेही लभ्यते। निषादश्च प्रतिलोमाधिकारात् प्रतिलोमउक्तस्तेन निषादाद्वैदेह्यांकारावराख्यः कारावराणांचर्मच्छेदनसीवनमिति पौरान् संदर्शनाच्चर्मच्छेदनसीवनवृत्तिर्जायते। वैदेहिकादंध्रमेदाख्यावरण्यनिवासिनौ स्तुत्यन्तरनिर्देशात् वैदेह्यांच भिन्नजात्युत्पादःस्यान्नाद्यत्वात्कारावरनिषादजात्योश्च श्लोकेत्रसंनिधानात्कारावरनिषादस्त्रियोरेव जायते ॥ ३६ ॥ **चाण्डालादिति**। चाण्डालाद्वैदेह्यांपाण्डुसोपाकाख्योवेणुव्यवहारजीवी जायते। नचनिषादेन वैदेह्यामेवाहितुण्डिकाख्योजायते। **अस्यबन्धनस्थानेषु बाह्यसंरक्षणमाहितुण्डिकानामित्यौशनसेवृत्तिरुक्ता** ॥ ३७ ॥ **चाण्डालेनचेति। पुल्कस्यां जायते पापः सदा सज्जनगर्हितः** ॥ चण्डालेन पुल्कस्यांजातोनिषादाच्छूद्रायामित्युक्तायांसोपाकाख्यः पापात्मा सर्वदा साधुभिर्निन्दितोराजाज्ञया वध्यमारणवृत्तिर्जायते

॥ ३८ ॥ **निषादस्त्रीति** । प्रतिलोमनिषादस्त्री चण्डालादन्त्यावसाय्याख्यंपुत्रंचण्डालादिभ्योदुष्टतमंश्मशानवासिनंतद्वृत्तिंच **जनयति** ॥ ३९ ॥ **सङ्करइति** । वर्णसङ्करविषये एताजातयोयस्येयंजनन्ययंजनकोऽयमेवंजातीयइत्येवंपितृमातृकथनपूर्वकं प्रदर्शिताः । एताश्च गूढाः प्रकटावा तज्जातिचोदितकर्माचरणदर्शनेन बोद्धव्याः ॥ ४० ॥ **स्वजातिजानन्तरजाइति** । द्विजातीनांसमानजातीयासु भार्यासु जातास्तथा नान्योत्पन्नाब्राह्मणक्षत्रियाभ्यांक्षत्रियावैश्ययोरित्येते षट् सुताद्विजधर्माणउपनेतव्याः । ताननन्तरनाम्नस्त्वित्यत्रयंनामनिर्देशोव्यवहारार्थोन संस्कारार्थइति कस्यचिभ्रान्तिः स्यादित्यतइदमेषामुपनयनार्थंवचनम् । ये पुनरन्ये सङ्करजाः सूतादयस्ते सर्वे तुल्यरूपास्तेषामुपनयनंनास्ति द्विजात्युत्पन्नानामपि ॥ ४१ ॥ **तपोबीजप्रभावैस्तेगच्छन्तियुगेयुगइति** । ते स्वजातिजाऽनन्तरजास्तपःप्रभावेन हेतुना जातितोगच्छन्ति ॥ ४२ ॥ तथा चाह **शनकैरिति** । इमावक्ष्यमाणाः क्षत्रियजातयः सत्यउपनयनादिक्रियालोपेन ब्राह्मणानांच यजनाध्यापनप्रायश्चित्ताद्यर्थदर्शनाभावेन शनैः शनैः लोके शूद्रतांप्राप्ताः ॥ ४३ ॥ **पौण्ड्रकाइति** । पौण्ड्रकादयःक्षत्रियाः सन्तःक्रियालोपादिनाशूद्रत्वमापन्नाः ॥ ४४ ॥ **मुखबाहूरुपज्जानामिति** । ब्राह्मणक्षत्रियवैश्यशूद्राणांयाबाह्याः क्रियालोपादिना जातयोम्लेच्छभाषोपेताआर्यभाषायुक्तावा बर्बरकालाद्यास्ते सर्वे दस्युशब्दवाच्याः स्मृताः ॥ ४५ ॥ **यइति** । ये द्विजानांप्रातिलोम्येनोत्पन्नाये च द्विजातिभिरपि शूद्रायामानुलोम्येन जातास्ते द्विजात्युपकारकैरेवानिन्दितैःकर्मभिः जीवेयुः ॥ ४६ ॥ **सूतानामिति** । **वैदेहिकानांस्त्रीकार्यमागधानांवणिक्पथः** ॥ सूतानामश्वदमनयोजनादिकमंबष्ठानांकायशल्यादिचिकित्सा वैदेहिकानामन्तःपुररक्षादि मागधानांस्थलपथवारिपथवाणिज्या । अम्बष्ठश्चात्रावद्यायां शूद्रजातौ बौधायनदर्शनाद्विज्ञेयोन तु ब्राह्मणेन वैश्याज्जातएतच्छास्त्रोक्ताये द्विजानामपसदाये चापध्वंसजाः सुताः ते निन्दितैर्वर्तयेयुरिति प्रस्तुतत्वात् ॥ ४७ ॥ **मत्स्यघातइति** । **मेदान्ध्रचूचुमद्गूनामारण्यपशुहिंसनम्** ॥ आयोगवस्य तक्षणंमेदान्ध्रचूचुमद्गूनामारण्यपशुमारणं मागधक्षत्तारौ चूचुमद्गू । यथाह यमः ॥ क्षत्रियायांतु वैश्येन चूचुकोनामजायते ॥ शूद्रेण जायते मद्गुः क्षत्रियायत्रमुह्यति ॥ संज्ञान्तरेणानयोर्निर्देशोदेशभेदेनैषांसर्वेषामनेकनामता च भवतीति ज्ञापनार्थम् । तथा च स्मृत्यन्तरे तेषांनामान्तराण्यपि दृश्यन्ते ॥ ४८ ॥ **क्षत्त्रुग्रपुल्कसानामिति** । क्षत्त्रादीनांश्वाविद्गोधादिवधबन्धनमुग्रश्चात्र निकृष्टकर्माभिधानादुग्रजातिः प्रतिलोमः कश्चिद्वेदितव्योनतुकोनुलोमस्तस्य हि द्विजातिशुश्रूषाधनाध्यक्षतेत्याद्यौशनसोक्तावृत्तिर्दर्शिता । धिग्वणानां **चर्मकरणतद्विक्रयौ** चर्मकरणंतद्विक्रयजीवनंधिग्वणानांचेत्यौशनसदर्शनात् । अतः कारावरेभ्यएषांवृत्तिभेदौ वेणानांच वंशमुरजादिवाद्यभाण्डवादनम् ॥ ४९ ॥ **चैत्यद्रुमश्मशानेष्विति** । ग्रामादिसमीपेख्यातवृक्षश्चैत्यद्रुमस्तन्मूलश्मशानपर्वतवनसमीपेष्वेते प्रकाशाः सन्तः स्वकर्मभिर्जीवन्तोवसेयुः ॥ ५० ॥ **चण्डालश्वपचानामिति** । **वासांसीति** । चण्डालश्वपाकानांग्रामाद्बहिर्निवासः स्यात् । पात्रबहिष्कृताश्च कर्तव्याः यतः तदुक्तंलोहादिपात्रंसंस्कारेणापि न शुध्यति । धनंचैषांश्वखरं नान्यत् वासांसिचशववस्त्राणि । खण्डशरावादिषु च भोजनम् । आयसंचालंकरणम् । सर्वदानैकत्रावस्थानम् ॥ ५१ ॥ ५२ ॥ **नतैरिति** । धार्मिकः पुरुषः चण्डालश्वपचैः सहलोकयात्रादिव्यवहारान्न कुर्यात् । तेषांच दानग्रहणादिव्यवहारोविवाहश्च समानजातीयैः सह परस्परंस्यात् ॥ ५३ ॥ **अन्नमिति** । अन्नंचैषांपरायत्तंन तु स्वतः साधितम् । तच्च भिन्नपात्रे

---

( १ ) अन्योत्पन्ना=आनुलोम्योत्पन्ना ( गो० २, ५, )

एषांदातव्यम् । ते च रात्रौ ग्रामनगरयोर्न पर्यटेयुः ॥ ५४ ॥ **दिवेति** । दिवा ग्रामादौ राजादिष्टक्षुरादिचिन्हाङ्किताः सन्तः सप्रयोजनंपर्यटेयुः । अनाथंशवंग्रामान्निर्हरेयुरिति साधुमर्यादा ॥ ५५ ॥ **वध्यानिति** । राजाज्ञया च शास्त्रानतिक्रमेण शुद्धवधशुलारोपणादिना सर्वदा वधार्हान्हन्युः तद्वस्त्रशय्यालंकरणानि च गृह्णीयुः ॥ ५६ ॥ **वर्णापेतमिति** । वर्णत्वाद्भ्रष्टंमनुष्यंसङ्करजातंलोकतस्तथाविधत्वेनाज्ञातमतएवचार्यसदृशं वस्तुतः पुनरनार्यंकलुषयोनिजं अनुरूपाभिश्चेष्टाभिर्निश्चिनुयादतश्चनिश्चित्यपरिहरेत् ॥ ५७ ॥ **अनार्यतेति** । नैर्घृण्यपरुषभाषित्वाहिंस्रत्वविहितप्रतिषिद्धानुष्ठानशीलत्वानिसङ्करजातंपुरुषमस्मिन् लोके प्रकटीकुर्वन्ति ॥ ५८ ॥ यस्मात् **पित्र्यमिति** । तज्जनकयोर्दुष्टत्वभावत्वेनाकार्यकारित्वादसौ दुष्टयोनिः पितृसंबन्धिदुष्टभावत्वंसेवते मातृसंबन्धोभयगतंवाऽतोन कदाचिदसावात्मकारणंगोपायितुंशक्नोति ॥५९॥ **कुलइति** । महाकुलोत्पन्नस्यापि यस्ययोनिसंकरःप्रच्छन्नोभवति सजनः सपितृगतंत्वभावमीषद्वा बाहुल्येन सेवतएव ॥६०॥ **यत्रेति** । यस्मिन्राष्ट्रेएतेवर्णानांदूषकाःसङ्करजाविनिपाताजायन्ते तद्राष्ट्रंराष्ट्रवार्तिजनैःसह शीघ्रमेव नाशमेति तस्माद्राज्ञा वर्णसङ्करोरक्षणीयः ॥ ६१ ॥ **ब्राह्मणार्थइति** । **स्त्रीबालाभ्यवपत्तौचबाह्यानांसिद्धिकारणं** ॥ गोब्राह्मणस्त्रीबालपरित्राणार्थंदृष्टप्रयोजनानपेक्षःप्राणत्यागः प्रतिलोमार्थंस्वर्गप्राप्तिकारणम् ॥ ६२ ॥ **अहिंसेति** । श्राद्धकर्मातिथेयंचदानमक्रोधमार्जवं ॥ प्रजनंस्वेषुदारेषुतथाचैवानुसूतयता ॥ हिंसावर्जनं यथोपलब्धाभिधानं परस्वाग्रहणं मृद्वारिशुद्धिरिन्द्रियसंयमइत्येतंसांक्षेपिकंधर्मंचातुर्वर्ण्यानुष्ठेयंमनुराह । प्रकरणसामर्थ्याच्च चातुर्वर्ण्यग्रहणस्यान्तरप्रभवेदर्शनार्थत्वे सत्यन्तरप्रभवविषयमपीदंवाक्यम् ॥ ६३ ॥ इदानींसर्ववर्णेषु तुल्यात्वित्येतल्लक्षणव्यतिरेकेणापि ब्राह्मणादिदर्शयितुमाह **शूद्रायामिति** । शूद्रायांब्राह्मणाज्जातः पारशवाख्योवर्णः स्त्रीलक्षणः सा यदिस्त्री ब्राह्मणेनोढा सती प्रसूते दुहितरंच जनयति साप्यनेन ब्राह्मणेनोढा सती दुहितरमेवजनयति साप्येवमेवेत्येवंसपारशवाख्योनिष्कृष्टे सबीजप्राधान्यात् सप्तमे युगे ब्राह्मणजातिंप्राप्नोति । सप्तमोजातःब्राह्मणःसंपद्यते ॥ ६४ ॥ **शूद्रइति** । एवमुक्तनीत्या शूद्रोब्राह्मणतांप्राप्नोति । यदि पुनर्ब्राह्मणाच्छूद्रायांपुमानुत्पद्यते सकेवलशूद्रोद्वाहेन ततः पुमांसमेव जनयति सोपिकेवलशूद्रोद्वाहेनेनान्यंपुमांसमेव तदासब्राह्मणःसप्तमांसंततिंप्राप्तः शनैःशनैः बीजनिष्कर्षात्केवलशूद्रतांप्राप्नोति । सप्तमोजातः शूद्रःसंपद्यते । एवंक्षत्रियवैश्याभ्यांशूद्राज्जातस्योत्कर्षापकर्षौ जानीयात् । किंतु जातितारतम्यात्क्षत्रियस्य पञ्चमेजन्मनि उत्कर्षापकर्षौ च वैश्यस्य तृतीयइति व्याचक्षते । एवमनेनैव न्यायेन ब्राह्मणोवैश्याज्जातस्य पञ्चमे उत्कर्षापकर्षौ क्षत्रियाज्जातस्य तृतीयेन वैश्याज्जातस्य च तृतीयएव ॥ ६५ ॥ **अनार्यायामिति** । यः शूद्रायामनूढायांब्राह्मणादुत्पन्नोयश्च ब्राह्मण्यामपि शूद्राज्जातस्तयोः कस्य प्रशस्ततरत्वमिति यदिभवतांसंशयः स्यादिति भृगुर्बीजप्राधान्येनोत्कर्षउपन्यस्ते सति क्षेत्रबीजकारणकत्वाज्जगतः क्षेत्रप्राधान्येनाप्युत्कर्षः किमिति न स्यादित्यृषीणांभ्रान्तिमाशङ्कमानस्तानाह ॥ ६६ ॥ अत्र निर्णयमाह **जातइति** । शूद्रायांब्राह्मणाज्जातः स्मृत्यभ्यनुज्ञातैः पाकयज्ञादिभिरनुष्ठीयमानैः प्रशस्योभवति । शूद्रात्पुनर्ब्राह्मण्यामपि जातः प्रतिलोमत्वेन शूद्रधर्मेष्वप्यनधिकारात् न प्रशस्यइतिनिश्चयोयतोयावद्वचनमत्रप्राधान्यमवतिष्ठते नानुमानतः ॥ ६७ ॥ **ताविति** । तौपारशवचण्डालौ द्वावप्यनुपनेयौ चेति शास्त्रमर्यादा स्थिता । शूद्राज्जातत्वेन जातिवैगुण्यात् पारशवानुपनेयचाण्डालस्य प्रातिलोम्येनोत्पन्नत्वात् ॥ ६८ ॥ **सुबीजमिति** । यथाशोभनंबीजंशोभने क्षेत्रे जातंसमृद्धंभवत्येवंद्विजातेर्द्विजातिस्त्रियामानुलोम्येन जातः स्वजातिजानन्तरजैकान्तरजरूपंसर्वंश्रौतंस्मार्तं·

संस्कारमर्हतिनपारशवचण्डालमितिपूर्वोक्तदार्ढ्यार्थमेतत् ॥ ६९ ॥ दर्शनान्तराण्यपास्यैवार्थस्योपोद्वहनार्थमाह बीजमिति । केचिद्बीजंस्तुवन्ति यक्षाद्युत्पन्नानामृष्यशृङ्गादीनामृषित्वदर्शनादपरे पुनः सूरयः क्षेत्रंस्तुवन्तिसमृद्धिदर्शनात्तदेतस्यांपुनर्विप्रतिपन्नत्वादियंवक्ष्यमाणा व्यवस्था विज्ञेया ॥ ७० ॥ अक्षेत्रइति । ऊषरप्रदेशे बीजमुप्तमदत्त्वैव फलंविनश्यति । शोभनमपि च क्षेत्रंबीजरहितंशुद्धस्थण्डिलमेव स्यात् सस्यानुत्पादस्तस्मादुभयंप्रधानमिति न्याय्यम् ॥ ७१ ॥ बीजप्राधान्यपक्षे दृष्टान्तमाह तस्मादिति । यस्माद्बीजमाहात्म्येन तिर्यग्जातिमातृजाअपि ऋष्यशृङ्गादयः संपन्नाः पूजिताश्च पादवन्दनादिभिः पूजाभिः प्रशस्ताश्च बालाः संस्तुताः तस्माद्बीजंकैश्चित्सूयतइति बीजप्राधान्यंपुनर्गमयत्वेन ज्ञापयति तद्बीजयोन्योर्मध्याद्बीजोत्कृष्टजातिः प्रशस्यतइति ॥ ७२ ॥ अनार्यमिति । शूद्रंद्विजातिकर्मकारिणंद्विजातिंच शूद्रकर्मकारिणंप्रजापतिर्विचार्य न समौ तौ नाप्यसमावित्याह । यतः शूद्रोद्विजातिकर्माणि न द्विजातिसमस्तस्य द्विजातिकर्माधिकारे सति ततउत्कर्षाभावान्निषिद्धाचरणेन च प्रत्यवायात् द्विजातिरपि शूद्रकर्माणि आचरन् न शूद्रसमोनिषिद्धसेवने जातेपि महाभाग्यान्नाप्यसमोपि निषिद्धाचरणेनोभयोःपातित्यात्तस्मात्यस्य विहितंतत्तेन कर्तव्यमिति सङ्करपर्यन्तवर्णोपदेशः ॥ ७३ ॥ इदानीमापद्धर्मविवक्षयेदमाह ब्राम्हणाइति । ये ब्राह्मणाब्रह्मप्राप्तिकारणआत्मज्ञानाभ्यासे व्यवस्थिताः ते षट्कर्माणि सम्यगनुतिष्ठेयुः । तानि च स्वकर्मानुष्ठाननिरताश्च ते षट्कर्माणि वक्ष्यमाणआत्मज्ञानाभ्यासे व्यवस्थिताः सम्यगनुतिष्ठेयुः ॥७४॥ अध्यापनमिति । अध्यापनादीनि षट् कर्माणि ब्राह्मणस्यानुष्ठेयानि अध्ययनाध्यापनसाङ्गस्य वेदस्य पाठशिष्यप्रवचने यजनयाजने यागार्त्विज्ये ते षट्कर्माणि ॥ ७५ ॥ षण्णामिति । एषामध्यापनादीनांषण्णांकर्मणांमध्याद्याजनमध्यापनंप्रशस्तानांस्वकर्मसु द्विजातीनांब्राह्मणोभुञ्जीत । प्रतिगृह्णीयाच्चेति गौतमदर्शनाद्धार्मिकाद्द्विजातेः प्रतिग्रहमित्येतानि त्रीणिकर्माणिजीवनार्थानि ॥ ७६ ॥ त्रयइति । ब्राह्मणानपेक्ष्य क्षत्रियस्याध्यापनयाजनप्रतिग्रहाख्यानि त्रीणि वृत्त्यर्थानि कर्माणि निवर्तन्ते । एवंच सत्यध्ययनयागदानानि भवन्ति ॥ ७७ ॥ वैश्यमिति । यथैवक्षत्रियस्याध्यापनयाजनप्रतिग्रहानिवर्तन्ते एवंवैश्यस्यापीति शास्त्रव्यवस्था । यस्मान्मनुः प्रजापतिःक्षत्रियवैश्ययोरेतानि वृत्त्यर्थानि कर्माणि कर्तव्यत्वेन स्मृतवान् एवं च वैश्यस्याप्यध्ययनयागदानानि भवन्ति ॥ ७८ ॥ शस्त्रास्त्रभृत्त्वमिति । वृत्त्यर्थत्वेन रक्षणार्थंखड्गाद्यायुधप्रहरणमन्त्रधारणंक्षत्रियस्य । वाणिज्यपशुपालनकर्षणानि वैश्यस्य जीवनार्थान्यदृष्टार्थाःपुनरनयोर्दानाध्ययनयागाभवन्ति ॥ ७९ ॥ वेदाभ्यासइति । वृत्त्यर्थोभ्यांसहोपदेशादध्ययनस्य समानत्वाद्वेदाभ्यासोऽध्यापनंब्राह्मणस्य । लोकसंरक्षणंक्षत्रियस्य । कृषिवाणिज्यपाशुपाल्यंवैश्यस्यइत्येतान्येषांवृत्त्यर्थत्वेपि सत्यदृष्टजनकत्वात्स्वकर्मंमध्ये प्रशस्तानि ॥ ८० ॥ एवंनैसर्गिकंस्वधर्ममेषामुक्त्वाऽधुनापद्धर्ममाह अजीवन्निति । उक्तरूपेण पुनरध्यापनादिना स्वकर्मणा ब्राह्मणकुटुंबस्थितिनित्यकर्मानुष्ठानपूर्वकमजीवन् क्षत्रियकर्मणा ग्रामरक्षणनगरादिना जीवेद्यस्मात्सोस्य संनिकृष्टवर्णनोदितत्वासन्निकृष्टावृत्तिः ॥ ८१ ॥ उभाभ्यामिति । ब्राह्मणक्षत्रियवृत्तिभ्यामपि जीवन् ब्राह्मणः केन प्रकारेण वर्तेत इति यदि संशयः स्यात्तदा कृषिगोरक्षणेआश्रित्य वैश्यवृत्तिमनुतिष्ठेत् । कृषिगोरक्षग्रहणंवाणिज्या वा अपिप्रदर्शनार्थम् । तथा च विक्रेयाविक्रेयाणिवक्ष्यति । स्वयंकृतंवेदब्राह्मणस्यापदि कृष्याद्युच्यते अत्वयंकृतस्यापदि ऋतामृताभ्यांजीवेदित्यादिनाभ्यनुज्ञानात् । बलाबल-

मधुना कृष्यादेःप्राह **वैश्यवृत्त्येति**। ब्राह्मणः क्षत्रियोवा वैश्यवृत्त्यापि जीवेत्। भूमिंभूमिशयांश्चहन्तीति वक्ष्यमाणया नीत्या हिंसाबहुलांबलीवर्दाद्यायत्तांकृषिंयत्नतःपरिहरेत्। अतः गोरक्षाभावश्यंकार्येति गम्यते। क्षत्रियोपि चेत्युपादानात्क्षत्रियस्यापि स्ववृत्त्यभावेवैश्यवृत्तिरस्तीति गम्यते ॥ ८३ ॥ **कृषिःसाध्वितीति**। कृषिर्युक्तरूपेति केचिन्मन्यन्ते। सापुनर्जीविका साधुभिर्निन्दिता। यस्माद्धलकुद्दालाद्ययःप्रान्तंकाष्ठंभूमिबिलनिवासिनश्च प्राणिनोहन्ति ॥ ८४ ॥ **इदमिति**। ब्राह्मणस्य क्षत्रियस्य वास्ववृत्त्या अजीवतोधनाभावाद्धर्ममति निष्णातत्वंत्यजतोवैश्येन यद्विक्रेतव्यंतद्वर्जितवक्ष्यमाणवर्जनीयंधनवृद्धिकरंविक्रेतव्यम् ॥ ८५ ॥ तानिवर्जनीयान्याहुः**सर्वानिति**। सर्वान् खण्डादीन् रसांस्तथा सिद्धान्नतिलपाषाणपशुलवणमनुष्यान्नविक्रीणीत। लवणस्य रसशब्देनैव ग्रहणसिद्धौ पृथग्वचनंदोषविशेषज्ञापनार्थम्। एतेनान्यस्यापि पृथगाम्नातव्याख्यातम् ॥ ८६ ॥ **सर्वमिति**। सर्वतन्तुनिर्मितंरक्तंपट्टबृहन्तिकादि वर्जयेच्छणमौर्णातन्तुमयान्यलोहितान्यपि यदि भवेयुस्तथापि वर्जयेत् तथाफलमूलद्रव्याद्यौषधीर्वर्जयेत् ॥ ८७ ॥ **अपइति**। उदकायुधविषमांससोमक्षीरदधिघृततैलगुडदर्भांस्तथा गन्धवन्ति कर्पूरादीनि सर्वाणि क्षौद्रंच माक्षिकंमधु च मधूच्छिष्टंसिक्थकं तथा शस्त्रासवमधूच्छिष्टेति- याज्ञवल्क्येन पठितंवर्जयेत् ॥ ८८ ॥ **आरण्यानिति**। आरण्यान् पशून् हस्त्यादीन् सर्वान् दंष्ट्रिणः सिंहादीन् एकशफानश्वादीन् तथा पक्षिमद्यनीलीलाक्षान विक्रीणीत ॥ ८९ ॥ **काममिति**। **विक्रीणीततिलान्शुद्धान्धर्मार्थमचिरस्थितान्** ॥ कर्षकः स्वयमेव कर्षणेन तिलानुत्पाद्य द्रव्यान्तरेणामिश्रानुत्पत्तिकालएव धर्मनिमित्तमिच्छतोविक्रीणीतेति कृतान्नंच तिलैः सहेति प्रतिषिद्धानामयंप्रतिप्रसवः ॥ ९० ॥ **भोजनाभ्यञ्जनादिति**। भोजनाभ्यञ्जनदानव्यतिरिक्तमन्यदन्नविक्रयादि यदि तिलानांकुरुते तदा पितृभिः सह कृमित्वंप्राप्तःश्वपुरीषेनिमज्जतीति पूर्वव्यतिक्रमफलकथनम् ॥ ९१ ॥ **सद्यइति**। मांसलाक्षालवणविक्रयी ब्राह्मणः तत्क्षणादेव पतितोभवतीतिदोषगौरवख्यापनार्थम्। एतत् पञ्चानामेव महापातकानांपातित्यनियमादेतद्विक्रये वा पण्यानांच विक्रयइत्युपपातकप्राय श्चित्तस्य लघुतादर्शनादेतेन त्र्यहक्षीरविक्रयात् शूद्रातांप्राप्नोति इत्येतदपि व्याख्यातम्। तथा वैश्यभावगमनंच वक्ष्यमाणम् ॥ ९२ ॥ **इतरेषामिति**। उक्तदोषेभ्योमांसादिभ्योऽन्येषांप्रतिषिद्धानांपण्यानांइच्छातो ननु प्रमादादन्यद्रव्यसंपृक्तानांसप्तरात्रविक्रयेणब्राह्मणोवैश्यत्वंप्राप्नोति ॥ ९३ ॥ **रसाइति**। रसागुडादयोरसैर्घृतादिभिः परिवर्तनीयाः। लवणंपुनारसान्तरेण न परिवर्तनीयम्। सिद्धान्नमसिद्धान्नेन परिवर्तनीयम्। तिलाधान्येन प्रस्थः प्रस्थेनेत्येवंविनिमातव्याः ॥ ९४ ॥ **जीवेदिति**। क्षत्रियआपदंप्राप्तएतद्रसादिसर्वद्रव्याविक्रयेणापि जीवेन्नतु कदाचिद्ब्राह्मणजी विकामाश्रयेत् ॥ ९५ ॥ **यइति**। योनिकृष्टजातिः संलोभादुत्कृष्टजातिनोदितमकर्मभिर्जीवेत्तंराजा सर्वस्वमपहृत्य तदानीमेव देशान्निर्वासयेत् ॥ ९६ ॥ **वरमिति**। स्वकर्मविगुणमपि कर्तुंन्याय्यंन तु परकीयंसंपूर्णमपि। यस्मादपरनोदितकर्मणा जीवंस्तत्क्षणादेव जातितः पततीति निन्दातिशयोवर्जनार्थम् ॥ ९७ ॥ **वैश्यइति**। वैश्यः स्ववृत्त्याजीवन् शूद्रवृत्त्यापि द्विजशुश्रूषया उच्छिष्टभोजनादीनि अकार्याण्यकुर्वन् जीवेन्निस्तीर्णापत्कालःशूद्रवृत्तितोनिवर्तेत ॥ ९८ ॥ **अशक्नुवन्निति**। शूद्रोद्विजातिशुश्रूषयाऽजीवन् क्षुदवसन्नात्मकलत्रःसूपकारकर्मभिर्जीवेत् ॥ ९९ ॥ **यैरिति**। यैः कर्मभिरनुष्ठितैः द्विजातयःपरिचर्यन्ते तानि कारुककर्माणि तक्षणादीनि शिल्पानि च लाक्षादीनि नानाप्रकाराणि कुर्यात् ॥ १०० ॥ **वैश्यवृत्तिमिति**। ब्राह्मणवृत्त्यभावपीडितोऽवसादंगच्छन् क्षत्रियवैश्यवृत्तिमनुतिष्ठन् स्ववृत्तौ वर्तमानइदंवक्ष्यमाणंवृत्तिकर्मानुतिष्ठेत्। अतश्च परवृत्तितोऽसत्प्रतिग्रहोब्राह्मणस्य

श्रेयांस्तदुक्तंवरंस्वधर्मोविगुणइति ॥१०१॥ सर्वतइति । ब्राह्मणआपद्गतः निन्दतानिन्दितमेभ्यः क्रमेण प्रतिग्रहंकुर्याद्यस्मा-त्पवित्रंगङ्गादिरथ्योदकादि न दुष्यत्येतच्छास्त्रस्थित्या नोपपद्यते । तच्च ब्राह्मणआपद्यसत्प्रतिग्रहेण न प्रत्यवैति ॥१०२॥ नाध्यापनादिति । ब्राह्मणानापि गर्हिताध्यापनयाजनमनियहैरधर्मोन भवति तस्मात्पवित्रत्वेनाग्न्युदकतुल्यास्ते ॥ १०३ ॥ जीवितात्ययमिति । यःप्राणात्ययंप्राप्तः प्रतिलोमादपि अन्नमश्नाति सोऽन्तरिक्षमिव कर्दमेन पापेन न संबध्यते अत्रपरवृत्त्यर्थवादः ॥ १०४ ॥ अजीगर्तइति । अजीगर्ताख्यऋषिः बुभुक्षितः पुत्रंशुनःशेपंहन्तुं प्रचक्रमे नं च तथाक्षुत्प्रतीकारंकुर्वन् पापेन लिप्तवान् ॥ १०५ ॥ श्वमांसमिच्छन्निति । वामदेवाख्यऋषिः कार्याकार्यवित् क्षुधार्त्तः प्राणपरित्राणार्थंश्वमांसंभक्षयितुमिच्छन् पापेन नलिप्तवान् ॥ १०६ ॥ भारद्वाजइति । बह्वीर्गाःप्रतिजग्राहबृबुतक्ष्णोर्महामनाः ॥ भारद्वाजाख्योमुनिर्मनस्वी सपुत्रोनिर्जने वने क्षुत्पीडितोबृबुनाम्नस्तक्ष्णो-र्बह्वीर्गाः प्रतिगृहीतवान् ॥ १०७ ॥ क्षुधार्त्तइति । विश्वामित्रः कार्याकार्यवित् क्षुत्पीडितः चण्डालहस्तात् श्वश्रोणींप्रति-गृह्य भक्षयितुमध्यवसितवान् ॥ १०८ ॥ प्रतिग्रहादिति । आपत्प्रकरणाज्जपहोमैरपैत्येनइति वक्ष्यमाणदर्शनात् ग-र्हितयाजनाध्यापनप्रतिग्रहाणांमध्यात् असत्प्रतिग्रहोनिकृष्टो ब्राह्मणस्य परलोके नरकहेतुः अतआपदि प्रथममसद्याजना-ध्यापनयोः प्रतिवर्तितव्यम् । तदभावेऽसत्प्रतिग्रहइत्येवंपरमेतत् ॥ १०९ ॥ अत्रहेतुमाह याजनाध्यापनइति । याज-नाध्यापने आपद्यनापदि च द्विजातीनामेव क्रियेते । प्रतिग्रहः पुनर्निकृष्टजातेः शूद्रादपि क्रियते अतोऽसौ गर्हितः ॥ ११० ॥ किंच जपहोमैरिति । अतोग्रहणादसद्याजनाध्यापने यदुत्पन्नंपापंतत्प्रायश्चित्तप्रकरणवक्ष्यमा-णरूपेण जपहोमैर्निवर्तते । असत्प्रतिग्रहजनितंपुनस्तद्द्रव्यत्यागेन मासंगोष्ठेपयः पीत्वेत्येवमादिवक्ष्यमाणतपसा चोपशा-म्यति ॥ १११ ॥ शिलोञ्छमिति । ब्राह्मणः स्ववृत्त्या अजीवन्नुपपातकिभ्योपि शिलोञ्छंगृह्णीयान्न तु तत्संभवेऽसत्प्र-तिग्रहेण वर्तते । यस्मादसत्प्रतिग्रहाच्छिलोच्चयनंप्रशस्तं ततोप्येकैकधान्यकणोच्चयनमिति ॥ ११२ ॥ सीदद्भिरिति । स्नातकैर्ब्राह्मणैर्धनाभावात् धर्मात्मकुटुंबावसादंगच्छद्भिरसारद्रव्यंगृहोपयोगि शयनासनाशनादि वा धनंधान्यंहिरण्या-दिवेच्छद्भिः पार्थिवोक्षत्रियोक्षत्रियोपिवोच्छास्त्रवर्ती याचितव्यः स्यात् । अददतस्तस्य देशे न वस्तव्यमिति । इदं ॥ न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः । यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्तिनः ॥ इत्यक्षत्रियोच्छास्त्रवर्तिनोऽराज्ञोऽ-नापदि निषिद्धयोरापद्यभ्यनुज्ञानार्थम् ॥ ११३ ॥ अकृतमिति । कृष्टात्क्षेत्रात्प्रतिग्रहेऽकृष्टमनुग्रं तथा गोछा-गैडकहिरण्यधान्यानांमध्यात्पूर्वंपूर्वमदुष्टतमंचैषांपूर्वस्यासंभवे परः परः प्रतिग्राह्यः ॥ ११४ ॥ सप्तेति । प्र-योगःसर्वयोगश्चेति । सप्तधनागमादायाद्योधर्मादनपेतास्तत्र दायोन्वयागतंधनं । लाभोनिधिः प्रीतितो-वा कुतश्चिन । क्रयःप्रसिद्धः । एते त्रयश्चतुर्णामपि वर्णानांधर्म्याजयोयुद्धेन क्षत्रियस्यधर्म्योवृध्यर्थंधन-प्रयोगश्च कृषिवाणिज्येइत्येते वैश्यस्य धर्म्याः । सत्प्रतिग्रहोब्राह्मणस्य धर्म्यः । इत्येवंच सति एषु धर्म्यवचनादेतद्भावेनैष्वनापद्योदितेषु वृत्तिकर्मसु प्रवर्तितव्यं तदभावे भावे च वापद्युदितेषु प्रकृतेष्वित्येवमर्थ-मिहोच्यते ॥ ११५ ॥ विद्येति । आपत्प्रकरणाज्जीवनहेतवइतिच निर्देशात्तेषांमध्याध्येन यस्यानापदि जीव-नंनिषिद्धंतेन तस्यापद्यभ्यनुज्ञायते यथा ब्राह्मणस्य भृतकाध्यापकत्वेन तदनेनापद्यभ्यनुज्ञायतएवंशिल्पादिष्वपि विज्ञेयं शिल्पंगन्धयुक्त्यादिकर्मकरणं भृतिः प्रेष्यत्वं सेवा चित्तानुवर्तनं गोरक्षा पाशुपाल्यं विपणिर्वणिज्या कृ-षिः स्वयंकृताभिधृतिः संतोषः तस्मिन् हिसति स्वल्पकेनापि जीव्यते भैक्ष्यंस्नातकस्यापि कुसीदंवृध्याधन-प्रयोगः स्वयंकृतोपीत्येभिर्दशभिरापदि जीवनम् ॥ ११६ ॥ ब्राह्मणइति । ब्राह्मणः क्षत्रियोवावृध्यर्थंधनमा-

पद्यपि न प्रयुञ्जीत धर्मतत्र प्रसक्ते पुनरिच्छन्निरुष्टकर्मणोल्पिकयावृध्द्याप्रयुञ्जीत ॥ ११७ ॥ इदानींराज्ञआपद्धर्मानाह-**चतुर्थमिति** । राजा आपदि धान्यादेश्चतुर्थमपि भागंकरार्थंगृह्णन् यथानापदि धान्यानामष्टमोभागइत्याद्युक्तंपरया-शक्त्या प्रजारक्षन्नधिककरग्रहणपापे न संबध्यते ॥ ११८ ॥ कस्मात्पुनरापद्यपि रक्षणमुच्यते यस्मात् **स्वधर्मइति** । राज्ञः शत्रुपराजयः स्वधर्मः प्रजारक्षणप्रवृत्तस्य च यदि कुतश्चिद्भयंस्यात्तदा न युद्धपराङ्मुखः स्यादेवंच शस्त्रेण वैश्यान् क्षत्रियोदस्युभ्योरक्षितवांतेभ्योधर्मादनपेतं आप्तपुरुषैर्बलिमाहरेत् ॥ ११९ ॥ कोसौधर्मइत्यतआह **धान्येष्टम-मिति** । कृषिजीविनांवैश्यानांधान्यविषये उपचयतोऽष्टमंभागंशुल्कमहारयेद्धिरण्यादीनांकार्षापणान्तानांविंशतितमंचतु-र्थतमम् ॥ १२० ॥ **शूद्रस्त्वेति** । शूद्रोब्राह्मणशुश्रूषया अजीवन्यदि वृत्त्याकाङ्क्षी स्यात्तदा क्षत्रियंपरि-चरेत् तदभावे धनवन्तंवैश्यंपरिचर्य जीवितुमिच्छेत्तदभावेऽत्यन्तापद्युक्तानि कारुकर्माणि कुर्यात् । एवंच क्षत्रियवैश्याराधनंशूद्रस्य वृत्त्यर्थमेव धर्मार्थंच ॥ १२१ ॥ **स्वर्गार्थमिति** । वृत्तिमाप्त्यर्थमथवास्वर्गवृत्ति-लिप्सयेत्येवमुभयार्थंब्राह्मणानेव शूद्रः परिचरेत् । यस्माद्ब्राह्मणाश्रितोयमित्येवमुत्पन्नव्यपदेशस्यजात्युपदेशता त-यासौ कृतकृत्योभवति ॥ १२२ ॥ यतएवमतः **विप्रसेवेति** । ब्राह्मणशुश्रूषैव शूद्रस्य विशिष्टंकर्म कर्मा न्तरेभ्यः शास्त्रउच्यते । यस्मादेतद्व्यतिरिक्तंयदसौ कर्म कुरुते तदस्य निष्फलंभवतीति पूर्वार्थवादोनत्वन्य-निवृत्त्यर्थः पाकयज्ञादीनांविहितत्वात् ॥ १२३ ॥ **प्रकल्प्येति** । तस्य शुश्रूषोः शूद्रस्यः शुश्रूषासामर्थ्यमुत्साहं-पुत्रदारादिभर्तव्यपरिमाणतामपेक्ष्यतैर्ब्राह्मणैः स्वगृहादनुरूपा जीविका कल्पनीया ॥ १२४ ॥ किंच **उच्छिष्ट-मिति** । अस्य च प्रकृतस्याश्रितस्य शूद्रस्य पात्रस्थंभुक्तावशिष्टंब्राह्मणेन देयम् । एवंच नशूद्राय मतिंद द्यान्नो-च्छिष्टमित्यनाश्रितशूद्रविषयमिति व्याख्यातम् । तथाजीर्णवस्त्रासारधान्यजीर्णशय्यादीन्यस्य देयानि ॥ १२५ ॥ **नशू-द्रइति** । न शूद्रे पातकंकिञ्चिद्भवति लशुनाद्यभक्षणभक्षणेनैतदुक्तंद्विजातीनांभक्षाभक्षमित्युक्तत्वान्न ब्राह्मणादिभिः अहिंसासत्यमस्तेयमित्यादिसर्वविषयत्वान्नचोदितत्वान्नचोपनयनाख्यंसंस्कारमसावर्हति गर्भाष्टमइत्यादिकालत्रैवर्णिककृ-तस्य चोदितत्वान्नचास्याग्निहोत्रादौ श्रौते धर्मेधिकारेऽन्यविवाहत्वंन चस्मार्तधर्माच्छूद्रकर्तृकत्वादस्यनिवारणमस्तिविहित त्वान्नथा चत्वारः नचेच्छूद्रः पततीति निश्चयोनचैव संस्कारमिहार्हतीति श्रुतिप्रयुक्तंन च धर्ममभुते न चास्य धर्मात्प्रतिषेधनंस्मृताविति । एवंचास्याथ धर्मस्य मेतसिद्धत्वादयंश्लोकानुवादउत्तरार्थः ॥ १२६ ॥ तथाचदर्शयति **धर्मेप्सवइति** । ये पुनः शूद्राः स्वधर्मवेदिनोधर्मप्राप्तिकामास्त्रैवर्णिकानांसंबन्धिनमनिषिद्धमाचारं आश्रितास्ते-ऽमन्त्रकमन्नप्राशनपाकयज्ञादि कुर्वाणान प्रत्यवयन्ति न तूपनयनं चतुर्थएकजातिस्त्वित्युक्तत्वात् ख्यातिंचलोके प्राप्नुवन्ति ॥ १२७ ॥ **यथेति** । यस्मादनिन्दकः शूद्रोयथावद्विजात्याचारमनिषिद्धमनुतिष्ठति तथा तथा अग-र्हितः सन्निहलोके कीर्तिंपरलोके स्वर्गंप्राप्नोति ॥ १२८ ॥ **शक्तेनेति** । धनार्जनशक्तेनापिहि शूद्रेण न धन-संचयः कर्तव्यः । अपि त्वाश्रितब्राह्मणाय यदि नियमतोधनंदेयमित्येवंपरमेतत्तथा च गौतमः । यंचार्थमाश्रियेत भर्तव्यस्तेन क्षीणोपितेन चोत्तरस्तदर्थोस्य निचयः स्यादिति । अत्रार्थवादः **शूद्रोहंति** तस्माच्छूद्रोधनंप्राप्यशास्त्रा-नभिज्ञत्वेन धनोत्सेका शुश्रूषा ॥ १२९ ॥ **एतइति** । चतुर्णांवर्णानामापद्यनुष्ठेयाधर्माः तएते कथिताः । यान् सम्यगाचरन्तोआत्मसरक्षणे सत्यात्मज्ञानाद्यवाप्त्या ब्रह्मप्राप्तिंभजन्ते ॥ १३० ॥ **एषइति** । यच्चतुर्णां-वर्णानांधर्मानुष्ठानंतदेतदखिलंकथितमधुना ऊर्ध्वंप्रायश्चित्तविधिंवक्ष्यामि ॥ १३१ ॥ ॥ इतिश्रीभट्टमाधवात्मजगो-विन्दराजविरचितायांमनुटीकायांमन्वाशयानुसारिण्यांप्रतिलोमानुलोमानुलोमजातकनिरूपणंनामदशमोध्यायः ॥ १० ॥

# ॥ अथ एकादशोऽध्यायः ॥



**श्रीगणेशायनमः** ॥ यद्यपि धर्मंच वर्णानांप्रायश्चित्तविधिंतथेत्यनुक्रमण्यपेक्षयाऽतः परंप्रवक्ष्यामिप्रायश्चित्तविधिंशुभंइति प्रायश्चित्तप्रकरणमधुना वक्तव्यं तथाप्युच्चावचधर्मप्रकरणंतावदनन्तरमिदमेतदतिक्रमेण प्रायश्चित्तंयथास्यादित्येवमाह **सान्तानिकमिति** । **नवेति** । संतानप्रयोजनत्वात्सान्तानिकोविवाहार्थी तथानित्यज्योतिष्टोमादियागंकर्तुमिच्छन् तच्चानिवर्तमानश्च क्षीणपाथेयः सार्ववेदः सर्ववेदकः सर्वस्वंयेन विश्वजितिदत्तंगौतमीयएवदर्शनाद्विद्यागुरुपितृमात्रर्थंवेदग्रहणकाले चाच्छादनाद्यर्थंच भिक्षवउपतापी च रोगीचेत्येतावन्नव धर्मशास्त्रार्थानुवर्तित्वेन भिक्षमाणप्रवृत्तान् ब्राह्मणान् स्नातकान् जानीयादेतेभ्यश्च निर्धनेभ्योविद्यानुरूपेण नियमतोदानंकर्तव्यम् । अतश्चाकरणादधर्मोद्रव्यविशेषेण चैतन्नियमसंपादनात्तद्रव्यफलमिति ॥ १ ॥ २ ॥ **एतेभ्यइति** । एतेभ्योब्राह्मणेभ्यायद्देयंतद्भोजयित्वा दातव्यमेतद्व्यतिरिक्तेभ्यः पुनः सिद्धमन्नंयत्तदन्यत्र देयत्वेनोपदिश्यते । धनदानेत्वनियमः ॥ ३ ॥ **सर्वरत्नानीति** । राजा पुनः सर्वाणि मणिमुक्तादीनि कस्य यज्ञोपयोगीर्गपिदक्षिणानित्ययज्ञार्थंयथोक्तान् विद्यानुरूपेण वेदविभ्योब्राह्मणेभ्योदद्यात् ॥ ४ ॥ **कृतदारइति** । यः सभार्यः सन् धर्मप्रजासंपन्ने दारेऽन्यान् कुर्वीत अन्यतरापाये तु कुर्वीतेत्यापस्तंबस्मरणादेवंविधनिमित्तमन्तरेण परंविवाहंभिक्षित्वा करोति तस्य मन्मथमात्रंफलंधनदातुः पुनस्तदुत्पन्नान्यपत्यानि भवन्तीति निन्दातिशयः । नैवंविधेनान्योविवाहः कार्योन तु तदर्थंभिक्षणीयं । नाप्येवंविधाय नियमतोदातव्यमित्येवमर्थः ॥ ५ ॥ **यस्येति** । यस्यावश्यकर्तव्यभरणार्थंवर्षत्रयपूरणसमर्थंतदधिकंच भक्तादि स्यात्सकाम्यसोमयागंकर्तुमर्हति । नित्यस्य पुनर्यथाकथंचिदवश्यकर्तव्यत्वात् नायंनिषेधः ॥ ७ ॥ तथाचदर्शयति **अतस्स्वल्पीयसीति** । त्रैवार्षिकधनादल्पतरे धने सति यः सोमयागंकरोतितस्य प्रथमसोमयागोपि नित्योवसंपन्नोभवतिकिमुत काम्यइति । तस्मादतोऽल्पधनेन काम्ययागोन कर्तव्यः ॥ ८ ॥ **शक्तइति** । योधनंदत्वा दानसमर्थः सजातिषु दौर्गत्योपेतेषु सत्स्वन्येभ्योददाति तस्य तद्दानंसंप्रतियशस्करत्वात् मधु इव प्रथमभक्षणयोग्योऽमुत्र चनरकपाताद्विषविपरिणामतुल्यमतश्चासौ धर्मप्रतिच्छंदकोन तु धर्मइति तस्मात्तदेवंन कर्तव्यम् ॥ ९॥ **भृत्यानामिति** । पुत्रदाराद्यवश्यभर्तव्योपपीडने यत्पारलौकिकंदानादि करोति तस्य जीवतोमृतस्य वाऽसुखफलंभवति ॥ १० ॥ **यज्ञइति** । यइति । क्षत्रियादेर्यजमानस्य यदि यज्ञेज्यायज्ञसंपत्तौ सत्यामेकेनाङ्गेन विना न निरुद्धः स्यात्तदा योवैश्योबहुपश्वादिधनः प्राक्यज्ञासिध्यर्थंचौर्येणाहरेत । एतच्चधर्मप्रधानेराजनिसतिकार्यंसहिशास्त्रमनुतिष्ठन्तमुपेक्षते ॥ ११ ॥ १२ ॥ **आहरेदिति** । यज्ञस्य द्वित्राङ्गकवैकल्पेसति तानि त्रीणि वाङ्गानि द्वेचाङ्गे निर्विकल्पः । शूद्रग्रहाच्चौर्येणाहरेद्यस्माच्छूद्रस्य यज्ञसंबन्धोमनागपि नास्ति । यज्ञार्थत्वंधनम् । तथा च यज्ञायसृष्टानि धनानि धात्रेति स्मर्यते । भिक्षितशूद्रधनस्य प्रतिषेधोभविष्यति नयज्ञार्थे धनंशूद्रादिति ॥ १३ ॥ **यइति** । योनाहिताग्निर्गोशतपरिमाणधनआहिताग्निरपिवा असोमयाजीगोसहस्रपरिमाणधनस्तयोरपि गृहाभ्यांप्रकृतमङ्ग द्वयंत्रयंवा क्षिप्रमाहरेत् । वैश्यादपहरणस्योक्तत्वाद्ब्राह्मणाच्च वक्ष्यमाणत्वादिदंक्षत्रियविषयम् ॥ १४ ॥ **आदाननित्यादिति** ।

प्रतिग्रहादिना आदानंधनग्रहणंनित्यंयस्यासावादाननित्योब्राह्मणस्तस्मादिष्टापूर्तदानरहिताद्ब्राह्मणाद्याज्ञायांकृतायामददत् चौर्येण हरेदेवंकृतोऽस्यापहर्तुः ख्यातिः प्रकाश्यते धर्मश्चवृद्धिमेति ॥ १५ ॥ **तथेति** । सायंप्रातर्भोजनोपदेशाच्यहमनुभुक्तेचतुर्थेप्रातःसममेभक्तेयागादिकर्मरहितादाह्निकमात्रपर्याप्तंयथैवयज्ञाप्रतिरोधस्तथैवहर्तव्यम् ॥ १६ ॥ **खलादिति** । धान्यादिक्षोदनात्क्षेत्राद्वा यतोवान्यस्माद्देशाद्धीनकर्मसंबन्धेनलभ्यते ततोहर्तव्यंयदि वासौ धनस्वामी पृच्छति तदा तस्य पृच्छतः तच्चौर्यसनिमित्तकम् ॥ १७ ॥ **ब्राह्मणस्वमिति** । उक्तेष्वपि निमित्तेषु ब्राह्मणधनंक्षत्रियेण न हर्तव्यम् । अर्थाच्च वैश्यशूद्राभ्यां अपि न हर्तव्यम् । प्रतिषिद्धकृद्विहिताननुष्ठानयोः पुनर्ब्राह्मणयोरत्यन्तापदि क्षत्रियोहर्तुमर्हति ॥ १८ ॥ **यइति** । योहीनकर्मादिभ्यःसंप्रयच्छतिसकृत्वाप्लवमात्मानमुक्तेभ्योविहितेषु निमित्तेषु उक्तरूपंयज्ञाङ्गादिधनंदत्वासाधुभ्यऋत्विगादिभ्योददाति सयस्यापहरतितंधनसंरक्षणदुःखाद्यस्यैवददातितंदौर्गत्यादेरित्येवंद्वावपितौनौरूपमात्मानंकृत्वादुःखान्मोचयति ॥ १९ ॥ यस्मात् **धनंयज्ञशीलानामिति** । यजनस्वभावानांसंबन्धि यद्द्रव्यंतद्यागार्थविनियोगाद्देवस्वंविद्वांसोमन्यन्ते । यागशून्यानांयत्पुनर्द्रव्यंतद्विकर्मविनियोगाद्धर्माभावादसुरसंबन्धि । अतस्तदपहृत्य यागसंपादनेन देवस्वंकर्तव्यम् ॥ २० ॥ **नेति** । तस्मिन् निमित्तेषु चौर्यंकुर्वाणे ब्राह्मणे धर्मप्रधानोराजादण्डंन कुर्यात् । यस्माद्राजमौर्ख्यात् ब्राह्मणः क्षुदवसादंप्राप्नोति ॥ २१ ॥ तथाचाह **तस्येति** । तस्य ब्राह्मणस्यावश्यभरणीयपुत्रादिपरिमाणंविज्ञायानुष्ठानबुद्धौ तदनुरूपांजीविकांधर्मादनपेतांस्वगृहाद्राजा प्रकल्पयेत् ॥ २२ ॥ **कल्पयित्वेति** । अस्य च ब्राह्मणस्य जीविकांविधाय शत्रुचौरादेः सततंचैनंरक्षेत् । यस्माद्ब्राह्मणरक्षिताद्राजा तदर्जितधर्मषड्भागंप्राप्नोति ॥ २३ ॥ **नयज्ञार्थंधनंशूद्राद्विप्रोभिक्षेतधर्मविदिति** । धर्मज्ञोब्राह्मणोज्योतिष्टोमादियज्ञसंपत्त्यर्थे शूद्राद्धनंन भिक्षेत । यस्माच्छूद्राद्धनंभिक्षित्वा योयजते सजन्मान्तरे चाण्डालोजायते ॥ २४ ॥ **यज्ञार्थमिति** । यज्ञसंपत्त्यर्थंधनंभिक्षित्वा यः सर्वंयज्ञे ब्राह्मणेभ्योन ददाति सशतंवर्षाणांकाकत्वंभासत्वंप्राप्नोति ॥ २५ ॥ **देवस्वमिति** । वृद्धव्यवहारैकगोचरत्वाच्छद्मार्थसंबन्धस्य यस्य लोके देवस्वंब्राह्मणधनंयोलोभादपहरति सपापस्वभावोजन्मान्तरे जन्मसंबन्धिनोजन्मांतरे गृध्रसंबन्धिनोच्छिष्टेन जीवति ॥ २६ ॥ **इष्टिमिति** । संवत्सरप्रवृत्तौ वसन्तेशास्त्रनोदितानांपशुयागसोमयागानामसंभवे तदकरणदोषनिबर्हणार्थं सर्वदा वैश्वानरदेवताकामिष्टिंगृह्यायुक्तैवैश्वानर्यादिनानापदियोनुष्ठानस्वरूपंद्विजः कुर्यात् । श्रौतप्रायश्चित्तेन सहास्य विकल्पोऽश्वमेधद्वादशवार्षिकयोर्ब्रह्महत्यादिप्रायश्चित्तयोः श्रौतस्मार्तयोरपि ॥ २७ ॥ **आपत्कल्पइति** । आपच्चोदितेन विधिना वैश्वानर्यादिनानापदि योऽनुष्ठानं द्विजः कुरुते तस्य परलोके तंनिष्फलंभवति इति मन्वादिभिर्विचारितम् ॥ २८ ॥ **विश्वैरिति** । विश्वेदेवाख्यैर्देवैः साध्यैश्च तथा महर्षिभिः ब्राह्मणैर्मरणाद्भीतैरापत्सु मुख्यविधेः सोमादेर्वैश्वानर्यादिप्रतिनिधिरनुष्ठितोऽतोऽसौ मुख्यासंभवे कार्योन तु तत्संभवे ॥ २९ ॥ **प्रभुरिति** । योमुख्यानुष्ठानसमर्थः सन्नापच्चोदितेन प्रतिनिधेरनुष्ठानंकरोति तस्य दुर्बुद्धेः पारलौकिकमभ्युदयप्रत्यवायाभावाख्यं न भवतीत्यापत्कल्पेन योधर्मइत्यनेनोक्तमप्येतदुपसंहारार्थंपुनरुच्यते ॥ ३० ॥ **नेति** । धर्मज्ञोब्राह्मणोन किंचिदपि अपराधजातंराज्ञः कथयेदपि तु शक्त्यैव वक्ष्यमाणाभिचारकरणेनैव तान् मनुष्यानपराद्धा निगृह्णीयादिति शरीरधर्मरतन्न व्यासाद्यहेतुप्रकृष्टापराधकरणे सत्यभिचरणीयाभिचारोनदोषायेत्येवंपरमेतन्न व्यभिचारोविधीयते । नापि राजनिवेदनंनिषिध्यते । कस्मात्पुनरेवमुच्यते

॥ ३१ ॥ यस्मात् स्ववीर्यादिति । यस्माद्राजशक्तितः स्वशक्तिः प्रकृष्टा स्वाधीनत्वात् तस्माद्ब्राह्मणः शत्रून्निगृह्णीयात् ॥ ३२ ॥ श्रुतीरिति । अथर्वाङ्गिरेभ्यः प्रोक्ताअभिचारश्रुतीर्निर्विकल्पमनुतिष्ठेयस्मादभिचारमन्त्रोच्चारणात्मिकाब्राह्मणस्य वागेव कार्यकरणाच्छस्त्रंतेन ब्राह्मणःशत्रून्निगृह्णीयात् ॥ ३३ ॥ **क्षत्रियइति** । क्षत्रियःपौरुषेण शत्रुपराभवलक्षणामापदमतिक्रामेत् । वैश्यशूद्रौतु पुनःराज्ञोधनंदत्वा व्यवहारलेखनेन ब्राह्मणस्त्वभिचारात्मकैर्होमैरित्युक्तम् ॥ ३४ ॥ **विधातेति** । स्वकर्मानुष्ठातारमपि रिक्तेन चौर्यादिद्यव्यापयिताचारः सर्वभूतोपकारकोब्राह्मणउच्यते । तस्माद्राजन्निगृह्यतामयमित्येवमनिष्टंतस्य नोब्रूयान्नाप्याक्रोशवाचंवाग्दण्डरूपांतरस्योच्चारयेत् ॥ ३५ ॥ **नेति** । कन्या तरुणा अल्पाध्ययनमूर्खव्याध्यादिपीडितानुपनीताः श्रौतंसायंप्रातर्होमंन कुर्यान्नापि कारयितव्या । इतिशास्त्रपरिज्ञानामतिनिधिरूपणेषांहोमंकारयेत्ततोऽयंप्रतिषेधःकन्यादीनांच ॥ ३६ ॥ **नरकमिति** । एते कन्यादयोहोमंकुर्वाणानरकंगच्छन्ति । यस्य च अग्निहोत्रंप्रतिनिधिरूपेण कुर्वन्ति सोपि नरकंव्रजति । तस्माच्छ्रौतकर्मप्रवीणसमस्तवेदाध्यायी होता कार्यः ॥ ३७ ॥ **प्राजापत्यमिति** । आधाने प्रजापतिदेवताकमश्वमृत्विग्भ्योदक्षिणांब्राह्मणःसंपाद्य दत्वानाहिताग्निर्भवतितस्माच्छ्रौतदक्षिणातिरिक्तोश्वः समृद्धौ सत्यांब्राह्मणेनाम्नायेनदातव्यः ॥ ३८ ॥ **पुण्यानीति** । श्रद्धालुर्वशीकृतेन्द्रियोयज्ञव्यतिरिक्तानि पुण्यानि कुर्यान्नतु शास्त्रोक्तदक्षिणां तेभ्योदत्वा कदाचिदिह यज्ञंकुर्यात्परिक्रयार्थत्वाद्दक्षिणायाः स्वल्पेनापि परिक्रयसिद्धिरित्याशङ्कायामिदंवचनम् ॥ ३९ ॥ **इन्द्रियाणीति** । चक्षुरादीनि जीवितश्च ख्यातिंस्वर्गायुषीमृतस्य च ख्यातिमपत्यानि पशूंश्चाल्पदक्षिणोयज्ञोनाशयति । तस्मादल्पदक्षिणादानेन यागंन कुर्यात् ॥ ४० ॥ **अग्निहोत्र्यपविध्याग्नीनिति** । आहिताग्निर्ब्राह्मण इच्छातोग्नींस्त्यक्त्वा मासंचान्द्रायणंकुर्यात् । यस्माद्यजमानहत्यातुल्यमेतदिति । यज्ञचर्याप्रसङ्गेदमप्रकरणेपि प्रायश्चित्तमादरार्थं मासमित्यनुवादोऽन्येतु मासमपविध्येतिसंबन्धयन्ति ॥ ४१ ॥ **यइति** । ये शूद्राद्याचित्वा अयाचित्वावार्थंस्वीकृत्य वृषलाभ्युपसेविनामिति वक्ष्यमाणलिङ्गादाधानपूर्वकमग्निहोत्रंकुर्वन्ति तेपरमात्मस्वरूपनिरूपणपरविषये निन्दिताः शूद्राणांयाजकाः न तु तेषांततः फलंभवति ॥ ४२ ॥ **तेषामिति** । तेषांशूद्रधनाहिताग्निपरिचारिणांमूर्खाणांमूर्ध्निपादंदत्वा सदाता शूद्रस्तेन दानेन नित्यंपरलोके दुःखेभ्य उत्तरति । न तु ततस्तेषांफलमुत्पद्यते ॥ ४३ ॥ एवमखिलप्रकरणमुक्त्वाऽधुना प्रायश्चित्तानामधिकारनिरूपणार्थमाह **अकुर्वन्निति** । **प्रसज्जंस्त्विन्द्रियार्थेषुप्रायश्चित्तीयतेनरः** ॥ कर्तव्यत्वेन चोदितंसंध्योपासनादि कर्म अननुतिष्ठन् प्रतिषिद्धंच हिंसादि कुर्वन् इन्द्रियोपभोगेषु चार्थेषु रूपादिषु विषयेषु प्रतिषिद्धेषु शक्तिंभावयन्नरोमनुष्यमात्रंप्रायश्चित्तमर्हति । नन्विन्द्रियार्थेषु सर्वेषु न प्रसज्जेत कामतःइतिप्रतिषेधान्निन्दितग्रहणेनैवप्रसज्जंस्त्विन्द्रियार्थेषु इत्येतद्व्रतार्थमित्यतःपृथक् न वक्तव्यमुच्यते अस्यस्नातकव्रतमध्ये पाठात्तत्र न च व्रतानीमानि धारयेदित्येवंविधमुखेनोपक्रमाद्विधिसंस्पर्शोयोर्थक्रियात्मकत्वात्प्रतिषेधसंस्पर्शःयेन पृथगभिधानम् । किंचासत्यस्मिन्ब्राह्मणांश्च स्नातकव्रताधिकारादतः प्रायश्चित्तीयता स्यान्नेतरेषाम् ॥ ४४ ॥ **अकामतइति** । अबुद्धिपूर्वकृतपापप्रायश्चित्तार्थंप्रजापतिराहेति**श्रुत्यर्थः** ॥ ४५ ॥ **अकामतइति** । अनिच्छातःकृतंपापंशुध्यति वेदाभ्यासेन रागद्वेषादिव्यामूढयापुनरिच्छातः कृतंनानाप्रकारैः प्रायश्चित्तैरिति पूर्वोक्तदार्ढ्यार्थमेतदधिकारनिरूपणप्रकरणात् न तु विषयविभागार्थं ब्रह्महाद्विजातंसमाद्रुयातःप्रभृतिप्रायश्चितानां उपक्रम्यमाणत्वादुत्तरत्र चोभयोभयत्राम्नानात् ॥ ४६ ॥

**प्रायश्चित्तीयता**मिति । प्राग्जन्मार्जितदुष्कृतकरोनरः श्यावदंतत्वादिश्रुतेन प्रायश्चित्तार्हतांप्राप्य पूर्वकृतेन न वैतच्छरीरकृतेन प्रमादेनावाप्य प्रायश्चित्ते कृते साधुभिः सहाध्ययनक्रियादि संसर्गेन गच्छेत् ॥ ४७ ॥ **इहे**ति । केचिद्दुष्टात्मनोमनुष्याइह विरुद्धाचरणैः कौनख्यादिकंरूपविषयंप्राप्नुवंन्त्यन्येच प्राग्जन्मार्जितैर्दुष्कृतैरिति ॥ ४८ ॥ तथाच **सुवर्णचौरइ**ति । **पिशुनइ**ति । **धान्यचौरोङ्गहीनत्वंआतिरेक्यंतुमिश्रकः** ॥ **अन्नहर्ते**ति ।

[ दीपहर्ताभवत्यन्धःकाणोनिर्वापकस्तथा ॥ हिंसायांव्याधिभूयिष्ठंअहिंसायांतुनीरुजः ॥ १ ॥ ]

**एवमि**ति । ब्राह्मणःसुवर्णस्तेयी कुत्सितनखत्वंप्राप्नोति । निषिद्धासुरापानसुरापःश्यावदंतत्वम् । ब्रह्महा क्षयव्याधियुक्तत्वम् । गुरुभार्यागोविकारोन्द्रियत्वम् । परिदोषाभिधायीदुर्गंधिनासिकत्वम् । असद्दोषारोपकारोदुर्गन्धमुखत्वम् । धान्यचौरोङ्गहीनत्वम् । धान्यादेरपरद्रव्यमिश्रयितातिरिक्ताङ्गत्वमन्नचौरोजरान्नत्वम् । अननुज्ञातोऽध्यायी वाग्विकलत्वम् । वस्त्रचौर श्वित्रत्वम् । अश्वचौरः पादवैकल्यंप्राप्नोतीत्येवंबुद्धिवाक्चक्षुःश्रोत्रविकलाकृतरूपाश्च साधुविगर्हिताः । प्राग्जन्मार्जितमापगृहोपभुक्तदुष्कृतकर्मशेषेणोत्पद्यन्ते ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ यतएवं **चरितव्यमि**ति । यस्मादनकृतपापाअमुत्र विचित्रंनरकदुःखमनुभूयाधर्मशेषेण कुनखादिकुत्सितचिन्हयुक्ताउत्पद्यन्ते तस्मात्पापनिर्हरणार्थानि प्रायश्चित्तानि ननु नैमित्तिकमात्रपर्यवसायीतिभेदन भौमान्तराधिकारोत्पादनार्थानि च नहि कर्म क्षीयते । फलदानंविनेति दर्शनान्नकर्तव्यानिशास्त्रैकगोचरत्वात्पापोत्पत्तिरेव निर्हरणस्यापि ॥ ५३ ॥ **ब्रह्महत्ये**ति । **महान्तिपातकान्याहुःसंयोगंचैवतैःसह** ॥ ब्राह्मणवधोनिषिद्धसुरापानं ब्राह्मणसुवर्णस्तेयं गुरुभार्यागमन एतैश्च सह संवत्सरेण पततीति वक्ष्यमाणप्रकारेण संसर्गइत्येते महापातकान्याहुरिति संज्ञानिर्देशाल्लाघवार्थंउपपातकादिष्वपि विज्ञेयम् ॥ ५४ ॥ **अनृतमि**ति । जाति समुत्कर्षे अनृतं अब्राह्मणः सन् ब्राह्मणोहमिति । राजविषयं च सूचकत्वंपरमाणफलप्रायराज्ञश्चित्तसंक्षोभजननं गुरोश्च मिथ्याभिशापोत्पादनं यथागौतमः गुरोरनृताभिशंसनमिति पातकसमानीत्येतानि ब्रह्महत्यासमानानि ॥ ५५ ॥ **ब्रह्मोज्झते**ति । ब्रह्मोज्झता अधीतस्य वेदस्यासच्छास्त्राश्रयेणापेक्षणं । यत्तु गुरुमातृपरित्यागः स्वाध्यायाग्न्योः सुतस्यचेत्युपपातकत्वं न त्वैहिकएवान्यस्मिन्कर्मण्यभियुक्ततया वेदत्यागे सति वेदितव्यं वेदनिन्दा नास्तिक्याभिनिवेशेन वेदकुत्सनम् । कूटसाक्षित्वं यत्र व्यवहारेऽर्थिप्रत्यर्थिनोर्वधार्हतांपैति मित्रस्य चाब्राह्मणस्यापि वधोगर्हितस्य पलाण्डुवादेरनदनीयस्य चामेध्यादेर्भक्षणमित्येतानि षट् सुरापानतुल्यानि ॥ ५६ ॥ **निक्षेपस्ये**ति । निःक्षेपस्य ब्राह्मणसुवर्णादन्यस्य ब्राह्मणसंबन्धिनश्चसुवर्णस्यापहरणंतथा मनुष्याश्वरूप्यभूमिहीरकमणीनांहरणंसुवर्णस्तेयतुल्यम् ॥ ५७ ॥ **रेतःसेकःस्वयोन्यास्वि**ति । भगिनीकुमारीमित्रभार्यास्नुषासु चण्डालादिस्त्रीषु च गमनंगुरुभार्यागमनसमानमाहुः एषांच भेदेन समीकरणंयचेन समीकृतंतस्य तदीयप्रायश्चित्तार्थम् यत्तु कौटसाक्ष्यंसुहृद्वधः ब्रह्महत्याप्रायश्चित्तातिदेशंवक्ष्यति तद्विकल्पार्थम् । यः पुनः गुरोरलीकनिर्बन्धस्य ब्रह्महत्यासमीकृतस्य गुरुतल्पगप्रायश्चित्तनिर्देशः समीकृतानांन्यूनंप्रायश्चिसंभवतीति ज्ञापनार्थं तथाच लोकेपि राजसमः सचिवइत्युक्ते सचिवस्यन्यूनतैव प्रतीयते अत्रचोपदिशिकेभ्य आदेशिकेभ्यआदेशिकानांन्यूनत्वमतिदेशविधानंतेभ्योपि समीकृतानां ॥ ५८ ॥ **गोवधइ**ति ।

---

१ शेन्रे ( गो० ५ )

**परिवित्तितेति** । **कन्यायाइति** । **व्रात्यतेति** । **सर्वाकरेष्विति** । **इन्धनार्थमिति** । **अनाहिताग्निते-ति** । **असच्छास्त्राधिगमनंकौशीलव्यसनक्रिया** ॥ **धान्यकुप्यपशुस्तेयंमद्यपस्त्रीनिषेवणमिति** । गोहननं जातिकर्मदुष्टानांयाजनं । परदारगमनमात्मविक्रयोमातृपितृगुरूणांच शुश्रूषाद्यकरणं स्वाध्यायत्यागोव्याख्यातामेश्च स्मार्तस्य त्यागः । श्रौतानामग्निहोत्र्यपविध्याग्नीनित्युक्तत्वात्सुतस्य संस्कारभरणाद्युपकरणं ॥ कनीयसादौ विवाहे त्यागात् ज्येष्ठस्य यत्परिवित्तित्वं यथा दाराग्निहोत्रसंयोगमित्याद्युक्तं यत्र ज्येष्ठेऽकृतविवाहेकनीयसोविवाहकरणं तथा विधायकन्यादानं तयोरेव च विवाहादिहोमोपदेशनं कन्यायामैथुनवर्जेलिङ्गविदारणंरेतःसेकोधिकारोरेतःसेकाद्ययोनिषु कुमारीष्वित्युक्तं । प्रतिषिद्धवृद्धिजीवनं । ब्रह्मचारिणोमैथुनं । तडागोद्यानदारापत्यविक्रयः ॥ यथाकालमनुपनयनम् । यथोक्तमतऊर्ध्वंत्रयोप्येते यथाकालं असंस्कृताइति । बान्धवानांपितृव्यादीनां । अनुवृत्तिपणपूर्वकमध्यापनं पणपूर्वाध्यापकाध्ययनम् । अविक्रेय [ विक्रयः ] सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञाधिकारत्वमदृष्टप्रयोजनंविना महतामुदकप्रवाहप्रतिबन्धहेतूनांसेतुबन्धनादीनांप्रवर्तनं । ओषधीनां अशुष्कानांहिंसैव तच्च सप्रत्ययाभ्यासहिंसायांप्रायश्चित्तगौरवाकृष्टजानामोषधीनामित्यादि । पुनर्वक्ष्यमाणंसकृदबुद्धिपूर्वेहिंसायांप्रायश्चित्तलाघवोद्देशेन स्त्र्युपजीवनं । श्येनादिनानभिचरणीयस्याभिचरणंमन्त्रौषधादिना वशीकरणं ॥ पाकादिदृष्टप्रयोजनार्थमार्द्रवृक्षच्छेदोनत्वशास्त्रितान्यर्थमात्मार्थंचक्रियारंभइत्याद्यंसकेवलंभुङ्क्तइति प्रतिषेधात्पाकविषयक्रियामात्रविषयत्वेन प्रतिषेधकल्पनयाङ्गैरेवमापद्येत । निन्दितान्नस्य पलाण्ड्वादेः सकृदनिच्छयाऽशनंबुद्धिपूर्वाभ्यासे पुनर्गर्हितानाद्ययोर्जग्धिरित्येतज्जातपुत्रादौ सत्यधिकारे नाहिताग्नित्वं । स्तेयंब्राह्मणसुवर्णादन्यत् । ऋणानांचानपकरणं त्रिभिर्ऋणैरितियथोक्तं श्रुतिस्मृतिविरुद्धशिक्षणं । नटगायनत्वादिकरणं । धान्यस्य ताम्रलोहितादेश्च पशूनांच चौर्यं ब्राह्मणस्य पीतमद्यायाः स्त्रियउपभोगः स्त्रीशूद्रवैश्यक्षत्रियहननमदृष्टार्थकर्माभावबुद्धिरित्येतत्प्रत्येकमुपपातकंबान्धवत्यागइत्यनेनैव मात्रादीनांग्रहणसिद्धेपृथग्वचनमित्यार्थमेवंच पितृव्यादित्यागेनावश्यमेतदेव प्रायश्चित्तंभवत्यपि तु न्यूनमाप्यते नस्तेयग्रहणेनैव धान्यादिस्तेयग्रहणसिद्धौ पृथगभिधानंव्याख्यातम् । **इह यस्य** सामान्यरूपतयोभयत्राभिधानंयथाहिंसौषधीनां इति तत्रप्रायश्चित्तद्वयमपि तु भवति विकल्पश्च समत्ययाप्रत्ययाभ्यासापेक्ष्ये वर्णानांयोयस्यापि च विशेषरूपोतयोभयत्राभिधानं । यथा खराश्वोष्ट्रमृगेभानांखरंहत्वैकहायनमिति । तत्राप्ययमेव न्यायोयत्र त्वेकस्मिन् एकस्यैकत्र सामान्यतोभिधानमपरत्र विशेषतोयथायाज्यसंयाज्यंव्रात्यानांयाजनंकृत्वेति तद्विशेषव्यतिरिक्तिविशेषान्तराणि सामान्यविशेषयोर्यस्य पुनर्भिन्नकर्तृकवाक्येष्वेकनामाभिधानमपरत्र विशेषस्तत्र तत्सामान्यं तद्विशेषनिष्ठमेव व्याकरणीयं । यथा ब्रह्महत्यासुरापानंस्तेयंब्राह्मणसुवर्णादिहरणंमहापातकमित्येवमेकमूलकल्पनया लाघवंस्यादन्यथा सामान्यविशेषमूलद्वयकल्पनेन गौरवमापद्यते ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ **ब्राह्मणस्येति** । ब्राह्मणस्य पीडोत्पादनंपलाण्ड्वादेः मद्यस्य च घ्राणंकुटिलत्वंपुंसि च मुखादौ मैथुनमित्येवंप्रत्येकंजातिभ्रंशकरंस्मृतम् ॥ ६७ ॥ **खराश्वोष्ट्रमृगेभाणामिति** । खरोश्वोष्ट्रमृगहस्तिच्छागैडकमत्स्यसर्पमहिषाणांप्रत्येकंवधः संकरीकरणंबोद्धव्यम् ॥ ६८ ॥ **निन्दितेभ्यइति** । अप्रतिग्राह्येभ्यः प्रतिग्रहोवाणिज्या शूद्रस्य परिचर्या अन्नताभिधानमित्येतत्प्रत्येकमपात्रीकरणंविज्ञेयम् ॥ ६९ ॥ **कृमिकीटवयोहत्येति** । कृमयःशूद्रजन्तवोभूमिशरणास्ते-

भ्यः ईषदुपचिताः सपक्षाः अपक्षाश्च कीटास्तेषांपक्षिणांचहननं मद्येन च सह यत्कुतश्चितावंदसार्थितयागतस्य भोजनं न तु मद्यसंस्पृष्टस्य अपःसुराभाजनस्थामद्यभाण्डस्थिताइत्यसंस्पृष्टेपिमद्यभाण्डसंसर्गमात्रेण स्थूलप्रायश्चित्तदर्शनात् । फलकाष्ठपुष्पाणांवा चौर्यस्वल्पेप्यपचयेत्यन्तवक्तव्यमित्येतत् प्रत्येकंमलिनीकरणीयम् ॥ ७० ॥ **एतानीति** । एतानि ब्रह्महत्यादीनि पापानि सर्वाणि यथोक्तानि यैर्यैः प्रायश्चित्तैर्निर्हीयन्ते तानि व्रतानि यथातथ्यंशृणुत ॥ ७१ ॥ **ब्रह्महेति** । योब्राह्मणंहतवान् सवने तृणपर्णादिमठिकांकृत्वाशवसंबन्धि चशिरश्चिन्हंकृत्वा ॥ सप्तागाराण्यपूर्वाणि नान्यसंकल्पितानि च । संविशेत्तानि शनकैर्विधूमे भुक्तवज्जने ॥ एककालंचरेद्भैक्ष्यंपिबेदिति यमस्य विधिना भैक्ष्यमुतात्मनः पापनिर्हरणार्थंद्वादशवर्षाणि वसेत् ॥ ७२ ॥ **लक्ष्यमिति** । धनुःशराद्यायुधधारिणांयुध्यमानानांप्रायश्चित्त्यमित्येवंविजानतः स्वेच्छया लक्ष्यभूतोवातिष्ठेद्यावन्मृतोमृतकल्पोवा ससंग्रामे च हतो लक्ष्यभूतः शुद्धिमाप्नुयात् । महारार्तोजीवन्नपि विशुध्यतीति याज्ञवल्क्यदर्शनात् । अग्नौ वा प्रदीप्तोऽधोमुखस्त्रीनवारान् शरीरंप्रक्षिपेत्तथा प्रास्येद्यथाम्रियेतेत्यापस्तम्बस्मरणादेवंक्षिपेत् ॥ ७३ ॥ **यजेनेति** । अश्वमेधाख्यंवा क्रतुंकुर्यादत्र च सार्वभौमस्य राज्ञआहितोग्नरधिकारोन तु प्रायश्चित्तार्थमाधानंकार्यमभिजिद्विश्वजितौप्रायश्चित्तद्वयं त्रिवृतात्रिवृत्स्तोमेनाग्निष्टुता त्रिवृदिति न चोच्यन्ते स्तोमःस्तोत्रसमूहः ॥ ७४ ॥ **जपन्निति** । वेदानांमध्याद्वावेकंवेदंजप्यं अल्पाहारः संयतेन्द्रियः ब्रह्महत्यानिर्हरणाययोजनशतंगच्छेत् ॥ ७५ ॥ **सर्वस्वमिति** । सर्वस्वंवा वेदज्ञाय ब्राह्मणाय दद्याद्यस्माद्धनंजीवनाय समर्थगृहे वा गृहोपभोगिधनधान्यादियुक्तं यतःसर्वस्वंवागृहंसपरिच्छदंदद्यात् । जीवनायालमितिवचनाज्जीवनपर्याप्तंसर्वस्वंदद्यात् नातोर्वाक् ॥ ७६ ॥ **हविष्यभुगिति** । नीवारादिहविष्यान्नभोजी विख्यातप्रस्रवणादारभ्य पश्चिमोदधेः स्रोतःस्रोतः प्रतिसरस्वर्ती आर्यः दिवापरिमितभुक् त्रीन्वारान्वेदसंहितांजपेदेवमेतानि त्रयोदशप्रायश्चित्तानि । जातिशक्तिगुणोपेक्षंसकृद्बुद्धिकृतंतथा । अनुबन्धादिविज्ञानंप्रायश्चित्तंविनिर्दिशेत् ॥ इति देवलस्मरणात् कर्तुर्जातिशक्तिगुणानुबन्धाद्यपेक्षया हन्यमानगुणापेक्षया वा व्यवस्थितविषयाणि कल्पनीयानि न तु विकल्पानि गुरूणामानर्थक्यप्रसङ्गात् । सर्वेषांसर्वत्रानधिकाराइह समानजातीयएकनिमित्तोपनिपातमेकमेव मन्त्रेण प्रायश्चित्तमिच्छन्ति तदसत् । एनस्सिच लघूनि गुरूणि चेतिगौतमस्मरणात् । पूर्णेवानस्यनरश्मांतु शूद्रहत्याव्रतंचरेदिति वेददर्शनात् । विधेःप्राथमिकादस्माद्द्वितीयेद्विगुणंप्रोक्तंचतुर्थेनास्तिमंत्रेण निष्कृतिः ॥ ७७ ॥ इदानींसमाप्तेद्वादशेवर्षइत्युपसंहाराद्द्वादशवर्षस्येमंगुणविधिमाह **कृतवापनइति** । लूनकेशश्मश्रुरोमाङ्गोब्राह्मणउपकारान्कुर्वन् ग्रामसमीपे गोष्ठपुण्यदेशे वृक्षमूलानामन्यतमस्मिन् पूर्वोक्तवनकुटीवैकल्पिकोनिवसेत् ॥ ७८ ॥ **गवार्थइति** । प्रक्रान्ते द्वादशेवर्षे राजचौराग्न्युदकाद्याक्रान्तब्राह्मणपरित्राणार्थंगोवोद्धरणार्थंनिर्विकल्पं प्राणान् परित्यजन् ब्रह्महत्याया मुच्यते । ब्राह्मणंवा ततः परित्रायमृतोपि मुच्यते ॥ ७९ ॥ **प्यवरमिति** । स्तेनादिभिर्ब्राह्मणसर्वस्वेऽपह्रियमाणे तदुपजिगीषार्थेयद्यत्यन्तन्यूनस्तदा त्रीन्वारान्निरुद्धयुद्धे प्रवर्तमानेनाहृतसर्वस्वोपिमुच्यते । सर्वस्वंवा विजित्य अर्वागपि त्रिः प्रवृत्तेर्मुच्यते । ब्राह्मणस्यवाप्राणपरित्यागात् प्रकारान्तरेणापि यदि तद्धेतुकः प्राणलाभोभवति तदपि मुच्यते ॥ ८० ॥ **एवमिति** । एवमुक्तनीत्या-

---

( १ ) मं=तं ( गो० ५ )

सर्वदाऽविचलनियमोऽस्त्रीसंप्रयोगः संयतमनाः द्वादशवर्षे समाप्ते ब्रह्महत्यायाः पापमपनुदतीत्येवंच ब्राह्मणार्थे-गवार्थइत्यादि सर्वप्रक्रान्तद्वादशवार्षिकस्य वेदितव्यम् ॥ ८१ ॥ शिष्टेति । अश्वमेधिब्राह्मणानां ऋ-त्विजांराजसमागमे सत्यात्मीयंब्रह्महत्यापापंनिवेद्यावभृथाख्यकर्माङ्गभूतवरे स्नातोब्रह्महत्यापापाद्विमुच्यते। इतीदंवैक-ल्पिकप्रायश्चित्तमध्यानाम्नानात्तस्य तत्रापि द्वादशवार्षिकशेषभूतंतदुपसंहारोत्तरकालमभिधानात् । किंतर्ह्यश्वमेधवर्जि-तसकलप्रायश्चित्तशेषतास्य न्याय्या । एवंचोपक्रान्तद्वादशवार्षिकादिप्रायश्चित्तस्यान्तरावभृथस्नानापनतौ तेनैव शुद्धिः ॥ ८२ ॥ धर्मस्येति । यस्माद्धर्मस्य ब्राह्मणः कारणं तदुपदेशे सति तस्यानुष्ठानाद्राजा च तस्य प्रान्तंमन्वादिभिरुच्य-ते । तस्मिन्सति यस्मात्तत्समाप्तिस्तस्मात् ब्राह्मणराज्ञांसमागमेऽश्वमेधे पापंनिवेद्यावभृथस्नातः शुध्यति ॥ ८३ ॥ ब्राह्मणइति । ब्रह्मणउत्पत्त्यैव किमुत श्रुतादिभिर्देवानामपि पूज्यः किमुतमनुष्याणां लोकस्य च प्रत्यक्षवत् प्रमाणंयदसावुपदिशति तदनुष्ठेयं यस्माद्ब्राह्मणस्य प्रामाण्ये वेदएव कारणंतस्य वेदार्थोपदेशत्वात् ॥ ८४ ॥ यतएवमतः तेषामिति । स्नातेषांपावनीयस्मात्पवित्रंविदुषांहि वाक्॥ ते ब्राह्मणाः वेदज्ञास्त्रयोपि किमुताधिकाः सा पापकारिणांसंशुद्धये स्याद्यस्माद्विदुषांसंबन्धिनी वाक् पावयित्र्यतश्च प्रकाशप्रायश्चित्तनिश्चयविदुषांपर्षद्गमनंप्राय-श्चित्ताद्वत्तयावश्यंकार्यम् । रहस्यंप्रायश्चित्ते पुनरेतन्नास्ति रहस्यत्वविनाशप्रसङ्गात् ॥ ८५ ॥ अतइति । अस्मात्प्राय-श्चित्तंमरणादन्यतमंप्रायश्चित्तंब्राह्मणादिः संयतमनाः आश्रित्य प्रशस्तात्मतयाब्रह्महत्याकृतंपापमपनुदति ॥ ८६ ॥ हत्वेति । राजन्यवैश्यौवेजानावात्रेयीमेवचस्त्रियं ॥ प्रकृतत्वाद्ब्राह्मणगर्भस्त्रीनपुंसकत्वेनाविज्ञातंहत्वा क्षत्रिय-वैश्यौ वायागप्रवृत्तौहत्वाऽऽत्रेयींरजस्वलां ऋतुमतीमात्रेयीमाहुरत्र ह्येष्यदपत्यंभवतीति वसिष्ठस्मरणात् । अत्रिगोत्रांवा नारीमिति विष्णुस्मरणात् । सा चात्रेयींच ब्राह्मणीमिति शङ्खस्मरणाद्ब्राह्मणींतामपि चात्रेयींहत्वा वधे उपपा-तकं यथोक्तं स्त्रीशूद्रविट्क्षत्रियवधइति। यदन्तरश्लोके कृत्वा स्त्रीसुहृद्वधइति तत् ॥ आहिताग्नेर्द्विजाग्र्यस्य हत्वापत्नीमनिन्दितां । ब्रह्महत्याव्रतंकुर्यादात्रेयीघ्नस्तथैव च ॥ इत्यङ्गिरःस्मरणादाहिताग्निब्राह्मणपतिव्रताब्राह्मणीभार्या-विषयम् ॥ ८७ ॥ उक्त्वेति । यत्र साक्ष्यर्थिप्रत्यर्थिनोवधार्हतोपैति तत्रासत्यमुक्त्वा गुरोश्च मिथ्याशापमुत्पाद्य निक्षेपंच ब्राह्मणसुवर्णमपि वापहृत्य स्त्रीवधंच यथा व्याख्यातंकृत्वा मित्रंच ब्राह्मणंनिहत्य ब्रह्महत्याप्रायश्चित्तंकुर्यात् ॥ ८८ ॥ इयमिति। एषा निष्कृतिरबुद्धिपूर्वब्राह्मणवधे उक्ता । इच्छातोब्राह्मणवधे प्रायश्चित्तेन संशुद्धिर्नोपदिश्यते । अन्ये-त्विन्द्रोयतीनित्याद्युक्तंश्रुतिलिङ्गं कामतोपि ब्राह्मणवधे प्रायश्चित्तमिच्छतोदंच ब्राह्मणवधवर्जनादरार्थंव्याचक्षते ॥ ८९ ॥ सुरामिति । द्विजातिगन्धातिशयव्यामूढतया चेच्छातः सुरांपैष्टींमुख्यांपीत्वाऽग्निस्पर्शांसुरांपिबेत् । तया सुर-या शरीरे दग्धे सति द्विजातिः तस्मात्पापाद्विमुच्यते ॥ ९० ॥ गोमूत्रमिति । गोमूत्रोदकगोक्षीरघृत-गोमयरसानांवान्यतममग्निस्पर्शंमरणपर्यन्तंपिबेत् ॥ ९१ ॥ कणानिति । अथवा गोलोमादिकृतवासाजटावा-न् सुराभाजनचिन्हस्तन्दुलमलंतिलखलंचैकवारंरात्रौ संवत्सरंसुरापानपापनिर्हरणार्थंभक्षयेदितीदमबुद्धिपूर्वमुख्यसुरापाने द्रष्टव्यंन पूर्ववैकल्पिकंलघुत्वात् ॥ ९२ ॥ सुरेति । यस्मात्तण्डुलपिष्टादपि संपाद्यत्वात्सुरान्नमलंमलशब्देन-चपापमुच्यते । ब्राह्मणक्षत्रियवैश्याः पैष्टींसुरांन पिबेयुः इत्यनेनैव प्रतिषेधे सति एतदतिक्रमे सुरांपीत्वा इत्यादिप्रायश्चित्तंसुराचान्नमलार्थवा [ दः ] लोकप्रसिद्धश्च पैष्ट्येव मुख्या गौडीमाध्व्योस्तूपचारात्सुराशब्दः ॥ ९३ ॥ गौडीति । गुडेन तत्कारणेनेक्षुरसेन कृता इत्येवंप्रकारा सुरापैष्टी पूर्ववाक्यनिषिद्धा तद्वत्सर्वाअपि सुराब्रा-ह्मणैर्न पातव्या । द्विजोत्तमग्रहणादुत्तरश्लोकेषु ब्राह्मणग्रहणात् गौडीमाध्व्योः सुराया सुरात्वोपचारः ॥ ९४ ॥

**यक्षरक्षःपिशाचान्नमिति** । मद्यंसुराव्यतिरिक्तं । मांसंयदभक्ष्यं । सुरा त्रिविधाऽन्याऽऽसवमरिष्टापवा- दियक्षरक्षपिशाचान्नम् एतत्संबन्धि अन्नमनस्तद्ब्राह्मणेन देवोद्देशेन हविर्भक्षयता नाशयितव्यं देवानामश्न- ताहविरिति लिङ्गात् । पुंसएव ब्राह्मणस्य मद्यप्रतिषेधोन स्त्रियइत्याहुस्तदसत् । सुरालशुनपलाण्डुगृञ्जनका- नि अभक्ष्याणि स्युःब्राह्मणी सुरापी भवति नैनांदेवाः पतिलोकंनयन्तीहैव सा दुर्मतिः क्षीणपुण्याप्सुज- लौकावेति शुक्तिका वा ॥ पतिलोकंन सा याति ब्राह्मणी या सुरांपिबेत् । इहैव साशुनी गृध्री शूकरी चापि जायते इति शङ्खवसिष्ठयाज्ञवल्क्यैः ब्राह्मण्याअपि निषेधस्मरणात् ॥ ९५ ॥ **अमेध्यइति** । ब्राह्मणः क्षीवः सन्नशुचौ वानिपतेद्वेदवाक्यंवोच्चारयेद्ब्रह्महत्याद्यकार्यंवा मदव्यामूढःकुर्यादतस्तेन मद्यंन पातव्यं इत्यपरोऽर्थवादः ॥ ९६ ॥ **यस्येति** । **तस्यव्यपैतिब्राह्मण्यमवगच्छतिशूद्रतां** ॥ यस्यब्राह्मणस्यशरीरे- संस्काररूपे नावस्थितवेदःसकृदपिमद्येनप्लूयते तस्यब्राह्मण्यंव्यपगच्छति शूद्रत्वंचासौ व्रजतीत्यपि पूर्वार्थएव ॥ ९७ ॥ **एषेति** । एषा सुरापानजनितपापस्य नानाप्रकारासंशुद्धिरुक्ता तस्मात्परंब्राह्मणसुवर्णचौर्यस्य संशुद्धिंवक्ष्यामि ॥ ॥ ९८ ॥ **सुवर्णस्तेयकृदिति** । ब्राह्मणसुवर्णहारीत्विति याज्ञवल्क्यस्मरणाद्ब्राह्मणसुवर्णहारी राजानंगत्वा सुव- र्णापहारंकर्म प्रकाशीकुर्वन्निग्रहंकुर्विति ब्रूयात् ॥ ९९ ॥ **गृहीत्वेति** । स्कन्धेनादाय मुशलमित्याद्युक्त्वा तेनार्पितंमुशलादि गृहीत्वा तंस्तेनं न जातु ब्राह्मणंहन्यादित्युक्तत्वातंब्राह्मणवर्जितमेकवारंराजातंहन्यात्सच स्तेनोवधेन तत्पापा- त्प्रमुच्यते । तपसा वक्ष्यमाणेन ब्राह्मणोविध्यतिक्रान्तनिषेधेन राज्ञा हन्यते तदासोपि शुध्यत्येव ॥ १०० ॥ **तपसापनुत्तुमिच्छुःसुवर्णस्तेयजंमलं ॥ चीरवासाद्विजोरण्येचरन्ब्रह्महणिव्रतं** ॥ तपसा सुवर्णस्ते- योत्पन्नंपापंद्विजोहर्तुमिच्छन् वस्त्रखण्डछन्नोरण्यग्रहणात्प्राथम्याच्च द्वादशवार्षिकंब्रह्महणि यद्व्रतं उक्तं तत्कुर्या- त ॥ १०१ ॥ **एतैरिति** । ब्राह्मणः सुवर्णस्तेयजनितंपापमेभिर्व्रतैर्द्विजोनिर्हरेत् । अथ तपसोऽर्थयोरुक्तत्वादेतै- रिति बहुवचनमनुमन्वाद्यपेक्षयानुक्तमपि कल्पमिति ज्ञापनार्थं । गुरुभार्यागमननिमित्तंपुनः पापमेभिर्व- क्ष्यमाणैः प्रायश्चित्तैर्निर्हरेत् । गुरुशब्दआचार्यः पिता च ॥ १०२ ॥ **गुरुतल्पीति** । गुरुभार्यागम- नपापंअभिभाष्यज्वलदायसे शयने शयीत । स्त्रींप्रतिकृतिंवा कार्ष्णायसींकृतामिति संवर्तस्मरणादयोमयींज्वलन्तीं आलिंगेदेवंमरणेनासौ शुध्यति ॥ १०३ ॥ **स्वयमिति** । आत्मनैव वा लिङ्गवृषणमुत्खायाञ्जलौ गृहीत्वा स्पृष्ट- गतिः सन्नाशरीरपाताद्दक्षिणपश्चिमांदिशंगच्छेत् ॥ १०४ ॥ **खट्वाङ्गीति** । खट्वैकदेशभृद्वस्त्रखण्डाच्छन्नोश्मश्रुलोमा- दिः संयतमनानिर्जने वने एकंसंवत्सरंप्राजापत्यंवक्ष्यमाणंकृच्छ्रंवा कुर्यात् ॥ १०५ ॥ **चान्द्रायणमिति** । यद्वा गुरुदारगमनपापनिर्हरणार्थंसंयतेन्द्रियोनीवारादिना पिष्टादिपयसा वा त्रीन् मासांश्चान्द्रायणान्यावर्तयेत् । अत्रापि ज्ञानाज्ञानमुख्यामुख्यगुरुसाध्वसाध्वीभार्यागमनाद्यपेक्षयैतानि प्रायश्चितानि कल्पनीयानि । अत्र गुरुदाराणांनापर- दारत्वंसंभवतीत्यतोन पृथक् द्वितीयपरदारप्रायश्चित्तंभवति । यत्र तु नान्तरीयकत्वात्प्रवेशोनास्ति तत्रानेकनिमित्त- समावेशादनेकमपि प्रायश्चित्तंभवति । यस्य गुरुभार्यासगोत्रांरजस्वलांच समागतानकल्पामसक्तामेमावास्यायांसदिवान- पिजननमसक्तंमावद्वत्तस्यक्तरं उच्छिष्टोगच्छन् प्रतिनिमित्तंप्रायश्चित्तीभवति॥१०६॥**एतैरिति**। एभिरुक्तैर्व्रतैः ब्रह्महत्यादिम- हापातककारिणः पापानि निर्हरेयुः । गोवधाद्युपपातककारिणः पुनर्वक्ष्यमाणप्रकारैरेभिरभिधास्यमानैरनेकरूपैर्निर्हरेयुः ॥१०७॥ **उपपातकसंयुक्तइति** । **चतुर्थकालमिति** । **दिवेति** । **तिष्ठन्तीष्विति** । **आतुरामिति** । **उष्णइति** ।

आत्मनइति । अनेनेति । गोघाती उपपातकवान् समासंयावत्सक्तुयवागुरूपेण यवान् पिबेत् । अन्यन्मासद्वयंगुडादि-क्षारवर्जितलवणमन्नमेकमहरहर्भुक्त्वाद्वितीयेह्नि सायंस्तोकमश्नीयात् । तेनैव च गोचर्मणाच्छादितोमुण्डितकेशादिगोमूत्रेण स्नानंकुर्वन्संयतेन्द्रियोमासत्रयमपि गोनिवासे वसेत् । यासांगवांगोष्ठे वसेत्तासांदिवागोष्ठाद्दूरादिगच्छन्तीनांपश्चाद्गच्छेत् तासांचानुगमनंकुर्वन् स्थितः संमूर्च्छनैरूर्ध्वमूर्ध्वमुद्धूतंरजआस्वादयेत्ताभिरेव सह पुनर्गोष्ठमेत्य कण्डूयनादिना ताः परिचर्य प्रणम्य च ततोरात्रावनिषिद्धोपविष्टआसीत । तथा शुचिविगतक्रोधउत्थितेषु गोषु पश्चादुत्तिष्ठन् गोष्ठेवनेवाविहरन्तींपश्चाद्विहरेत् उपविष्टासूपविशेत् । तथाव्याध्युपेतांचौरव्याघ्रादिभिर्भयहेतुभिराक्रान्तांश्च आदिपतितांकर्दमावसक्तांपरया शक्त्या मोचयेत् । तथोष्णआदित्ये तपति वर्षति मेघे वाति वायौ शीतेरत्यर्थंवाति गोर्यथाशक्ति रक्षामकृत्वात्मनस्त्राणंकुर्यात्तथात्मनोन्येषांवागृहे क्षेत्रे खलके च सस्यादि भक्षयन्तींगांवत्सकंच क्षीरंपिबन्तंन ब्रूयात् । अनेनोक्तविधानेन योगोघ्नोगामनुसरति सगोवधचरितंपापंत्रिभिर्मासैरपनुदेत् ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ ११५ ॥ वृषभैकादशाइति । वृषभः एकादशोयासांगवांताः चेच्छातोतत्प्रायश्चित्ते दद्यात् । अविद्यमानइयति धने सर्वस्वं वेदज्ञेभ्यो दद्यात् ॥ ११६ ॥ एतदिति । अन्येप्युपपातकगण पठितव्यतिक्रमकारिणोनरावक्ष्यमाणावकीर्णिवर्जिताः पापनिर्हरणार्थं एतदेव गोवधप्रायश्चित्तंकुर्युः ॥ ११७ ॥ अवकीर्णीति । हुत्वेति । अवकीर्णी वक्ष्यमाणः काणेन खरेण रात्रौ चतुष्पथे पार्वणतन्त्रेण निर्ऋताख्यांदेवतांयजेत । तस्माच्च गर्दभाद्वपादिहोमान्यथार्थंकृत्वा ततः संमासिञ्चन्त्वित्यनयर्चामारुतेन्द्रबृहस्पतीत्ययोनामत्र मन्त्रएषांस्रुवेणाज्येनजुहुयात् ॥११८॥११९ ॥ अप्रसिद्धत्वादवकीर्णिलक्षणमाह कामतइति । द्विजातेर्ब्रह्मचारिणइच्छातः शुक्रोत्सर्गंब्रह्मचर्यस्य लोपकंधर्मविदो ब्रह्मस्वरूपनिरूपणपराः प्राहुः ॥१२०॥ मारुतमिति । ब्रह्मचारिणोयदध्ययनयमनियमानुष्ठानजनितंतेजस्तदवकीर्णिनः सतोमरुदिन्द्रबृहस्पत्यग्नीश्वतुरउपसंक्रमेऽन्यतरेभ्यः आज्याहुतीर्जुहुयादित्याज्याहुतिविधेरर्थवादः॥१२१॥ एतस्मिन्निति । सप्तागारंचरेद्भैक्ष्यंस्वकर्मपरिकीर्तयन्॥अवकीर्णाख्ये पापे उत्पन्ने पूर्वोक्तगर्दभयागादिकृत्वा तद्गर्दभसंबन्धि चर्म प्रावृत्यावकीर्ण्यस्मीत्येवंस्वकर्म ख्यापयन् सप्तगृहंभैक्ष्यंचरेत् ॥ १२२ ॥ तेभ्यइति । तद्गृहलब्धेन भैक्ष्येण एककालमाहारंकुर्वन् सायंप्रातर्मध्यंदिनेषु च स्नानमाचरन् संवत्सरेण योवकीर्णी सविशुध्यति ॥ १२३ ॥ जातिभ्रंशकरमिति । ब्राह्मणस्यरुजःकृत्वेत्यादिजातिभ्रंशकराण्युक्तानितेषुमध्यादन्यतममिच्छयाकृत्वावक्ष्यमाणंसान्तपनंकुर्यात् । अनिच्छातस्तुकृत्वाप्राजापत्यंवक्ष्यमाणम् ॥ १२४ ॥ सङ्करापात्रकृत्यास्विति । खराश्वोष्ट्रेत्यादिनिन्दितेभ्योधनादानमित्यादिना च सङ्करीकरणापात्रीकरण्यान्युक्तानि तेषु मध्यादन्यतममिच्छातः कृत्वा अनिच्छया कृतंचान्द्रायणंशुध्यर्थंकुर्यात् कृमिकीटवयोहत्येति मलिनीकरणीयान्युक्तानि तन्मध्यादन्यतममिच्छातः कृतंत्र्यहंयावकंपिबेत् । यावकंयवकृतंपेयाकृति तत्रपिबेत् ॥ १२५ ॥ तुरीयइति । ब्रह्महत्यावधाद्द्वादशवार्षिकाच्च चतुर्थोभागः क्षत्रियवधे स्मृतः । वैश्येचसाध्वाचारेऽष्टभागः । शूद्रे हते षोडशभागोबोद्धव्यइतीदंसाध्वाचारक्षत्रियविट्शूद्रविषयं गुरुत्वात् स्त्रीशूद्रविट्क्षत्रवधइत्येतत्पुनरुपपातकप्रायश्चित्तंज्ञानाज्ञानभेदेन च चान्द्रायणवैकल्पिकमसत्क्षत्रविट्शूद्रविषयंलघुत्वात् । एतच्च ब्रह्महत्याव्रतचतुर्थांशाद्बुद्धिपूर्ववधे येनेदमाह ॥ १२६ ॥ अकामतइति । अबुद्धिपूर्वंपुनः क्षत्रियंनिहत्य वृषभएकः सहस्रं यासांगवां आत्मनः शुध्यर्थंब्राह्मणेभ्योदद्यात् ॥ १२७ ॥ त्र्यब्दमिति । ब्रह्मह्नाद्वादशसमाइत्यादिवर्षत्रयंचरेदिती-

दमकामतस्त्वित्येतद्वैकल्पिकम् । गोसहस्राभावे दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्निति दर्शनाज्जटी दूरतरे ग्रामाद्वा-संवृक्षमूलनिकेतनइत्येतत् स्थिरोग्रहणादक्लान्तरनित्यर्थंतुरीयोब्रह्महत्यायाइत्यत्र तु सर्वद्वादशवार्षिकाङ्गजातंभवति ॥ १२८ ॥ **एतदिति** । ब्रह्महत्यायांयदुक्तंव्रतंब्रह्महा द्वादशसमाइत्येतदेवकामाधिकारादकामतः साध्वाचारंवैश्यंनिहत्यब्राह्मणादिसंवत्सरंचरेद्वित्तवान् पुनरेकवृषभाधिक गवांशतंदद्यात् । पूर्वोत्तरश्लोकयोरिति वृषभग्रहणात् ॥ १२९ ॥ **एतदिति** । एतदेव व्रतंब्रह्महा द्वादशसमाइति यदुक्तंतद्व्रतंगवोपेतंचाकामाधिकारादकामतः साध्वाचारंशूद्रं-निहत्य कुर्यात् । वित्तवान् पुनः वृषभएकादशोयासांगवांताः शुक्लागाः ब्राह्मणाय दद्यात् ॥ १३० ॥ **मार्जारनकुलाविति** । बिडालनकुलचाषंमण्डूकश्वगोधोलूककाकानामेकैकंहत्वा शूद्रवधव्रतंस्त्रीशूद्रविट्क्षत्रवधइति उपपातकमायश्चित्तंगोवधव्रतंचान्द्रायणंचरेत् । शूद्रे ज्ञेयस्तु षोडशइत्याद्यतिदेशेन स्यात् न्याय्यत्वात् । यद्येवं-किमिति गोवधादिगणपाठएवैतेन पठितः नैवंतत्र पाठे पयःपिबेत्त्रिरात्रंचेत्यत्र पुनरेषांग्रहणं कर्तव्यंस्यात् । यत्समुचितवधे एतत्प्रायश्चित्तमुत्तरे पयःपानादिनालघुनारुह विकल्पः स्यात् न्याय्यत्वादित्याहुस्तदसत्समु-च्चयवाचिशब्दाश्रवणात् ज्ञानादिकृतभेदेनच व्यवस्थितविकल्पसंभवादतिगुरुणा लघीयसोज्ञानादिभेदेन व्यव-स्थितविकल्पोवान्याय्यइति । प्रास्येदात्मानमग्नौवा गृहंवासपरिच्छदंब्राह्मणाय दद्यादित्येवमादिषु न चास्य स-मुचितविषयत्वमुत्तरस्य च प्रत्येकगोचरत्वे पयः पिबेत्त्रिरात्रंवेत्यववा शब्दः संगच्छते । तस्मात्तत्स्थौल्यात्प्रायश्चि-त्तस्यैच्छातोनिवेश्यैनम्रतः संतपसिसमर्थस्यात्यन्ततपसि अत्यन्तमशक्तस्येति धार्मिकस्येदंप्रायश्चित्तम । उत्तरंपुनः कथंचित् । प्रमादसंजातव्यतिक्रमस्यात्यन्तधार्मिकस्य तपसि अत्यन्तमशक्तश्चेति न किंचिद्वैषम्यम ॥ १३१ ॥ **पयइति** । एषांमार्जारादीनामबुद्धिपूर्वे वधे त्रिरात्रंक्षीरंपिबेत् । तत्रान्तरत्वादिना समर्थप्रकृतंत्रिरात्रंयोजनमध्व-नोगच्छेत्तत्राप्यशक्तस्त्रिरात्रंनद्यांस्नायात् तत्राप्यपर्याप्तः त्रिरात्रमापोहिष्ठेत्येतत्सूक्तंजपेत् ॥ १३२ ॥ **अभ्रिमिति** । **पलालभारकंषण्ढेसीसकंचैवमाषकं** ॥ १३३ ॥ **घृतकुंभमिति** । शूकरे हते घृत-पूर्णघटंदद्यात्तित्तिराख्ये पक्षिणि हते तिलानांपलशतद्वयंदद्याच्छुके हते द्विवर्षवत्सं । क्रौञ्चाख्यंपक्षिणंहत्वा त्रिवर्षवत्संदद्यात् ॥ १३४ ॥ **हत्वेति** । हंसबलाकबकमयूरवानरपाजिकभासाख्यपक्षिणमन्यतमंहत्वा ब्राह्मणाय गां-दद्यात् । स्पर्शनंदानम् । अत्रापिगोर्महत्त्वात्समस्तवधएतत्प्रायश्चित्तमित्याहुः तदसत् क्रौञ्चहनने त्रिहायनव-त्सदर्शनात् ॥ १३५ ॥ **वासइति** । अश्वंहत्वा वस्त्रंदद्यात् । हस्तिनंहत्वा पञ्चनीलान् वृषान् दद्यात् । छा-गाविकंहत्वा वृषभंदद्यात् । खरंहत्वैकवर्षवत्संदद्यात् ॥ १३६ ॥ **क्रव्यादानिति** । आममांसभक्ष्यान् मृगान् व्याघ्रादीन् हत्वा प्रत्यग्रप्रसूतांप्रचुरक्षीरांगांदद्यात् । अमांसभक्षान् मृगान् सारंगादीन् हत्वोत्तीर्णवत्सभावांगां-दद्यात् । उष्ट्रंहत्वा सुवर्णरक्तिकांदद्यात् ॥ १३७ ॥ **जीनकार्मुकबस्तावीनिति** । ब्राह्मणादिचा-तुर्वर्ण्यजातीयाः स्त्रियोनैकौत्कृष्टापकृष्टपुरुषगमनेन पतन्तीभूताः कथंचिदनिच्छातोहत्वा चर्मपुटधनुश्छागमेषान यथाक्रमंशुध्यर्थंदद्यात् ॥ १३८ ॥ **दानेनेति** । पुत्राद्यभावाद्दानेन सर्पादिवधपापनिर्हरणंकर्तुमसमर्थो-ब्राह्मणादिप्रत्येकवधे कृच्छ्राणांमध्येप्रथमंप्राजापत्यंकृच्छ्रंपापनिर्हरणार्थंसर्पादयश्च अभ्रिकार्ष्णायसींदद्यादित्यतः प्रभृति निर्दिष्टागृह्यन्ते ॥ १३९ ॥ **अस्थ्यन्वितानामिति** । अनस्थिसाहचर्यादस्थिमतांप्राणिनांक्षुद्रजन्तूनांकृक-लासादीनांसहस्रस्य वधेशूद्रवधव्रतमौपदेशिकंकुर्यात् । अस्थिरहितानांप्राणीनांक्षुद्रजन्तूनांमत्कुणादीनांच शकटपूरणप-रिमाणानांवधादेतदेवव्रतंकुर्यात ॥ १४० ॥ **किञ्चिदिति** । अस्थिमतांक्षुद्रजन्तूनांकृकलासादीनांप्रत्येकंवधेकिं-

चिदेवास्थिमतांवधे पणोदेयइति सुमन्तुस्मरणात् पणंब्राह्मणाय दद्यात् । अनस्थ्नांतु प्रत्येकंवधे प्राणाया- मेन ॥ सव्याहृतींसप्रणवांगायत्रींशिरसासह । त्रिःपठेदायतप्राणःप्राणायामःसउच्यतेइतिवसिष्ठोक्तलक्षणेन शुध्यति ॥ १४१ ॥ **फलदानामिति** । फलदानांवृक्षाणां आम्रादीनांवीरुधांबहुपर्णानांलतानांसंजातपुष्पाणांछेदने पा- पप्रमोचने लिङ्गानांऋचांशतंजपनीयम् ॥ १४२ ॥ **अन्नाद्यजानामिति** । सक्त्वादिजातानांप्राणिनां गुडाद्यु- त्पन्नानांच सर्वेषां उदुंबरमधूकादिफलपुष्पोद्भवानांच वधे घृतप्राशनंशोधनं प्रायश्चित्तानांशरीरसंतापनार्थत्वात् । घृतप्राशक्षीरपानादिचोदनायमन्नांतरनिवृत्तिः । शरीरशुध्यर्थे पुनर्घृतप्राशनेन तु गम्येच्छाया प्रेतमित्यादौ न भोजनान्तरंनिवर्तते ॥ १४३ ॥ **कृष्टजानामिति** । कर्षणपूर्वंजातानामौषधीनांषष्टिकादीनांवने च स्वयमुत्प- न्नानांनीवारादीनांनिष्प्रयोजने छेदे क्षीराहारः सन्नेकमहोगोनुगमनंकुर्यात् ॥ १४४ ॥ **एतैरिति** । एभिः प्रायश्चित्तैर्हिंसाजनितंपापं अपनोद्यंस्यादिदानींच भक्षणे बुद्धिपूर्वाबुद्धिपूर्वभक्षणजनितमशेषपापंयथापोह्यते तथा शृणुत ॥ १४५ ॥ **अज्ञानादिति** । महापातककरणतारतम्यात्तत्रांनेदंमुख्यसुराविषयमपि तु गौडीमाध्वीविषयं तेना- बुद्धिपूर्वांगौडींमाध्वींवा पीत्वा वपनंमेखलादण्डइत्युपनयनाङ्गानिषेधात्पुनरुपनयनेनामत्यापाने पयोघृतमुदकंवायुः प्रत्यहं तप्तानि सकृच्छ्रस्ततोस्यसंस्कारइति गौतमस्मरणात्तप्तकृच्छ्रसहितेनशुध्यति । बुद्धिपूर्वमपि च गौडीमाध्व्योः सकृत्पाने प्राणान्तिकंन निर्दिष्टव्यमिति शास्त्रमर्यादा । सुरांपीत्वेत्येतस्य सर्वप्रकारसुराविषयत्वाशङ्कायामिति पूर्व- मनिर्देश्यमित्येतदुक्तम् ॥ १४६ ॥ **अपइति** । सुराभाण्डे मद्यभाण्डे स्थिताअपः सुरामद्यरसगन्धवर्जिताशङ्खपुष्पौषधिप्रक्षे- पणपक्वंक्षीरंहविषोरेव शृतशब्दस्य मुत्वा क्षीरंनोदकंपञ्चरात्रंपिबेत् । सुरामद्ययोः साक्षात्पानेप्रायश्चित्तभेददर्शनादिहा- पि ज्ञानाज्ञानभेदेन विषयसमीकरणंपरिहरणीयम् ॥ १४७ ॥ **स्पृष्ट्वेति** । सुरांस्पृष्ट्वा दत्वा च स्वस्तिवाचनादिपूर्वकंच प्रतिगृह्य शूद्रोच्छिष्टाः सर्वाश्चापः पीत्वा प्रतिगृह्येत्युपादानाद्ब्राह्मणोदर्भक्वथितमुदकंत्र्यहंपिबेत् ॥ १४८ ॥ **ब्राह्मणइति** । ब्राह्मणः पुनः कृतसोमयागः सुरापस्य संबन्धिनंमुखनिःश्वासंसुरागन्धंघ्रात्वा उदकमध्ये प्राणायामत्रयंकृत्वा घृतप्राशनंचकृत्वा विशुध्यति ॥ १४९ ॥ **अज्ञानादिति** । विड्वराहादीनांवक्ष्यमाणत्वात् अबुद्धिपूर्वमनु- ष्यसबन्धि मूत्रपुरीषंवा जग्ध्वा सुरासंस्पृष्टंवातिरसास्वादे भुक्त्वा द्विजातयस्त्रयोवर्णाः पुनरुपनयनं मूत्रपुरीषकु- णपरेतसांप्राशने चैवमिति गौतमस्मरणात्तप्तकृच्छ्रसहितमर्हन्ति । भक्षणेपि च ब्राह्मणमत्याचरेत्कृच्छ्रंरेतोविण्मूत्र- मेव च इत्युक्तंतदप्येवगौतमीयसंस्काररहितंद्रष्टव्यं वचनाच्चात्र ज्ञानाज्ञानभक्षणे त्वतुल्यमेव प्रायश्चित्तम् ॥ १५० ॥ **वपनमिति** । शिरोमुण्डनमेखलादण्डभैक्ष्यचरणानि व्रतानि चाग्निकार्यमधुमांसवर्जनादीनि प्रायश्चित्तार्थमुपनयने द्विजातीनांन भवन्ति ॥ १५१ ॥ **अभोज्यानामिति** । अभोज्यानांऽश्रोत्रियतते यज्ञइत्याद्युक्तानां अ- न्नंभुक्त्वा शूद्रायाः शूद्रग्रहणंनैवोपसंग्रहणाद्द्विजातिस्त्रीणामप्युच्छिष्टंच भुक्त्वा शूद्रोच्छिष्टंच भुक्त्वा मांसंचाभक्ष्यंयत्र क्रव्या दशूकरोष्ट्राणामित्यादि यद्वैकल्पिकंप्रायश्चित्तंनोक्तंतद्भुक्त्वा सप्तरात्रंसक्तुयवागूरूपेण यवान् पिबेत् ॥ १५२ ॥ **शुक्तानीति**। यानि प्राग्स्वरसानि कामपरिवासनद्रव्यान्तरेणसंसर्गकालपरिवासाभ्यांचाम्लीभवन्ति तानि शुक्तानि कषायाहरीत- क्यादयस्ताान्यप्रतिषिद्धान्यपि द्विजातिः पीत्वा तावदशुचिर्भवति यावत्तद्भुक्तादि जीर्णंन भवति ॥ १५३ ॥ **विड्व- राहखरोष्ट्राणामिति** । ग्रामशूकरखरोष्ट्रसृगालवानरकाकानांमूत्रपुरीषाणि द्विजातिर्भुक्त्वा चान्द्रायणंकुर्यात् ॥ १५४॥ **शुष्काणीति** । वाय्वादित्यादिसंशोषितानि मांसानि वल्लूरादीनी भुक्त्वा भूम्युद्भवानि च कवकानि जग्ध्वा आघातस्थानंचमांसमबुद्धिपूर्वंभुक्त्वा चान्द्रायणमेव कुर्यात् ॥ १५५ ॥ **क्रव्यादशूकरोष्ट्राणामिति** । आममां-

सभक्षिणांगृधादीनांग्रामसूकरोष्ट्रग्राम्यकुक्कुटमनुष्यकाकखराणांमांसभक्षणे तप्तकृच्छ्रंवक्ष्यमाणंविशोधनम् ॥ १५६ ॥ मासिकार्थमिति । काममभ्यर्थितोऽश्नीयादित्यमावास्याश्राद्धभोजनाभ्यनुज्ञानोन्मासिकार्थमेकोद्दिष्टंसपिण्डीकरणादर्वाग्योब्राह्मणोब्रह्मचारी भुञ्जीत । सत्रिरात्रमुपवसेत्त्र्यहादनन्तरमिश्नाद्युदकमध्येवसेत् ॥ १५७ ॥ व्रतचारीति । योब्रह्मचारीमाक्षिकंमांसंवानिच्छातआपदि वाश्नीयात्सप्राजापत्यंकृच्छ्रंकृत्वा ततोब्रह्मचर्यक्रान्तस्य व्रतस्य यदवशिष्टं तत्समापयेत् ॥ १५८ ॥ बिडालकाकाखूच्छिष्टमिति । बिडालकाकमूषकश्वनकुलानामुच्छिष्टंकेशकीटसंसर्गदुष्टंचाकृतमृत्प्रक्षेपशुद्धिकमन्नंभुक्त्वा ब्रह्मसुवर्चलांमक्काथ्य तद्रसमवशेषादेकाहपिबेत् ॥ १५९ ॥ अभोज्यमिति । आत्मनः शुद्धिकामेन प्रतिषिद्धमन्नंहठान्न भक्षणीयंप्रमादभुक्ते पुनर्वमितव्यं तदसंभवे प्रायश्चित्तैः क्षिप्रंशोधनीयम् । यत्तु वमनमक्षेप्रेपि लघुप्रायश्चित्तंभवति ॥ १६० ॥ एषइति । अभक्ष्यभक्षणे यानि प्रायश्चित्तानि तेषामेतन्नानाप्रकारंविधानमुक्तम् । अधुना चौर्यपापापहारिणंप्रायश्चित्तानांविधानंश्रूयताम् ॥ १६१ ॥ धान्यान्नधनचौर्याणीति । ब्राह्मणोब्राह्मणगृहाद्धान्यरूपाणिभक्तायन्नरूपादिधनचौर्याणि इच्छातः कृत्वा न त्वात्मीयभ्रान्त्यानीत्वा संवत्सरंप्राजापत्यकृच्छ्राचरणेन शुध्यति । इतिकालदेशपरिणामद्रव्यस्थानगुणदौर्गत्यापेक्षया इदंप्रायश्चित्तमहत्वात्कल्पनीयमेवमुत्तरत्रापि गृहादौ बोद्धव्यम् ॥ १६२ ॥ मनुष्याणामिति । १६३ ॥ द्रव्याणामिति । द्रव्याणामल्पार्घाणामल्पप्रयोजनानां अनुक्तप्रायश्चित्तविशेषाणांत्रपुसीसादीनांपरगृहाच्चौर्यंकृत्वा तद्यक्तंतद्रव्यंस्वामिनोदत्वा सान्तपनंकृच्छ्रंवक्ष्यमाणात्मशुध्यर्थंकुर्यान्निर्यात्येतिशेषः ॥ १६४ ॥ भक्ष्यभोज्यापहरणइति । भक्ष्यस्य मोदकादेर्यानस्य गन्त्यादेः शय्याखट्वादेः आसनस्य च पीठादेः पुष्पाणांमूलानांचापहरणे गोमूत्रंगोमयंक्षीरंदधिसर्पिरित्येतत्पञ्चगव्यंविशोधनम् ॥ १६५ ॥ तृणकाष्ठद्रुमाणामिति । तृणकाष्ठवृक्षगुडवस्त्रचर्ममांसानांशुष्कान्नस्य च तण्डुलादेरपहरणंत्रिरात्रमुपवासः स्यात् ॥ १६६ ॥ मणिमुक्ताप्रवालानामिति । मणिमुक्ताविद्रुमताम्ररूप्यायःकांस्यपाषाणानांचापहरणाद्द्वादशाहंतण्डुलफलभक्षणंकार्यम् । सर्वत्रात्र सकृदभ्यासदेशकालद्रव्यस्वामिदौर्गत्याद्यपेक्षयोत्कृष्टापकृष्टद्रव्यापहारविषयमसमीकरणं परिहणीयम् ॥१६७॥ कर्पासकीटजोर्णानामिति। कार्पासपट्टोर्णानांद्विशफस्याश्वादेः पक्षिणांच शुकादीनांगन्धप्रधानानांचागरुप्रभृतीनामौषधीनांगुडूच्यादीनांरज्ज्वाश्मुञ्जादिकृतायाअपहरणे त्र्यहंक्षीराहारः स्यात् ॥ १६८ ॥ एतैरिति । एभिरुक्तैः प्रायश्चित्तैः चौर्यजनितंपापंद्विजातिरपनुदेत् । अगम्यागमननिमित्तंपुनरेभिर्वक्ष्यमाणैः प्रायश्चित्तैर्निर्हरेत् ॥ १६९ ॥ गुरुतल्पव्रतमिति । भगिनीषु सोदर्यासु च मित्रभार्यासु स्नुषाकुमारीषु चाण्डालश्यन्त्यजासु चोपगमनंकृत्वा गुरुदारगमनप्रायश्चित्तंकुर्यात् । अभ्यासाद्यपेक्षया तत्र तत्र गुरुतल्पप्रायश्चित्तंविज्ञेयम् । रेतःसेकः स्वयोनिष्विति अनेनास्य पौनरुक्त्यंतत्रैवोक्तपरिहारार्थम् ॥ १७० ॥ पितृष्वस्रेयीमिति । पितृष्वसृमातृष्वसृदुहितरंमातुः स्वभ्रातुः सोदरस्य दुहितरंगत्वा चान्द्रायणंचरेत् ॥ १७१ ॥ एताइति । तिस्रएताः पितृष्वस्राद्याः भार्यार्थंप्राज्ञैः नोद्वहनीयाः । ज्ञातित्वादेतानोढव्याः यस्मादेताउपगच्छन् नरकंव्रजति । असपिण्डा तु या मातुरित्यनेनैव निषेधसिद्धौ दाक्षिणात्याचारदर्शनेन दार्ढ्यार्थंपुनर्वचनम् ॥ १७२ ॥ अमानुषीष्वनद्वेष्विति । अमानुषीषु वडवाद्यासु नगत्रि गौतमीये गवि च तल्पसमइत्यतिगुरुप्रायश्चित्तदर्शनादनद्वे वाविद्यमानस्त्रीपुल्लिङ्गे नपुंसके रजस्वलायांच योनितश्चान्यत्र स्थितायांजले चरेतःसेकंकृत्वा सान्तपनंकृच्छ्रंकुर्यात् ॥ १७३ ॥ मैथुनमिति । पुंस्यूरुमध्यकक्षादेमैथुनंकृत्वास्त्रियां गोयुक्ते यानेवागत्यादावप्सु याने

धा नावादौ दिवा च कृत्वा सचैलस्नानंकुर्यात् ॥ १७४ ॥ **चाण्डालस्येति** । चाण्डालम्लेच्छस्त्रियंगत्वा अज्ञानतोभुक्त्वा च तेभ्यश्च प्रतिग्रहंज्ञानतः कृत्वा अभ्यासे सति पतति । अतश्चपतितप्रायश्चित्तमस्यभवतीत्येतत्पुनरेतदभ्यासतःकृत्वातत्तुल्यतांयाति । अतश्चास्य प्रायश्चित्ताभावः ॥ १७५ ॥ **विप्रदुष्टामिति** । विप्रदुष्टांस्त्रियंनिरुध्य-प्रायश्चित्तान्तंयावत् स्थापयेत् । यच्च पुंसःसमानजातीयपरदारगमने उपपातकप्रायश्चित्तंतदेवैनांकारयेत् ॥ १७६ ॥ **सेति** । **सा स्त्री सजातिगमनेन** सकृत्प्रदुष्टा कृतप्रायश्चित्ता यदि पुनस्तेनैव सजातिना . अभ्यर्थिता सती तद्गमनंकुर्यात् तदा प्राजापत्यंकृच्छ्रंचान्द्रायणंच तस्याःशुद्ध्यर्थंद्वयमपि स्यात् ॥ १७७ ॥ **यदिति** । शूद्रांशयनमारोप्यब्राह्मणोयात्यधोगतिं ॥ शूद्रावेदीपतत्यत्रेरिति निन्दातिशयश्रवणादकमोढाशूद्रासेवनेन यदेकरात्रेण पापमर्जयति तद्भैक्षाशी नित्यंजपंकुर्वंस्त्रिभिर्वर्षैरपनुदति । यत्तु चाण्डाल्यत्र वृषलीति व्याचक्षते तदसत् अप्रसिद्धेस्तथा चापस्तंबोऽनार्याशयने बिभ्रदित्युपक्रम्य यदेकरात्रेण करोति पापंकृष्णवर्णब्राह्मणः सेवमानश्चतुर्थकालउदकाभ्यधायैस्त्रिभिर्वर्षैः तदपहन्तिपापमित्याह ॥ १७८ ॥ **एषेति** । हिंसाअभक्ष्यभक्षणस्तेयागम्यगमनकारिणांचतुर्णामपि महापातकिनामितरेषांचैषा संशुद्धिरुक्ता । इदानींपतितसंयोगिनांचमावक्ष्यमाणाः संशुद्धीः शृणुत ॥ १७९ ॥ **संवत्सरेणेति** । महापातककारिणंयाजयेयस्तेन वा याजितस्तमध्यापयंस्तेन वाध्यापितस्तस्मै कन्यांददंस्तस्माद्दत्तामुद्वहन् संवत्सरेण पतति । द्विजातिकर्मभ्योहानिः पतनमिति गौतमस्मरणात् अदृष्टार्थकामाधिकाराद्धीयते । सहगमनभोजनावस्थानानि पुनः पतितेन सह कुर्वन्संवत्सरेण पतति अपि तु ततऊर्ध्वंतेषांलघुत्वात् ॥ १८० ॥ **यइति** । एषांब्रह्महाप्रभृतीनांचतुर्णांपतितानां अध्यापनादिपतितेन सह पूर्ववाक्योक्तंसंसर्गंयोमनुष्यः करोति सतस्य प्रायश्चित्तमुक्तं ब्रह्महाद्वादशसमाइत्यादितेदेतत्संपर्कपापजनितंकुर्यात् ॥ १८१ ॥ **पतितस्योदकमिति** । महापातकिनोजीवतः सएव प्रेतस्यैवोदकक्रियांवक्ष्यमाणनीत्या सपिण्डैः समानोदकैः समेत्य ज्ञात्यृत्विग्गुरुसंनिधाने रिक्तायांनवम्यादौ तिथौ दिनान्ते कर्तव्याः ॥ १८२ ॥ **दासीति** । सपिण्डसमानोदकप्रयुक्ता दास्युदकपूर्णंघटममुमनुदकंकरोमीति नामग्राहमिति गौतमस्मरणादेवमुक्त्वा प्रेतस्येवदक्षिणमुखंपादेन प्रक्षिपेत्तदनु च ते सपिण्डाः समानोदकैः सह शौचमाश्रयेयुः ॥ १८३ ॥ **निवर्तेरन्निति** । **दायाद्यस्यप्रदानंचयात्रामेवचलौकिकीं** । तेन च पतितेन सह संभाषणसहावस्थाने न कर्तव्ये न च तस्मै रिक्थदेयंनाप्युत्सवादौ निमन्त्रणादि तस्य लोकव्यवहारः कार्यः ॥ १८४ ॥ **ज्येष्ठतेति** । ज्येष्ठकार्यंप्रत्युत्थानादि तस्य न कार्यंज्येष्ठलभ्यंचोद्धारधनंनास्य देयम् । एतच्च पूर्वसिद्धमेव यवीयसः प्राप्त्यर्थमनूद्यते । तस्य च ज्येष्ठसंबन्धिनमुद्धारांशंतदनुजोगुणाधिकोलभेत् ॥ १८५ ॥ **प्रायश्चित्तइति** । कृते पुनः पतितेन प्रायश्चित्ते उदकपूर्णंनवंघटंतेनैव प्राप्तप्रायश्चित्तेन सह पवित्रे जलाधारे स्नात्वा तेन सपिण्डसमानोदकाः प्रक्षिपेयुः । इह नवग्रहणाद्दासीघटमित्यत्रोपयुक्तघटग्रहणंगम्यते ॥ १८६ ॥ **सइति** । सकृतप्रायश्चित्तः तंपूर्वोक्तंघटमुदकमध्ये क्षिप्त्वा ततः स्वगृहंप्रविश्य पूर्ववत् सर्वाणि बन्धुकार्याणि कुर्यात् ॥ १८७ ॥ **एतदेवव्रतमिति** । यदेव पुंसः पातित्यनिमित्तंतदेव स्त्रीणांविशेषंयाज्ञवल्क्यः प्राह । नीचाभिगमनंगर्भपातनंभर्तृहिंसनं । विशेषपतनीयानि स्त्रीणामेतान्यपिध्रुवं ॥ इत्येवंस्त्रीषु पतितासु पतितस्योदकंकार्यमित्यादियदुक्तंकिंतु कुर्यात्किंतु ग्रासाच्छादनान्नपानादीनि गृहसमीपे च शीर्णगृहकादि निवासार्थमासांदेयम् ॥ १८८ ॥ **एनस्वि-**

**भिरिति** । पापकारिभिरकृतप्रायश्चित्तैः सह दानप्रतिग्रहादिकमनर्थकंच नानुतिष्ठेत् । कृतप्रायश्चित्तानांचैषांन कदाचिदपि किंचित्संभावयेत् अस्यायंचार्थवादः ॥ १८९ ॥ **बालघ्नानिति** । बालंयोहतवान् यश्च कृतमुपकाराचरणेन नाशितवान् यश्च त्राणार्थिनमागतंहतवान् स्त्रियंच योहतवान् तान् प्रायश्चित्ततपसोत्पन्नशुद्धिकानपि सहवासंपरिहरेत् ॥ १९० ॥ **येषामिति** । येषांब्राह्मणादीनां अनुकल्पिककालेऽप्युपनयनंयथाशास्त्रं न कृतंतान् प्राजापत्यकृच्छ्रत्रयंकारयित्वा यथाशास्त्रमुपनाययेत् ॥ १९१ ॥ **प्रायश्चित्तमिति** । प्रतिषिद्धकर्मजीविनोये द्विजाः प्रायश्चित्तंकर्तुमिच्छन्ति ये वानधीतवेदास्तेषामपि एतत्कृच्छ्रत्रयमुपदिशेत् ॥ १९२ ॥ **यदिति** । यद्गर्हितेन तपसाकर्मणाऽसत्प्रतिग्रहादिना ब्राह्मणाधनमर्जयन्ति तस्य धनस्य परित्यागेन जपतपोभ्यांच वक्ष्यमाणाभ्यांशुध्यन्ति ॥१९३॥ **जपित्वेति** । त्रीणि सावित्रीसहस्राणि यत्नवान् जपित्वा मासंच क्षीराहारोगोष्ठनिवासआसीनः सन् असत्प्रतिग्रहजनितंपापमपहरति ॥ १९४ ॥ **उपवासकृशमिति** । केवलंक्षीराहारेणाशनान्तरनिवृत्त्या तमपचितशरीरंगोष्ठात्प्रत्यागतंप्रह्वीभूतं हे साधो किं अस्माभिः सह सामान्यमिच्छसि पुनरसत्प्रतिग्रहेनत्वंप्रवर्तसइत्येवंधर्मंब्राह्मणाः परिपृच्छेयुः ॥ १९५ ॥ **सत्यमिति** । सत्यंपुनरसत्प्रतिग्रहंन करिष्यइत्येवंब्राह्मणानुक्त्वागवांघासंप्रक्षिपेत् । ततस्तस्मिन् यवसभक्षणप्रदेशे गोभिः पवित्रीकृतत्वात्तीर्थत्वात्तत्रास्तिरोब्राह्मणाअस्य संव्यवहारार्थंअङ्गीकारंकुर्युः ॥ १९६ ॥ **व्रात्यानामिति** । व्रात्यानांभ्रष्टोपनयनानामतऊर्ध्वंत्रयोप्येते इत्याद्युक्तानांव्रात्यस्तोमादियजनंकृत्वा पितृगुर्वादिव्यतिरिक्तानांवान्त्येष्टिंकृत्वा वाकृशस्त्रेवे ब्राह्मणस्योक्तत्वात् अनभिचारणीयस्य श्येनादिकर्मभिः चरेत्समंजातमरणहीनंचक्रतुविशेषंद्विरात्रादिकृत्वात्रिभिःकृच्छ्रैर्विशुध्यति ॥ १९७ ॥ **शरणागतमिति** । शरणागतमपापंपरित्राणार्थिनमागतंप्रायश्चित्तार्थंवासंप्रामंशक्तः सन्नपरित्यज्यानध्याप्यंच वेदमध्याप्यधनार्थंवा परीक्षास्थाने पर्यङ्कयोगपूर्वकंवेदैकदेशमुक्तवानजनितंपातंसंवत्सरंयवभक्षोभूत्वा द्विजोऽपनुदति ॥ १९८ ॥ **श्वशृगालखरैरिति** । श्वशृगालखरमनुष्याश्वोष्ट्रशूकरैर्ग्राम्यैश्चाममांसादैर्मार्जारादिभिर्दष्टःप्राणायामेनशुध्यति ॥ १९९ ॥ **षष्ठान्नकालनेति** । **होमाश्चशाकला**इति अपाङ्क्त्याये स्तेनपतितक्लीबाइत्यादिनोक्तास्तेषांयेनाम्नातप्रतिपदप्रायश्चित्तास्तेषांमासंत्र्यहमभुक्ते तृतीयेह्नि सायंभोजनंवेदसंहिताजपोदेवकृतस्यैनसोवयजनमसीत्यादिभिर्यजुर्भिरष्टौ काष्ठशाकलहोमाः प्रत्यहमित्येवमेतत्समुचितंविशोधनम् ॥ २०० ॥ **उष्ट्रयानमिति** ॥ २०१ ॥ **विनाद्भिरप्सुवाप्यार्त्तः शारीरंसंनिषेव्यत्विति** । असंनिहितउदके जलमध्ये वाविगार्त्तो मूत्रपुरीषं वा कृत्वा सवासाबहिर्ग्रामान्नद्यादौ स्नात्वा गांच स्पृष्ट्वा विशुध्यति ॥ २०२ ॥ **वेदोदितानामिति** । वेदविहितानांनित्यानांकर्मणां अग्निहोत्राणां अनाम्नातश्रौतविषयप्रायश्चित्तानांपरिलोपे स्नातकव्रतानांच वैणवींधारयेद्यष्टिमित्याद्युक्तानामकरणे उपवासः प्रायश्चित्तम् ॥ २०३ ॥ **हुंकारमिति** । हुमित्येवंसरोषंब्राह्मणस्योक्ता त्वमित्येवंच विद्याद्यधिकस्योक्त्वैव एतत्करणकालावशिष्टमहर्भुञ्जानः स्नानंकृत्वा तंपादोपसंग्रहणेन अपगतकोपंकुर्यात् ॥ २०४ ॥ **ताडयित्वेति** । **विवादेनापीति** । प्रकृतंब्राह्मणंगरीयांसंच कोपात्तृणेनाप्याहत्य कण्ठे च वस्त्रेणाबध्य कलहे च जित्वा प्रणिपातेनापगतक्रोधंकुर्यात् ॥ २०५ ॥ **अवगूर्येति** । ब्राह्मणस्य हननेच्छया दण्डाद्युद्यम्य वर्षशतंनरकंप्राप्नोति । दण्डादिना पुनः प्रहृत्य वर्षसहस्रंप्राप्नोति ॥ २०६ ॥ **शोणितंयावतःपांसून्संगृह्णातिद्विजन्मन**इति । ब्राह्मणस्य प्रहृते सति तत्संबन्धिरुधिरंयत्संख्याकान् भूमीरजःकणान् पिण्डीकरोति तत्संख्याकानि वर्षसहस्राणि तच्छोणितोत्पादयिता नरकआस्ते ॥ २०७ ॥ **अवगूर्येति** । ब्राह्मणस्य दण्डाद्युद्यम्य प्राजापत्यंकृच्छ्रंकुर्यात् । दण्डादिप्रहारंदत्वातिकृच्छ्रंवक्ष्यमाणंचरेत् ।

रुधिरमुत्पाद्य कृच्छ्रातिकृच्छ्रौ कुर्यात् ॥ २०८ ॥ **अनुक्तनिष्कृतीनामिति** । अनुक्तप्रायश्चित्तानांपापानां-प्रतिलोमवधादिकृतानांनिर्हरणार्थंकर्तुः शरीरधनादिसामर्थ्यमपेक्ष्य पापंच ज्ञानाज्ञानसकृदसकृदावृत्त्यनुबन्धादिरूपेणा-वेक्ष्य वक्ष्यमाणप्रायश्चित्तंप्रकल्पयेत् ॥ २०९ ॥ **येरिति** । यैः साधनैर्मनुष्यः पापान्यपनुदति तानि साधनानि देवर्षिपितृभिः पापापनुत्त्यर्थंसेवितानि युष्माकंवक्ष्यामि ॥ २१० ॥ **त्र्यहमिति** । प्राजापत्याख्यंकृच्छ्रं द्विजा-तिः कुर्वन् त्र्यहमाद्यंदिनादावश्नीयादपरंत्र्यहंदिनान्ते भुञ्जीत । अन्यंत्र्यहमप्रार्थितमुपनतं अद्यात्परंत्र्यहान्न कि-ञ्चिद्भक्षयेत् । अत्रहविष्यान्मातरसाविति गौतमस्मरणाद्धविष्यमदितव्यम् । ग्राससङ्ख्या च । सायंच द्वादशग्रासाः प्रातः पञ्चदशस्मृताः । चतुर्विंशतिरयाच्याः स्युः परंनिरशनंस्मृतं । इतिपाराशरोक्त्या विज्ञेयम् ॥ २११ ॥ **गोमूत्रमिति** । गोमूत्रंगोमयंगोक्षीरंगोदधिगोघृतदर्भक्वथितोदकानांप्रत्यहमेकंचोपवासंकुर्यात् । इत्येवंसप्ताहमेक-स्मिन्नहन्येतानि सर्वाणि पिबेदेकंचोपवासंकुर्यात् । इत्येवंत्र्यहंयाज्ञवल्क्यउभयदर्शनादित्येषःसांतपनाख्यःकृच्छ्रः स्मृतः ॥२१२॥ **एकैकमिति** । **त्र्यहंचोपवसेदन्त्यमिति** । अतिकृच्छ्राख्यकृच्छ्रंद्विजातिः कुर्वन् प्रातःसायमयाचितरूपेणैकैकं-ग्रासंत्रीणि त्र्यहान्यश्नीयात् । अन्यच्चत्र्यहंन किञ्चिद्भुञ्जीत ॥ २१३ ॥ **तप्तकृच्छ्रमिति** । तप्तकृच्छ्राख्यकृच्छ्रंब्राह्मणादिकु-र्वंस्त्र्यहमुदकंक्षीरघृतवायूनुष्णानपर्यायेणपिबेत् । त्रिपलंतुजलंपीत्वाद्विपलंतुपयः पिबेत् । सर्पिषः पलमेकंतुत्रिमात्रंचोष्णमारुतं । इतिपाराशरोक्तपरिमाणानामेकवारंस्नानंकुर्वन् संयमवान् पिबेत् । उष्णमारुतंउष्णोदकंवा ॥ २१४ ॥ **यतात्मानइति** । विगतान्नाभिलाषस्य संयतेन्द्रियस्य यत् द्वादशाहमभोजनंतत्पराकाख्यः कृच्छ्रः पापापेक्षया सकृदावृत्तिता-रतम्येन प्रकाशाप्रकाशगुरुलघुसकलपापानामपनोदकः ॥ २१५ ॥ **एकैकमिति** । सायंप्रातर्मध्याह्नेषुस्ना-नंकुर्यात् । पौर्णमास्यांपञ्चदशग्रासान्ग्रासप्रमाणंवास्याविकारेणेतिगौतमोक्तप्रमाणानश्नीयात् । ततः कृष्णपक्षे प्रतिपत्प्रभृ-ति एकैकग्रासापचयंकुर्यात् । यावच्चचतुर्दश्यामेकग्रासमश्नीयात् अमावास्यायांचोपोष्य ततःप्रतिपत्प्रभृति शुक्लपक्षएकैकं-ग्रासंवृद्धिंनयेद्यावत्पौर्णमास्यांपञ्चदशेत्येतत् पिपीलिकामध्यंचान्द्रायणंचरेत् ॥२१६॥ **एवमेवविधिंकृत्स्नमाचरन्निति** । एवमेव पिण्डानांग्रासवृद्धित्रिषवणस्नानात्मकंविधानंयवमध्यमाख्यचान्द्रायणे शुक्लपक्षमादितः कृत्वा कृतनियमः एत-द्यवमध्याख्यंचान्द्रायणव्रतमनुतिष्ठन्कुर्यात् । प्रतिपद्येकंग्रासंद्वितीयायांद्वौ यावत्पौर्णमास्यांपञ्चदशाश्नीयात्ततः प्र-तिपत्प्रभृति एकैकग्रासापचयंकुर्यात् यावच्चतुर्दश्यामेकः पश्चादमावास्यायामुपवासइति ॥ २१७ ॥ **अष्टावि-ति** । **नियतात्माहविष्यस्येति** । यतिचान्द्रायणाख्यंचान्द्रायणंकुर्वन्विगतान्नगन्धोहविष्यस्यओदनादेरष्टावष्टौ ग्रा-सान् मध्याह्नकाले समश्नीयात् ॥ २१८ ॥ **चतुरइति** । शिशुचान्द्रायणाख्यंचान्द्रायणंब्राह्मणादिकुर्वंश्चतुरोग्रासान् दि-नादौ चतुरश्चादित्येस्तंगते संयमितात्मा समश्नीयात् ॥ २१९ ॥ **यथाकथंचिदिति** । नीवारादिह-विष्यान्नसंबन्धिनांहविष्याणांग्रासानांच द्वे शते चत्वारिंशदधिके कदाचिदेकंकदाचित्पञ्च कदाचित्षोडशकदाचिदुपवा-सइत्येवमादि अनियमेन यथाकथंचित् मासेन संयमवान् अश्नंश्चन्द्रलोकंप्राप्नोति । अतश्चाभ्युदयार्थमप्येतत्कार्यम् ॥२२०॥ **एतदिति** । रुद्रादित्यवसुमरुदृषयएतच्चान्द्रायणाख्यंव्रतंप्रकाशाप्रकाशगुरुलघुसकलपापापनोदाय पापापेक्षया सकृदावृत्ति-तारतम्येन कृतवन्तः॥२२१॥ **महाव्याहृतिभिरिति** । महाव्याहृतिभिर्भूर्भुवःस्वरित्येताभिः आज्यंहविरनादेशइतिसूत्रका-रवचनात् आज्येनस्वयंप्रत्यहंहोमंकुर्यात् । अहिंसासत्यमक्रोधाकौटिल्यानि पुरुषार्थतयोक्तान्यपि व्रताङ्गतयानुतिष्ठेत् ॥२२२॥ **त्रिरह्नस्त्रिर्निशायामिति** । अन्होरात्रेश्चारंभमध्यावसानेषु स्नानार्थंसचैलोजलादौ प्रविशेदेतच्च पिपीलिकामध्य-चान्द्रायणवर्जंतत्रोपस्पृशंस्त्रिषवणमित्युक्तत्वात्स्त्रीशूद्रपतितैश्चसहसंभाषणंनकदाचिद्यावद्व्रतंकुर्यात् ॥ २२३ ॥ **स्थाना-**

**सनाभ्यामिति** । तिष्ठेदहनि रात्रौ आसीन इतिगौतमस्मरणाद्दिवास्थितोरात्रावासीनोवर्तेतासामर्थ्याद्वा स्थण्डिलशायी स्यात् ॥ स्त्रीसंप्रयोगरहितोव्रती च मौञ्जीदण्डकमण्डलुरग्निकार्यंचेति शङ्खदर्शनान्मेखलादियुक्तोगुरुदेवब्राह्मणानांपूजकः स्यात् ॥ २२४ ॥ **सावित्रीमिति** । सावित्रींच सर्वदा रात्रावपि जपेत्पवित्राणि यथाशक्ति जपेत् । एवंकृच्छ्रादिष्वपि सर्वेषु यत्नवान् प्रायश्चित्तार्थमहाव्याहृतिभिर्होमादिसर्वंकुर्यात् । तप्तकृच्छ्रेषु षट्सवनंस्नानमातिदेशिकंन प्रवर्ततेसकृत्स्नायीत्यौपदेशिकविरोधात् ॥ २२५ ॥ **एतैरिति** । एभिरुक्तैरुपायैः प्रायश्चित्तैर्लोकविदितपापाद्विजातयोवक्ष्यमाणपर्षदा शोधनीयाः । अप्रकाशवधंपुनारहस्यत्वविनाशपरिहाराच्छिष्यत्वादिव्यपदेशेनायतान्वक्ष्यमाणैर्जपहोमैःपर्षच्छोधयेत् ॥ २२६ ॥ **ख्यापनेनेति** । द्वित्रादिविदितएवंकर्मास्मीत्येवमन्येषामपि अविदितपापानांपापप्रकाशेन प्रकाशाप्रकाशाङ्गभूतेन न तु रहस्याङ्गभूतेन रहस्यत्वहानिप्रसङ्गात् हिकष्टंकिमयेदंकृतं इत्येवंपश्चात्तापेन च प्रकाशाङ्गभूतेनैव तपसा चोक्तरूपेण कृच्छ्रादिना जपेन च प्रकाशाङ्गप्रधानभूतेनैव प्रायश्चित्तसामर्थ्येन च प्रक्रान्ततपाः दानेन पापकारी पापान्मुच्यते ॥ २२७ ॥ **यथायथेति** । मनुष्यः पापंकृत्वा तेन पापेन स्वयमेव यथा यथा ख्यापयति मयेदंदुष्टंकर्मकृतं इति निन्दति तथा तथा तंशरीरस्थंक्षेत्रज्ञंपुण्यपापयोः तदाश्रयत्वात्तेन पापेन जीर्णचर्मेव सर्पस्तस्मात्पापात्प्रमुच्यते इति ख्यापनार्थवादः ॥ २२८ ॥ **यथायथेति** ॥ **तथातथाशरीरात्तुतेनाधर्मेणमुच्यते** ॥ २२९ ॥ **पापंकृत्वेति** । पापकारिणोयदि पश्चात्तापउत्पद्यते तदा तस्मात्पापात्प्रमुच्यते इत्युक्तं । सच पापकारी भूयः पापंन कुर्यामित्येवंपुनः पापकारिणोनिवृत्तिसंकल्पेनशुध्यतीति निवृत्ते प्रकाशाप्रकाशप्रायश्चित्ताङ्गभूतविधानार्थमेतत् ॥ २३० ॥ **एवमिति** । एवंशुभाशुभानांकर्मणांपरलोकइष्टफलोत्पत्तिमनसाविचार्य मनोवाक्कायैः शुभमेव कर्म कुर्यात् । इष्टफलत्वान्नाशुभमकृतप्रायश्चित्तानां अदृष्टदुःखोत्पादनत्वात्प्रायश्चित्तकरणस्यापि च दुःखरूपत्वात् ॥ २३१ ॥ **अज्ञानादिति** । प्रमादादिच्छातोवा निन्दितंकर्म कृत्वा तत्पापान्मोक्षमन्विच्छन् परंदुष्कृतंन कुर्यात् । इति निवृत्त्यर्थवादः ॥ २३२ ॥ **यस्मिन्कर्मण्यस्यकृत**इति । यस्मिन् दुष्कृतकर्मणि कृतेपि शास्त्रितप्रायश्चित्तेमनो विचिकित्स्यात् तस्मिंस्तावत्प्रायश्चित्तंतदेव पुनः कुर्यादन्यद्वा गुरुपंयावन्मनः प्रसादपरंस्यात् ॥ २३३ ॥ **तपोमूलमिति**। यदेतत्सर्वंदेवानांमनुष्याणांसुखंतदादौ मध्येन्ते च तपःकारणं इति तपोमाहात्म्यकथनं प्रायश्चित्ततपःस्तुत्यर्थम् ॥ २३३ ॥ **ब्राह्मणस्येति** । ब्राह्मणस्य वेदार्थावबोधस्तपः । क्षत्रियस्य धर्मतः प्रजारक्षणंतपः । वैश्यस्यकृषिवाणिज्यपाशुपाल्यंतपः । शूद्रस्य ब्राह्मणपरिचर्या तपइत्युक्तानां अन्येषांपुनरिहाभिधानंप्रायश्चित्ताङ्गत्वार्थम् ॥२३५॥ **ऋषयइति** । ऋषयः वाङ्मनःकायोपेताः फलमूलवायुभक्षास्तपसैव जङ्गमस्थावरसहितपृथ्व्यन्तरिक्षद्युलोकात्मकंलोकत्रयमशेषमेकदेशस्थाः सन्तः प्रकर्षेण पश्यन्तीति तपोमाहात्म्यकथनं । प्रायश्चित्ततपःस्तुत्यर्थमेवमुत्तरश्लोकावपि ज्ञेयौ ॥ २३६ ॥ **औषधानीति** । औषधानि व्याध्युपशमनान्यगदानि विषापहारद्रव्याणि विद्यातपसा ब्रह्मविजिज्ञासा चेति श्रुतेरात्मज्ञानरूपापि देवसंबन्धिनी च नानारूपा स्वर्गादावस्थितिरित्येतानि तपसैव प्राप्यन्ते । तस्मात्तपस्तेषांप्राप्तिनिमित्तम् ॥ २३७ ॥ **यदिति** । यद्दुःखेनोत्तीर्यते यद्दौस्थ्यापदादि यच्च दुःखेन प्राप्यते तेनैव शरीरेण ब्राह्मणादि यच्च दुःखेनगम्यते मेरुपृष्ठादि यच्च दुःखेन क्रियते समुद्रयानादि एतत्सर्वंतपसा साधयितुंशक्यंयस्मादतिदुष्करकार्यकरणे तपोऽप्रतिहतशक्ति ॥ २३८ ॥ **महापातकिनइति** । ब्रह्महत्यादिकारिणोऽन्ये चोपपातकादिकर्तारस्तपसैवोक्तरूपेण सुष्ठुकृतेन तस्मात्पापात्प्रमुच्यन्ते । इत्युक्तस्यापि प्रायश्चित्ततपःस्तुत्यर्थवचनम् ॥ २३९ ॥ **कीटाइति** ।

कीटसर्पशलभपशुपक्षिणः स्थावराणि च वृक्षगुल्मादीनि भूतानि तपोमाहात्म्येन स्वर्गगच्छन्ति यथेतिहासेषु कीटोपाख्यानादौ दर्शितम् । इति तपोमाहात्म्यकथनेन प्रायश्चित्ततपःस्तुतिरेवमुत्तरश्लोकाविज्ञेयाः ॥ २४० ॥ यत्किञ्चिदिति । मानसवाचिककायिकंयत् किञ्चित्पापंपुरुषाणांभवति ये प्रायश्चित्तविना तेषांनिवर्तन्ते तच्चेदमनवरततपःप्रवृत्तानां कथंचिदुत्पद्यन्ते तथा विनैवप्रायश्चित्तंकृतेनैव नित्यप्रवृत्तेन तपसा तेषांतत्सर्वंक्षिप्रंनश्यति ॥ २४१ ॥ तपसेति । प्रायश्चित्ततपसा क्षीणकल्मषस्यैव ब्राह्मणस्य पुरोडाशादियागान् देवाः प्रतिगृह्णन्ति अभिलषितांश्चार्थान् पुष्णन्ति ॥ २४२ ॥ प्रजापतिरिति । हिरण्यगर्भः सकलजनोत्पत्तिस्थितिप्रभुरपि तपश्चरणपूर्वकमेवेनंग्रन्थमकरोत् । तथा ऋषयोवसिष्ठादयः तपसैव मन्त्रदमसंपन्नाः ॥ २४३ ॥ इत्येवंतपसोदेवाइति । सर्वस्यास्य जगतोयत् शुभंजन्म तत्तपसः सकाशादित्येवंदेवाः पश्यन्तः एतत्तपोमूलमिदंसर्वमित्यादि तपोमाहात्म्यंप्रवदन्तीति समस्तातपःस्तुतिः ॥ २४४ ॥ वेदाभ्यासइति । यथाशक्ति प्रत्यहंवेदाध्ययनंपञ्चमाहायज्ञानुष्ठानमपराधमर्षणमित्येतानि पातकोत्पन्नानि अपि पापानि क्षिप्रंनाशयन्ति किमुतान्यानीति । नित्यकर्मानुष्ठानस्यासंवेदितप्रतनुपापापक्षपणहेतुत्वज्ञापनार्थमिदम् ॥ २४५ ॥ यथैधांस्तेजसावह्निःप्राप्तानिति । यथाग्निः काष्ठानि प्राप्य क्षणेनैव तेजसा निःशेषेणदहति तथा ज्ञानाग्निना पापंसर्वंदहति वेदार्थज्ञआत्मज्ञानस्य पापापक्षपणहेतुत्वज्ञापनार्थमेतत् ॥ २४६ ॥ इदानींरहस्यप्रायश्चित्तान्याह इतीति ॥ २४७ ॥ सव्याहृतिकाइति । भूर्भुवःस्वर्महर्जनस्तपःसत्यमित्येतत् समस्तव्याहृत्योंकारसहिताः षोडशप्राणायामाः । सव्याहृतींसप्रणवांगायत्रींशिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः सउच्यते ॥ इतिवसिष्ठलक्षिताः कुंभकपूरकरेचकविधानेन प्रत्यहंमासंकृताब्रह्महत्यापापमप्यविशब्दात्तत्सर्वातिदेशिकमप्यपनुदन्ति । तत्र बाह्याभ्यन्तरवाय्वोः प्रकोष्ठप्रवेशनिष्क्रमणनिरोधः कुंभकोबाह्येन वायुना कोष्ठपरिपूरणंपूरकः कोष्ठस्यवायोरनवरतोत्सर्गोरेचकइति द्विजातीनामेव पुंसां रहस्यप्रायश्चित्ताधिकारोन तु शूद्रस्त्रीजपहोमप्राधान्यात् । रहस्यप्रायश्चित्तानां ॥ अविदित्वा ऋषिच्छन्दोदैवतंयोगमेववा । योध्यापयेज्जपेद्वापि पापीयान् जायते तु सः ॥ इतिव्यासस्मरणात्प्रायश्चित्तविनियुक्तमन्त्रदेवतादिसत्त्वतत्त्वावबोधमात्रे वा अधिकारोनत्वन्यत्र विद्वत्तोपयुज्यते श्रौतकर्मपरिदर्शनादियोगे प्रयोगाधिकृतौ कर्मान्तरगतविज्ञानोपयोगोस्ति ॥ २४८ ॥ कौत्संजप्त्वापइतीति । माहेन्द्रमिति । कुत्सेन ऋषिणा दृष्टमपनः शोशुचदघमित्येतत् सूक्तंवसिष्ठदृष्टंच प्रतिस्तोमेभिरित्येतस्यतृचं महाँइन्द्रोयओजसेत्येतच्च सूक्तमेतोन्विन्द्रंस्तवामेत्येताश्च शुद्धवत्यऋचः प्रकृतंमासमहरहः षोडशकृत्वोजपित्वा सुरापोप्यपि शब्दात् तत्साम्यादिदेशिकाधिकृतोपि विशुध्यति ॥ २४९ ॥ सकृदिति । ब्राह्मणः सुवर्णमपहृत्यास्यवामस्येत्येतत्सूक्तं प्रकृतमहरहरेकवारंजपित्वा शिवसंकल्पंच यज्जाग्रतोदूरमुदैतिदैवमित्येतत् जपित्वा क्षिप्रमेव विपापोभवति ॥ २५० ॥ हविष्यान्तीयमिति । हविष्यान्तमजरंस्वर्विदीत्येतत्सूक्तं नतमंहोनदुरितमिति च इतिमेमनः सहस्रशीर्षापुरुषइत्येतानि सूक्तानि प्रकृतंमासंप्रत्यहंअभ्यासेन जपित्वा गुरुदारगस्तत्पापमपहरति ॥ २५१ ॥ एनसामिति । स्थूलानांपापानांमहापातकानांनिर्हरणंकर्तुमिच्छन् अवतेहेळो वरुण नमोभिरित्येतामृचं यत्किञ्चेदं वरुण दैव्येजनइत्येतां च संवत्सरं जपेत् ॥ २५२ ॥ प्रतिगृह्येति । निषिद्धप्रतिग्रहं सुरादिभुक्त्वा तरत्समन्दीधावतीत्येतत्सूक्तं जपित्वा द्विजातिर्दिवसत्रयेण पवित्रीभवति ॥ २५३ ॥ सोमारौद्रमिति । अनेन पापकृत्सोमारुद्राधारयेथामसुर्यमित्येतत्सूक्तमर्यमणं वरुण मित्रचेत्येतांच ऋचंमासमहरहरभ्यस्यनद्यां स्नानंकुर्व

न शुध्यति ॥ २५४ ॥ **अब्दार्धमिति** । अवशेषितत्वात् सर्वपापानामन्यतमकारी इन्द्रं मित्रमित्येतत्समकं षण्मासान्जपेत् मैथुनंचोदकमध्ये कृत्वा मासंभैक्षाशी स्यात् ॥ २५५ ॥ **मन्त्रैरिति** । देवकृतस्यैनसोवयजनमसीत्यादिभिः काष्ठशकलहोमविनियुक्तैर्मन्त्रैः संवत्सरंघृतहोमंकृत्वा नमइत्युग्रमित्येतां ऋचं संवत्सरंजपित्वा महापातकमप्यपनुदति ॥ २५६ ॥ **महापातकसंयुक्त**इति । महापातकवान् संवत्सरंभैक्ष्यभुक् पावमानीः स्वादिष्ठयेत्याद्याऋचोऽभ्यस्य गवामनुगमनंच गोवधव्रतोक्तप्रक्रियया संयतः कुर्वन्विशुध्यति ॥ २५७ ॥ **अरण्य**इति । यद्वा पराकत्रयेणापनीतपापः सन् अरण्यांत्रीन्वारान् वेदसंहितांसंयमवानावर्त्य सर्वाणि पातकानि महापातकोपपातकादीन्यपिहन्ति ॥ २५८ ॥ **त्र्यहमिति**। त्रिषवणंस्नानंकुर्वन् प्रतिस्नानंच जलमध्ये त्रीन्वारान् ऋतंचसत्यंचाभीद्धादित्येतत्सूक्तंजपन् समाहितस्त्र्यहमुपवसेदेवंकुर्वन्. सर्वैर्महापातकादिभिः पापैर्मुच्यते ॥ २५९ ॥ **यथेति** । यथाश्वमेधोयज्ञश्रेष्ठः सर्वपापविनाशकृदेवमघमर्षणमपि सूक्तंसकलकल्पषनाशनमिति पूर्वार्थवादः ॥ २६० ॥ **हत्वेति** । लोकत्रयान्तर्वर्तिसकलभूतजातमपि हत्वा चाण्डालादेरपि सकाशादश्नन् ऋग्वेदमभ्यस्य नकिञ्चिदपि पापंप्राप्नोति । इत्यृग्वेदाभ्यासस्तुतिरुत्तरार्थम् ॥ २६१ ॥ **ऋक्संहितामिति** । ऋग्वेदसंहितांयजुर्वेदसंहितांवा साम्नांवासारण्यकाधीतसामसंहितानांसामसामार्चिकंत्रीन्वारान् संयमवानावर्त्य सर्वपापान्यपहन्ति ॥ २६२ ॥ **यथेति** । यथा बृहत्सरसि मृल्लोष्टंनिपत्यैव विनाशमेत्येवंसर्वदुष्कृतमृग्यजुःसामात्मकत्वेन त्र्यवयवैर्वेदेन्तंनीयतइतिपूर्वार्थवादः ॥ २६३ ॥ त्रिवृत्त्वंवेदस्यनिरूपयितुमाह **ऋचोयजूंषिचान्यानीति** । ऋचोयजूंषिचामुख्यानि संहितागतानि न तु ब्राह्मणमध्यधीतानि सामानि चार्षिकास्तोमिकादिभेदेनानेकप्रकाराणीत्येषत्रिवृद्वेदोयोवेदव्योयश्चैनंवेदमेवंत्रिवृतंवेद सवेदविज्ज्ञान्यः ॥ २६४ ॥ अपरंत्रिवृत्त्ववेदस्यदर्शयितुमाह **आद्यमिति** । अकारोकारमकाराक्षरत्रयसमाहाररूपेणोंकाराख्यं ब्रह्म परब्रह्मवाचकत्वात् यस्मिन्नोंकारे ऋग्यजुःसामात्मिकात्रय्याश्रिता यथाशंकुना सर्वाणि पर्णानि संवर्णान्येवमोंकारे सर्वावाचः संवर्णाइतिश्रुतेः ॥ सरहस्यरूपोपरस्त्रिवृद्वेदोयश्चैनंवेद यएनंत्रिवृतवेत्तिसवेदवित् ॥ २६५ ॥ इतिश्रीभट्टमाधवात्मजगोविन्दराजविरचितायांमन्वाशयानुसारिण्यांमनुटीकायांचतुर्णांजातीनामाचाराधाररूपिण्यां एकादशोऽध्यायः ॥ ११ ॥

## ॥ अथद्वादशोऽध्यायः ॥



**चातुर्वर्ण्यस्ये**ति । हे अपाप ब्राह्मणादिवर्णचतुष्टयस्य सान्तरप्रभवस्यैषोऽखिलोधर्मस्त्वयाभिहितः । अधुनाकर्मणांशुभाशुभानांफलप्राप्तिजन्मान्तरसंभवानांपरमार्थेनास्माकंब्रूहीति ऋषिं महर्षयोभृगुमाहुः ॥ १ ॥ **स** इति । समन्वपत्यंधर्मप्रधानोभृगुः अस्य सर्वस्य कर्मबन्धस्य फलनिश्चयंशृणुतेतितान्महर्षीनाह ॥ २ ॥ **शुभाशुभफलमि**ति । मनोवाक्कायनिमित्तसंकल्पाभिधानक्रियात्मकंयत्कर्म विहितप्रतिषिद्धरूपंसुखदुःखफलं तत्कर्महेतुकाश्च देवमनुष्यतिर्यगादिभावेनोत्कृष्टमध्यमापकृष्टामनुष्याणांजन्मान्तरप्राप्तयोभवन्ति ॥ ३ ॥ **तस्ये**ति । तस्य शरीसंबन्धिनः कर्मणः उत्कृष्टमध्यमजघन्यरूपतया त्रिःप्रकारस्यापि मनोवाक्काय्याश्रितस्य वक्ष्यमाणेन दशलक्षणेनैतस्य करणे मनः प्रवर्तयितृ जानीयान्नहि मनसा अकल्पितंकिञ्चित्कर्तुंवक्तुंवा शक्यते ॥ ४ ॥ एवंदशलक्षणत्वंकर्मणांदर्शयितुमाह **परद्रव्येष्वि**ति । केन प्रकारेण परधनान्यपहरेयमित्येवंचिन्तनंमनसा चान्यस्य विनाशाकाङ्क्षा नास्ति शास्त्रितंकर्मफलमित्येवंदुर्ग्रहश्चेत्येवंत्रिप्रकारमशुभफलंमानसंकर्म । एतद्विपरीतंपरधनास्पृहा दया शास्त्रितकर्म फलास्तित्वबुद्धिरित्येतच्छुभफलं शुभाशुभकर्मेत्युभयस्य प्रस्तुतत्वात् ॥ ५ ॥ **पारुष्यमि**ति । अप्रियाभिधानमसत्यभाषणंसर्वत्रवक्तृत्वंबाह्यस्यासत्यस्यापि निष्प्रयोजनमभिधानमित्येवं चतुःप्रकारमशुभफलंवाचिकंकर्म स्यात्तद्विपरीतंप्रियंसत्यंहितंशास्त्राभ्यासइत्येतत् शुभफलम् ॥ ६ ॥ **अदत्तानामि**ति । परस्वहरणमशास्त्रितहिंसा परदारगमनमित्येवंत्रिःप्रकारमशुभफलंशारीरम् । तद्विपरीतंदानंपरित्राणमिन्द्रियसंयमश्चेत्येतच्छुभफलम् ॥ ७ ॥ **मानसमि**ति । मनसा यच्छुभमशुभंवा कर्म कृतंतत्फलंकर्मान्तरवशेन राज्ञ्यांजातोजातस्तस्यामनोद्वारेणैव सुखंदुःखरूपंक्षिप्रमुपभुङ्क्ते । एवंवाचिकं शुभाशुभफलंच शरीरद्वारेणैव मृदुव्याधितत्वादिनानुभवति ॥ ८ ॥ **शरीरजैरि**ति । श्वशूकरखरोष्ट्राणां इत्यादिना शारीरवाचिकमानसानांकर्मणांयोभ्यन्तरप्राप्तिफलत्वमपि वक्ष्यतइदंसयदि प्रायशोधर्मंसेवते । धर्ममल्पशः दुरितबाहुल्याभिप्रायेण व्याख्येयम् । बाहुल्येन शारीरकर्मपापैः कृतैः स्थावरत्वंमनुष्यः प्राप्नोति । बाहुल्येन वाकृतैः पक्षित्वंमृगत्वं । बाहुल्येन मनःकृतैश्चाण्डालादित्वंप्राप्नोति ॥ ९ ॥ **वाग्दण्ड**इति । यस्य वाङ्मनःकायकानां अशुभानांसंकल्पव्यापारपरिहारेण बुद्धाववस्थितंसत्रिदण्डी उच्यते । न तु दण्डत्रयसाधारणमात्रेणैव ॥ १० ॥ **त्रिदण्डमि**ति ।

**[ वाग्दण्डोहन्तिविज्ञानंमनोदण्डः परांगतिं ॥ कर्मदण्डस्तु लोकांस्त्रीन् हन्यादपरिरक्षतः ॥१॥**
**वाग्दंडेमौनमातिष्ठेत्कर्मदण्डेत्वनश्नतां ॥ मानसस्य तु दण्डस्य प्रणायामोविधीयते ॥ २ ॥**
**त्रिदण्डंधारयद्योगीशारिरंन तु वैणवं ॥ वाचिकंकायिकंचैवमानसंचयथाविधि ॥ ३ ॥ ]**

इत्येषांवागादीनां अशुभानांसर्वभूतविषयंमनःसंयमनंकृत्वा कामक्रोधौ चेत्तद्दमनार्थंमनुष्योपि नियम्य शुभफलावाप्तिजातः न तु शारीरमेव कर्माणि कुर्वन्नपश्यामः । तच्च नश्वरमतः कोसौ सिद्धिंप्राप्नोतीत्याह ॥ ११ ॥

**य**इति । यस्य लोकप्रसिद्धात्मनः शरीराख्यस्ययः कर्मप्रवर्तयिता तंक्षेत्रज्ञंविद्वांसः कथयन्ति यः पुनरेषव्यापारंकरोति शरीराख्यंसपृथिव्यादिभूतमयत्वात् भूतात्मेति विद्वद्भिरुच्यते ॥ १२ ॥ **जीवसंज्ञ**इति । शरीरक्षेत्रज्ञव्यतिरिक्तोन्तःशरीरेऽन्यआत्मार्थत्वादात्मा जीवाख्यः सर्वक्षेत्रज्ञानांसहजआमोक्षप्राप्तेस्तेच तेषामाधियोगत्वेन कारणभूतेन क्षेत्रज्ञः प्रतिजन्मसुखंदुःखंचानुभवत्येतच्चात्र मनोजीवशब्देन निर्दिष्टं । येनेतिकरणविभक्तिनिर्देशादुत्तरश्लोके च तावुभौ महान् क्षेत्रज्ञ एवचेति महच्छब्देन प्रत्यक्कर्मणा ॥ बुद्धिर्मनोर्थविज्ञानंविकारः प्रथमस्तथा ॥ पर्यायवाचकाः शब्दामहतः परिकीर्तिताः ॥ इतिमहात्मनोपर्यायत्वात ॥ १३ ॥ **ताविति** । तौ द्वौ मनःक्षेत्रज्ञौ पृथिव्यापस्तेजोवाय्वाकाशाख्यभूतसंयुक्तौ परमात्मानंवक्ष्यमाणमुत्कृष्टावकृष्टेषु व्यवस्थितं व्याप्य तिष्ठतः परमात्मा वा सर्वस्थव्याप्तत्वात्तंव्याप्य तिष्ठतइत्युच्यते । तथाचव्यासः ॥ द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरएव च ॥ क्षरः क्षर्वाणि भूतानि कूटस्थोक्षरउच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ योलोकत्रयमाविश्य बिभर्त्यव्ययईश्वरः ॥ अक्षरःक्षेत्रज्ञःकूटस्थत्वंच तस्यामोक्षप्राप्तेःकर्तृभोक्तृत्वानिवृत्त्या ॥ १४ ॥ **असंख्या**इति । तस्यापरमात्मनः शरीरात् वेदान्तोक्तप्रकारेणाविद्यावशावाप्वेरितादुरुदधेरूर्मयइवानन्ताःक्षेत्रज्ञात्प्रादुर्भवन्ति । ये क्षेत्रज्ञादुत्कृष्टापकृष्टानि शरीराणि सर्वदा कर्मसु प्रवर्तयन्ति ॥ १५ ॥ **पञ्चभ्य**इति । **शरीरंयातनार्थीयमन्यदुत्पद्यतेदृढं** ॥ दुष्कृतिकारिणांमनुष्याणांपञ्चभ्यएव पृथिव्यादिभूतभागेभ्यः मात्राख्येभ्योन्यज्जरायुजादिशरीरव्यतिरिक्तंशरीरंपीडाप्रयोजनोत्पन्नंदृढंपरलोकउच्यते ॥ १६ ॥ **तेनेति** । तेन शरीरेण तायमसंबन्धिन्योयातनादुष्कृतिवतानुभूतान भवन्ति । तच्छरीरारंभकाणि पृथ्व्यादीनि भूतानि तेष्वेव भूतभागेषु तन्मात्राख्येषु यथास्वंप्रलीयन्ते ॥ १७ ॥ **स**इति । सक्षेत्रज्ञोऽसुखोदयानि प्रतिशब्दस्पर्शरूपरंसगन्धाख्यविषयोपभोगजानि यमलोके दुःखान्यनुभूयानन्तरमपहतपाप्मा तावेव महत्परमात्मानौ महावीर्यौ द्वावाश्रयति ॥ १८ ॥ **ताविति** । तौमहत्परमात्मानावेव त्रस्तौ तस्यक्षेत्रज्ञस्य धर्माधर्मौ सह विचारतोयाभ्यांयुक्तोक्षेत्रज्ञःपरलोकेहलोकयोः सुखदुःखंप्राप्नोति ॥ १९ ॥ **यद्याचरतीति** । सक्षेत्रज्ञोयदिबाहुल्येनधर्ममनुतिष्ठति स्वल्पमधर्मंतदातैरेवपृथिव्यादिभूतैः युक्तःपाञ्चभौतिकशरीरःस्वर्गेसुखमनुभवति ॥ २० ॥ **यदीति** । यदि पुनरसौ क्षेत्रज्ञोबाहुल्येनाधर्ममनुतिष्ठति । स्वल्पंधर्मंतदा तैरैहिकशरीरारंभकैर्भूतैः परित्यक्तः पञ्चभ्यएवमात्राभ्यइत्याद्युक्तनीत्या कठिनशरीरोयाम्यायातनाःप्राप्नोति । एतेनैतदुक्तंभवति । अधर्मबाहुल्येन याम्यायातनाअनुभवति । अधर्मबाहुल्येन पुनर्धर्मफलंपरलोकेनुभूयाधर्मफलमिहलोके एवोपभुंक्तइति ॥ २१ ॥ **यामीरिति** । सक्षेत्रज्ञः तायाम्यायातनास्तेन क्रूरशरीरेणानुभूय ततोपहतपाप्मनाऽन्येयेजरायुजादिशरीरारंभकान् पृथिव्यादिभूतभागानपुनरप्येत्यैहिकंशरीरंगृह्णातीत्यर्थः ॥ २२ ॥ **एता**इति । अस्य क्षेत्रज्ञस्यैताधर्महेतुकाः स्वर्गादाविष्टानिष्टशरीरप्राप्तीः स्वबुध्यां ज्ञात्वा धर्मानुष्ठाने सर्वदा मनोविकुर्यात ॥ २३ ॥ **सत्त्वमिति** । सत्त्वरजस्तमांसि त्रीणि वक्ष्यमाणलक्षणान्यात्मधर्मान् जानीयाद्यैर्युक्तोमहात्मा इमान्सर्वान्स्थावरजङ्गमरूपान् पदार्थान् निःशेषेण व्याप्यस्थितः सर्वगत्वात् ॥ २४ ॥ **य**इति । एषांसत्त्वादीनांमध्याद्योगुणः पूर्वकर्मवशेन यस्मिन्कालेतिशयेन शरीरे अधिकीभवति सगुणस्तस्मिन्कालेतंक्षेत्रज्ञंतंवशवर्तिनंकरोति । ततश्च तत्साधर्मेवाधर्मे प्रवर्तते ॥ २५ ॥ इदानींसत्त्वादीनांलक्षणमाह **सत्त्वमिति** । यथावद्वस्तुस्वभावोज्ञानं तत्सत्त्वं । एतद्विपरीतमज्ञानंतत्तमः विषयाभिलाषमानससर्वं रजइमे ससर्वप्राण्यवच्छिन्नएषांसत्त्वादीनांव्यभिचारी स्वभावः ॥ २६ ॥ अन्यान्यप्येवंलक्षणान्याह **तत्रेति** । तस्मिन्नात्मनि विनैव प्रीतिहेतुना यत्संवेदनंप्रीतियुक्तं अस्तमितक्लेशं अप्रकाशरूप-

मनुभवेत् तत्सत्त्वंजानीयात् ॥२७॥ यदिति । यत्पुनः संवेदनंदुःखात् विद्धमनएव सत्त्ववच्छुद्धये आत्मप्रीतेरजनकंसर्वदा च शरीरिणं विषयस्पृहोत्पादकं तद्दुर्निवारत्वाद्रजोनविद्यमानप्रतिपक्षे रजोजानीयात् ॥ २८ ॥ यदिति । यत्पुनः सदसद्विवेकशून्यमस्पष्टविषयाकारासत्त्वभावमतर्कणीयत्वरूपमन्तःकरणाभ्यांविज्ञातुमशक्यंतत्तमोजानीयादेवंच स्वरूपावधारणप्रयोजनंसत्त्ववृत्त्यवस्थितौ यत्नवान्स्यादिति ॥ २९ ॥ त्रयाणामिति । एषांसत्त्वादीनांत्रयाणामपि यथाक्रमं उत्कृष्टमध्यमनिकृष्टरूपकार्योत्पत्तिस्तांनिःशेषेण वक्ष्यामि ॥ ३० ॥ वेदाभ्यासइति । वेदाभ्यासकृच्छ्राद्याचरणशास्त्रावबोधोपवृद्धारिशौचंइन्द्रियसंयमोदानादिधर्मानुष्ठानंचात्मध्यानमित्येतत् सत्त्वाख्यगुणसंबन्धिकार्यम् ॥ ३१ ॥ आरम्भरतितेति । फलार्थकर्मारम्भायासकृत्ता स्वल्पेप्यनर्थे वैक्लव्यं शास्त्रविरुद्धकर्माचरणमनवरतं शब्दादिविषयोपभोगइत्येतत् रजोभिधानगुणसंबन्धिकार्यम् ॥ ३२ ॥ लोभइति । अर्थपरत्वं निद्रालुता कातर्यं नैर्घृण्यं धर्माद्यभावबुद्धिराचारलोपोयाचनशीलत्वं धर्मादिष्वनवधानमित्येतत् तमोभिधानगुणकार्यम् ॥ ३३ ॥ त्रयाणामिति । एषांसत्त्वादीनांत्रयाणामपि गुणानांत्रिषु कालेषु भूतभव्यभविष्यद्वर्तमानेषु वर्तमानानामिदंवक्ष्यमाणसांक्षेपिकंक्रमेण गुणलक्षणंविज्ञेयम् ॥ ३४ ॥ यत्कर्मकृत्वाकुर्वंश्चकरिष्यंश्चैवलज्जतइति । यत्कर्मातीतवर्तमानानागतकालानामन्यतमस्मिन् काले द्वयोर्वा कालयोः सर्वेषु कालेषु कर्तुर्लज्जांजनयति तत् सर्वं शास्त्रविदा तमःकार्यत्वात्तमोभिधानगुणलक्षणंबोद्धव्यम् ॥ ३५ ॥ येनेति । इहलोके महतींकीर्तिप्राप्नुयामित्येवमर्थमेव यत्कर्म करोति न च परलोकार्थंन च तत्कर्मसंपत्तौ दुःखीभवति तद्रजःकार्यंविज्ञेयम् ॥ ३६ ॥ यदिति । यत्सर्वात्मना ज्ञानविषया इच्छा भवति यच्च कर्म कुर्वन्कालत्रयेपि न लज्जति येन कर्मणाचर्यमाणेनास्य तुष्टिर्जायते तत्सत्त्वाख्यस्य गुणस्य लक्षणम् ॥ ३७ ॥ तमसइति । सत्त्वस्यलक्षणंधर्मःश्रेष्ठ्यमेषांयथाक्रमं ॥ कामप्रधानता तमसोलक्षणमर्थपरता रजसोलक्षणंधर्मनिष्ठता सत्त्वलक्षणमेषांच कामादीनांपरस्परश्रेष्ठत्वम् । कामादर्थः श्रेयानर्थमूलत्वात् कामस्य तयोरल्पोपि धर्मः प्रधानंसत्त्वात् तन्मूलात् ॥ ३८ ॥ येनेति । एषांसत्त्वादीनांगुणानांमध्याद्येन गुणेन सेव्यमानेन या गतिः पुरुषः प्राप्नोति ताः सर्वस्य जगतोगतीः संक्षेपतः क्रमेण वक्ष्यामि ॥ ३९ ॥ देवत्वमिति । ये सत्त्ववृत्त्यवस्थितास्ते देवत्वंप्राप्नुवन्ति । ये पुनारजोवृत्तिस्थास्ते मनुष्यत्वं ये तमोवृत्तिस्थास्तेनित्यंतिर्यक्त्वमिति ॥ ४० ॥ त्रिविधेति । येयंसत्त्वादिगुणनिमित्ता त्रिविधा गतिः उक्ता सा देशकालादिभेदेन संसारहेतुभूतकर्मभेदात् कर्मकर्माङ्गभूतदेवतादिविशेषाच्चोत्तममध्यमभेदेन पुनस्त्रिविधा बोद्धव्या ॥ ४१ ॥ स्थावराइति । स्थावरावृक्षादयः कृमयः सूक्ष्माभूशरणाः प्राणिनस्तेभ्यएव स्थूलाः कीटास्तथा मत्स्यसर्पकूर्मपशुमृगाइत्येषातमोनिमित्ता निकृष्टागतिः ॥ ४२ ॥ हस्तिनइति । हस्त्यश्वशूद्राम्लेच्छासिंहव्याघ्रशूकरइत्येतातमोनिमित्ता मध्यमा गतिः गर्हिता इति म्लेच्छानांस्वरूपानुवादः ॥ ४३ ॥ चारणाइति । चारणानटादयः सुपर्णोगरुत्माख्यः पक्षिविशेषोव्याजधर्मकारिणश्च पुरुषारक्षःपिशाचाजातिविशेषाइत्येषा तामसेषु मनुष्येषूत्कृष्टागतिः ॥ ४४ ॥ झल्लामल्लानटाश्चैवपुरुषाश्च कुवृत्तयइति । झल्लामल्लाश्च राजन्याद्व्रात्यादिति झल्लमल्लनटाउक्ताः शास्त्रबाह्याअतोविनयाश्च पुरुषाद्यौतमद्यशौण्डाश्चेत्यन्तेरजोनिमित्ता निकृष्टा गतिः ॥ ४५ ॥ राजानइति । राजानोभिषिक्ताश्च क्षत्रियाश्चानभिषिक्ताराजपुरोहिताः शास्त्रार्थकलहप्रियाः प्रिययुद्धश्चेत्येषा राजनिमित्ता राजसीगतिर्मध्यमा ॥ ४६ ॥ गन्धर्वाइति । गन्धर्वागुह्यकायक्षाजाति-

विशेषाये च देवानुयायिनोविद्याधरादयोऽप्सरसश्च देवगणिकाउदकोद्भवाअन्याश्चेत्येषांराजसेषु मनुष्येषूत्कृष्टागतिः ॥ ४७ ॥ **तापसा**इति। वानप्रस्थाभिक्षवोब्राह्मणापुष्पकादिविमानचारिणोयेदेवविशेषाः नक्षत्राणि दैत्याख्याजातिविशेषाश्चेत्येषा सत्त्वनिमित्ता निकृष्टागतिः तापस्यादिकर्माश्रयत्वात् सापि सत्त्वादिगुणनिमित्तकमेव इति चेत्तत्ता पसाइत्यनेन दर्शयति। न तु तापसजातिर्यतिजातिर्वा विद्यते। सन्तिवैतिहासिकदृष्ट्या मेर्वादिवासिनोजातिविशेषायतिप्रभृतयः। श्रूयतेचइन्द्रोयतीन् सालावृकेभ्यः प्रायच्छदिति ॥ ४८ ॥ **यज्वान**इति। यागशीलाऋषयोदेवावेदाभिमानिनश्च देवताविग्रहवत्योयथेतिहासेषु ब्रह्मसभायांवर्ण्यन्ते ते ज्योतींषि ध्रुवादीनि संवत्सराइतिहासदृष्ट्या विग्रहवन्तः। सोमपादयः पितरः साध्याश्च देवविशेषाइत्येषा सत्त्वनिमित्ता मध्यमा गतिः ॥ ४९ ॥ **ब्रह्माविश्वसृजोधर्मोमहानव्यक्तएवचे**ति। हिरण्यगर्भोमरीच्यादयः प्रजापतयोधर्मोविग्रहवान् महदाख्यप्रसिद्धतत्त्वविशेषाधिष्ठात्री देवता विग्रहवत्यव्यक्तस्य प्रधानस्य संबन्धिनीत्येतांसत्त्वनिमित्तामुत्कृष्टांगतिंविद्वांसआहुः ॥ ५० ॥ **एष**इति। एषवाङ्मनःकायाख्यसाधनत्रयभेदेन त्रिविधस्य कर्मणः सत्त्वरजस्तमोगुणभेदेनत्रिरूपः सर्वप्राणिगतः समग्रोगतिविशेषः कार्त्स्न्येन उक्तः सार्वभौतिकइत्युपादानात् अनुक्ताअप्यत्रगतयः प्रदर्शनार्थत्वेन संगृहीताबोद्धव्याः ॥ ५१ ॥ **इन्द्रियाणा**मिति। इन्द्रियाणांविषयप्रसङ्गेन निषिद्धाचरणेन कुत्सिताः संसृतीर्मूढाअकृतप्रायश्चित्तामनुष्यापसदः प्राप्नुवन्ति ॥ ५२ ॥ **यद्**इति। क्षेत्रज्ञोयेन येनेहकर्मणा कृतेन यांयांयोनिमस्मिल्लोँके प्राप्नोति तत् कर्मफलंसर्वक्रमेण शृणुतेति निषिद्धाचरणफलाभिधानोपन्यासार्थः श्लोकः ॥ ५३ ॥ **बहून्**निति। ब्रह्महत्यादिमहापातककारिणोबहून्वर्षसमूहान् भीषणान् नरकान् प्राप्य दुष्कृतक्षयादीषद्दुष्कृतशेषेणेमावक्ष्यमाणायोनीः प्राप्नुवन्ति ॥ ५४ ॥ **श्वशूकरखरोष्ट्राणा**मिति। श्वशूकरखरोष्ट्रगोछागैडकमृगपक्षिणांचण्डालानांशूद्रेण ब्राह्मणीजातानांसंबन्धिनींजातिंब्रह्महा प्राप्नोति ॥ ५५ ॥ **कृमिकीटपतङ्गाना**मिति। कृमिकीटशलभानांपुरीषभक्षिणांच पक्षिणांहिंसनशीलानांच व्याघ्रादीनांप्राणिनांचसंबन्धिनींयोनिंसुरापोब्राह्मणोयाति ॥ ५६ ॥ **लूताहिसरटाना**मिति। वृश्चिकसर्पकृकलासानांजलचारिणांचेति तिरश्चांमकरादीनांहिंसनशीलानांच पिशाचानांसंबन्धिनींब्राह्मणसुवर्णापहारी ब्राह्मणः प्राप्नोति ॥ ५७ ॥ **तृणगुल्मलताना**मिति। तृणानांदूर्वादीनां गुल्मानामप्रकाण्डानां कुप्यकादीनां आममांसभक्षिणांगृध्रादीनां दंष्ट्रिणांसिंहादीनां क्रूरकर्मकारिणांशबरादीनां संबन्धिनींजातिंशतवारान् गुरुदाराभिगामी प्राप्नोति ॥ ५८ ॥ **हिंस्रा**इति। ये प्राणिवधशीलास्ते आममांसभक्षागृध्रादयोभवन्ति। अभक्ष्यभक्षिणोये ते कृमयोजायन्ते। ये महापातकव्यतिरिक्ताः चौरास्ते परस्परभक्ष्यामत्स्यादयउत्पद्यन्ते। ये चण्डालादिस्त्रीगामिनस्ते प्रेताख्याः प्राणिविशेषाभवन्ति ॥ ५९ ॥ **संयोग**मिति। यावता कालेन पतितोभवति तावन्तंकालंब्रह्महादिभिश्चतुर्भिः सह संसर्गंकृत्वा परस्त्रियंच गत्वा ब्राह्मणस्वंच सुवर्णादन्यदपहृत्यैकेन ब्रह्मराक्षसाख्योभूतविशेषोजायते ॥ ६० ॥ **मणिमुक्ताप्रवालानी**ति। मणीन् पद्मरागादीन् मुक्ताविद्रुमाणि च विविधानि रत्नानि वैडूर्यहीरकादीनि लोभेनात्मीयभ्रमादिना सुवर्णकारयोनौ जायते। इत्येतच्च हेमकराख्यंपक्षिणमाहुः ॥ ६१ ॥ **धान्य**मिति। धान्यमपहृत्य मूषकोभवति कांस्यंहृत्वा हंसोजलंसेकाद्यर्थं हृत्वा प्लवशकर्टबलाख्यः पक्षी यत्तु सेकाकोवारीति तत्पानार्थंस्तोककस्यापि परातिशयदर्शनान्माक्षिकंहृत्वा दंशाख्यः कीटोजायते। क्षीरंहृत्वा काकोभवति। रसानिक्ष्वाम्लकादिसंबन्धिनंहृत्वा श्वानउत्पद्यते। गुडलवणादीनांपृथगुपादानात् घृतंहृत्वा नकुलोभवति ॥ ६२ ॥ **मांस**मिति। मांसंहृत्वा गृध्राख्यः पक्षी भवति। मेदोहृत्वा मद्गाख्यःपक्षी भवति।

तैलं हृत्वा तैलपकाख्यःपक्ष्युत्पद्यते । लवणंहृत्वा चीरीवाकाख्यः उच्चैःस्वरः कीटोभवति । दधिहृत्वा बलाकाख्यः पक्षीजायते ॥ ६३ ॥ **कौशेयमिति** । कोशकीटविवृत्तंपरंहृत्वा तित्तिर्याख्यः पक्षी जायते । क्षुमावृत्तंचासौ हृत्वा मण्डूकोजायते । कार्पासंतन्तुमयंपट्टंहृत्वा क्रौञ्चाख्यः पक्ष्युत्पद्यते । गांहृत्वा गोधाख्यः प्राणी भवति । गुडंहृत्वा वाग्दोमन्थाख्यः पक्षी भवति ॥ ६४ ॥ **छुच्छुन्दरिरिति** । सुरभिद्रव्याणि कर्पूरादीनि हृत्वा छुछुन्दरीराजदुहिताख्या मूषिकाभवति । पत्रात्मकंशाकंसर्षपादि हृत्वा मयूरोजायते ॥ ६५ ॥ **बक**इति । अग्निंहृत्वा बकाख्यः पक्षी जायते । गृहोपयोगिघटमुशलादि हृत्वा गृहकारी च रूढमक्षिकाख्यः कीटोभवति । कुसुंभादिरक्तानि वासांसि हृत्वा जीवंजीवकाख्यः पक्षी जायते ॥ ॥ ६६ ॥ **वृक**इति । मृगहस्तिनंवा हृत्वा वृकाख्यः प्राणी भवति । अश्वंहृत्वा व्याघ्रोभवति फलमूलेहृत्वामर्कटोजायते । स्त्रियंहृत्वा ऋक्षोवानरविशेषोभवति । पानार्थमुदकंहृत्वा स्तोककश्चातकोत्यन्तंपिपासुः पक्ष्युत्पद्यते । यानानि गन्त्र्यदीनि हृत्वा उष्ट्रोभवति । पशून्हृत्वा छागोजायते ॥ ६७ ॥ **यदिति** । यत्किञ्चिदसारमपि परधनमिच्छातोमनुष्योऽपहृत्वादत्तावदानादिकंच पुरोडाशाद्यशित्वा निश्चित्तंतिर्यक्त्वं प्राप्नोति ॥ ६८ ॥ **स्त्रिय**इति । स्त्रियोप्यनेन कल्पेन रूपेणेच्छातः परस्वंहृत्वा पापंप्राप्नुवन्ति । तेन च पापेनोक्तजन्तुस्त्रीत्वंताः प्रपद्यन्ते ॥ ६९ ॥ एवंनिषिद्धाचरणफलान्यभिधायाधुना विहिताकरणविपाकमाह **तेभ्यःस्वेभ्य**इति । ब्राह्मणादयआपदंविना अध्ययनादि कर्मत्यागिनोवक्ष्यमाणाः कुत्सितायोनीः प्राप्य ततोजन्मान्तरे शत्रुषु दासत्वंप्राप्नुवन्ति ॥ ७० ॥ **वान्ताशीति** । ब्राह्मणः भ्रष्टस्वकर्माऽग्निपिशाचोनाम भूतविशेषोज्वालामुखः छर्दिभुग्भवति । क्षत्रियः पुनः भ्रष्टकर्मा पूतनाख्यः पिशाचविशेषोगन्धघोणपुरीषसर्वभुक् जायते ॥ ७१ ॥ **चैलाश**इति । वैश्योभ्रष्टकर्मा मैत्राख्योज्योतिकनामाश्रयार्थमपिच्छिद्रन्यस्तदृष्टिपिशाचविशेषः पूयभुक् जन्मान्तरे भवति । शूद्रः पुनः स्वकर्माद्भ्रष्टः चैलाशकाख्यः कीटश्चेला उत्पद्यते तद्भक्ष्यश्च भवति ॥ ७२ ॥ **यथायथेति** । शब्दादिविषयोपभोगवर्धकायथा विषयोपभोगाभ्यासंकुर्वन्ति तथा तथा विषयेष्वेव तेषांप्रावीण्यमेकरसीभावोजायते ॥ ७३ ॥ **ततश्चकर्मणामिति** । तेल्पप्रज्ञायावद्यावन्निषिद्धविषयोपभोगाभ्यासंकुर्वन्ति तावत्तावदभ्यासतारतम्यापेक्षया तासु तासु तिर्यगादिजातिषु दुःखमनुभवन्ति ॥ ७४ ॥ **तामिस्रादिष्विति** । तामिस्रादिषु चतुर्थाध्यायोक्तेषुघोरेषु परिलुण्ठनंप्राप्नुवन्ति । असिपत्रवनादींश्च चतुर्थाध्यायोक्तांश्च बन्धनच्छेदनात्मकान् नरकान् प्राप्नुवन्ति इति पूर्ववाक्यादिहोत्तरत्र चानुषज्यते ॥ ७५ ॥ **त्रिविध**इति । नानाप्रकाराः क्रकचपाटनादिकाः पीडाःकाकोलूकैश्च भक्षणं तप्तकरंभसिकताभितापान् स्थालीषुपचनानि दुःखेन सोढुंशक्यानि प्राप्नुवन्ति ॥ ७६ ॥ **संभवानिति** । तिर्यगादिषु जातिषु नित्यंदुःखबहुलासु जन्मानि प्राप्नुवन्ति । तेषु सीतातपोपपीडनानि नानाप्रकाराणि भयानि प्राप्नुवन्ति ॥ ७७ ॥ **असकृदिति** । **बन्धनानिचकष्टानिपारप्रेष्यत्वमेवच** ॥ बहुशोगर्भस्थाने समुत्पत्तिंचातिदुःखावहामुत्पन्नस्य च गलसंकलादिविषमाणिबन्धनान्यन्यदासत्वंचोपगच्छन्ति ॥ ७८ ॥ **बन्धुप्रियवियोगा**इति । बान्धवैः सुहृद्भिः सह वियोगंदुर्जनैश्च सह एकत्रावस्थानंधनार्जनक्लेशंधनविनाशंमित्रार्जनक्लेशंशत्रुप्रादुर्भावंप्राप्नुवन्ति ॥ ७९ ॥ **जरामिति** । जरांचाप्रतिबन्धां व्याधिभिश्च पीडनमनेकप्रकारांश्च क्षुत्पिपासादिना तांस्तानुपतापान् मृत्युंचानपासनीयमासादयन्ति ॥ ८० ॥ **यादृशेनैवभावेनेति** । यथाविधेन सात्त्विकेन राजसेन तामसेन वा चेतसा यत् कर्म स्नानयागाद्यनुति-

इति तथाविधेन शरीरेण सत्त्वबहुलेन रजोबहुलेन तमोबहुलेन वा तत्तत्स्नानादिफलं उपभुङ्क्ते ॥ ८१ ॥ **एषइति** । **नैःश्रेयसंकर्मविधिविप्रस्येमंनिबोधत** ॥ एषा शुभाशुभानांकर्मणां अखिला उत्पत्तिर्युष्माकमुक्ता । इदानींब्राह्मणस्य स्वर्गमोक्षाद्यर्थंकर्मानुष्ठानमिदंवक्ष्यमाणंशृणुत ॥ ८२ ॥ **वेदाभ्यासइति** । वेदस्य ग्रन्थार्थतोऽभ्यसनं कृच्छ्रादितपः आत्मज्ञानमिन्द्रियजयोहिंसावर्जनंगुरुचर्येत्येतत् मकुष्टमर्थवर्गसाधनम् ॥ ८३ ॥ **सर्वेषामिति** । एषांवेदाभ्यासकर्मादीनां अध्यात्मिकंकर्मातिशयेन श्रेयसः साधनंपुरुषस्य स्यादिति वितर्केण ऋषीणांजिज्ञासामुत्पाद्योत्तरेण निश्चयइति ॥ ८४ ॥ **सर्वेषामिति** । तेषांवेदाभ्यासादीनांसर्वेषामपि मध्याद्उपनिषदुक्तोपासनाभिः परमात्मस्वरूपावधारणं प्रकृष्टंस्मृतम् यस्मात्सर्वविद्यानांतत्प्रधानंयतोमोक्षस्तस्मात्प्राप्यते ॥ ८५ ॥ **षण्णामेवतुसर्वेषामिति** । एषांपूर्वोक्तानांवेदाभ्यासादीनांषण्णांकर्मणांमध्यात्स्मार्तकर्मापेक्षया वैदिकंकर्म सर्वमिहलोकयोरतिशयेनस्वर्गादिसाधनंविज्ञेयम् । आत्मज्ञानस्यामृतफलत्वाद्विधानाद्वैदिकत्वाच्च तदपेक्षमन्यस्यवैदिकस्येदंश्रेष्ठमुच्यते अपि तु स्मार्तंकर्मापेक्षम् ॥ ८६ ॥ **वैदिकइति** । ज्योतिष्टोमादिवेदोक्तकर्मानुष्ठाने क्रमेणान्तर्भवन्ति । तथा च श्रौतस्मार्तादौ वेदाभ्यासोन्तर्भवति । तपश्च दीक्षोपसत्पयोव्रतादौ ज्ञानंचात्मज्ञानस्य समुच्चयेन वैदिककर्मणोपसर्गफलत्वादिन्द्रियसंयमश्च नमांसमश्नीयान्नमैथुनमुपेयादिति । कर्माङ्गत्वेनोक्तत्वादहिंसाच तस्मादेतांरात्रिंप्राणभृतः प्राणान्न छिन्द्यादितिभागत्वेनाभिधानात् गुरुशुश्रूषा च यथाकर्मानुष्ठानकारणभूतंवेदमधिगच्छतीत्येवंसर्वाणि वैदिकयोगेन भवन्ति ॥ ८७ ॥ **सुखाभ्युदयिकमिति** । सुखंकर्मग्रामादेवाप्तेः यतोऽभ्युदिते तत्सुखाभ्युदयिकसंसारप्रवृत्तिहेतुत्वाख्यम् । वैदिकंकर्म तथा निःश्रेयसोमोक्षस्तदर्थंकर्म नैःश्रेयसिकं संसारहेतुत्वान्निवृत्ताख्यमित्येवंकर्म वैदिकंद्विप्रकारंवेदितव्यम् ॥ ८८ ॥ एतदेव व्यक्तयितुमाह **इहचेति** । स्वर्गाद्यैहिकामुत्रफलता कामतया यत् क्रियते तत् काम्यं । निष्कामतया ज्ञानपूर्वकंतु तत् संसारनिवृत्तिहेतुत्वान्निवृत्तमुच्यते ॥ ८९ ॥ **प्रवृत्तंकर्मसंसेवन्देवानामेतिसाष्टर्यतामिति** । प्रवृत्तकर्माभ्यासेन देवानांसमानगतित्वंप्राप्नोति । निवृत्तकर्माभ्यासेन पुनः शरीरारम्भकाणि भूतानि अतिक्रामति मोक्षंप्राप्नोतीत्यर्थः ॥ ९० ॥ **सर्वभूतेष्विति** । तेषु तेष्ववश्यकर्तव्ययागेषु यद्यद्यादिदेवतान्तरमिवज्योतिरात्मैव तेन रूपेण तिष्ठतइत्येवंमन्वानआत्मयाजी सर्वेषु स्थावरजङ्गमात्मकेषु भूतेषु अहमेव व्यवस्थितइत्येवंसर्वभूतेष्वात्मानंमन्यमानः सर्वाणि भूतानि मय्यवस्थितानि इत्येवंमन्वानइत्येतत्सर्वतुल्यत्वेन पश्यन् स्वातंत्र्यंप्राप्नोति । न शरीरादिसंबन्धि तस्य पारतन्त्र्यंभवत्यपितु तथा जानन्नात्मज्ञानेसतिमुच्यते ॥ ९१ ॥ **यथोक्तान्यपीति** । शास्त्रनोदितान्यपि अग्निहोत्रादीनि परित्यज्य यावद्वैपुरुषोभाषते इत्यादिना चतुर्थाध्यायदर्शितश्रुतिप्रकारेण तान्यनुतिष्ठन्नात्मज्ञानेन्द्रियजयवेदाभ्यासेषु ब्राह्मणोयत्नंकुर्यात् ॥ ९२ ॥ **एतदिति** । एतद्वेदाभ्यासादिद्विजातीनांजन्मनः सफलत्वोत्पादकत्वात् जन्मनः साफल्यंविशेषेण ब्राह्मणस्य यस्मादेतत् संप्राप्य द्विजातिः कृतकरणीयोभवति न तु कर्मान्तरकरणेन ॥ ९३ ॥ **पितृदेवमनुष्याणामिति** । पितॄणांदेवतानांच वयंहव्यकव्यप्रदानभूताइत्येवंविधोऽवबोधोवेदएवाविनश्वरंचक्षुरिव तेषांसंप्रदातृत्वस्य वेदावगम्यत्वान्मनुष्याणामपि वयंहव्यकव्यासंप्रदातृत्वस्य वेदावगम्यतत्त्वादशक्यंच कर्तुंवेदशास्त्रंतदर्थस्यातीन्द्रियत्वात् प्रमातुंचाशक्यंकृत्स्नशास्त्रममूहस्याध्येतुमशक्यत्वादिति व्यवस्था ॥ ९४ ॥ **यावेदबाह्याइति** । यानि वेदविरोधीनि इत्यागमाभासरूपाणि शास्त्राणि यानि च कानिचिद्विनैव शास्त्रेणापवर्गादिहेत्वाभासरूपाणि दर्शनानि

सर्वाणि तानि परलोके निष्फलानि यस्मान्नरकफलानि तानि मन्वादिभिः स्मृतानि ॥ ९५ ॥ **उपद्यन्त**इति । वेदव्यतिरिक्तानि यानि कानिचिच्छास्त्राणि पुरुषोद्भवत्वादुत्पद्यन्ते अतएवाशु विनश्यन्ति तानीदानींतनत्वान्निष्फलान्यसत्यरूपाणि च स्मृतीनांवेदमूलत्वान्नैतच्चोद्यावतारः ॥ ९६ ॥ **चातुर्वर्ण्य**मिति । यथागामहिष्यादीनां इतरेतरभेदइन्द्रियगोचरोतच्चातुर्वर्ण्यंवेदादेव प्रसिध्यति तथा वेदोक्ताग्निहोत्रकर्मफलोपभोगार्थत्वात् पृथिव्यालोकायिति वेदावेदैः प्रसिध्यन्त्येवमाश्रमाअपि चत्वारोब्रह्मचार्यादयः परस्परविलक्षणवैदिकगोचरत्वाद्वेदादेव प्रसिध्यन्ति । किञ्चपुनः अग्नौ प्रास्ताहुतिन्यायेन यत् किञ्चिदतीतंवर्तमानंभविष्यद्वा तत्सर्ववेदादेव प्रमाणंसिध्यति ॥ ९७ ॥ **शब्द**इति । **वेदादेवप्रसिध्यन्तिप्रभूतगुणकर्मतः** ॥ ये स्वर्गादिविमताउपभोग्यत्वेनाभिमताः शब्दादयोविषयास्तेऽभिमतविषयोपभोगोत्पत्यर्थंयदुपकारकंकर्माग्निहोत्रादिकंतदनुष्ठानद्वारेण वेदादेव प्रसिध्यन्ति ॥ ९८ ॥ **बिभर्ती**ति । नित्यंवेदशास्त्रंसर्वभूतानि धारयति । यथा च हविरग्नौ हूयते । सोग्निरादित्यंतर्पयति । तत्सूर्योरश्मिभिर्वर्षति । ततोन्नंभवति । ततोर्थैर्वै भूतानामुत्पत्तिः स्थितिश्चेह विज्ञायते इति ब्राह्मणम् । तस्माच्छास्त्रं एतच्छास्त्रंवेदस्य प्रकृष्टंवेद्मि प्रकृष्टंयस्मादस्याधिकारपुरुषस्येतत्पुरुषार्थसाधनम् ॥ ९९ ॥ **सैनापत्य**मिति । सेनाधिपतित्वंराज्यंदण्डनायकत्वंसार्वभौमैश्वर्याणि इत्येवमखिलंइष्टपुरुषार्थंवेदशास्त्रज्ञ अर्हतीति वेदप्रशंसा ॥ १०० ॥ **यथे**ति ।

[ नवेदबलमाश्रित्यपापकर्मरतिर्भवेत् ॥ अज्ञानाच्चप्रमादाच्चदहतेकर्मनेतरत् ॥ १ ॥ ]

यथातिप्रवृद्धोग्निः आर्द्रानपि वृक्षान् दहति एवंवेदज्ञानसामर्थ्यात् शिष्टाकरणनिषिद्धसेवनजंपापमात्मनोनाशयतीत्येवंच नकेवलंवेददृष्टप्राप्तिहेतुर्यावदनिष्टनिवृत्तिरपि ॥ १०१ ॥ **वेदशास्त्रार्थतत्त्वज्ञ**इति । यः पारमार्थिकवेदार्थज्ञो यदोषावबोधे सति रागादिप्रणोदात्यस्मिंस्तस्मिन्ब्रह्मचर्याद्याश्रमे व्यवस्थितोस्मिन्नेव लोके तिष्ठन्नेनैव शरीरेण ब्रह्मत्वाय संपद्यते ॥ १०२ ॥ **अज्ञेभ्य**इति । उभयोः प्रशस्यत्वे सत्यन्यतरस्य प्रवर्षविषयायांश्रेष्ठशब्दप्रयोगादोषदध्ययनाः अत्र अज्ञाभण्यन्ते नत्वत्यन्तमूर्खास्तेभ्योग्रन्थाध्यायिनः श्रेष्ठास्तेभ्यस्तदभ्यासनिरस्ताः प्रकृष्टास्तेभ्योपि तदर्थज्ञास्तेभ्योप्यनुष्ठातारोवराः ॥ १०३ ॥ **तप**इति । कृच्छ्रादितपआत्मज्ञानंच ब्राह्मणस्य प्रकृष्टंश्रेयःसाधनंयतस्तपसा पापमाहन्त्यात्मज्ञानेन मोक्षं प्राप्नोति ॥ ॥ १०४ ॥ **प्रत्यक्ष**मिति । धर्मस्य तत्त्वावबोधमिच्छता प्रत्यक्षानुमानेन शास्त्रंचवेदस्मृतिरूपं अनेकमन्त्रभेदभिन्नंसुविज्ञातंकर्तव्यंप्रत्यक्षानुमानस्वरूपावबोधेहिकर्मसाधनभूतद्रव्यगुणजातिसत्त्वविज्ञाननमंयुज्यते ॥ १०५ ॥ **आर्ष**मिति । ऋषिभिर्दृष्टआर्षोवेदोधर्मोपदेशस्मृतिस्तौ संदिग्धव्याख्यातपुनरुक्ताशङ्कायांवेदस्मृत्यविरोधिन न्यायेन तयोर्विचारयति सधर्मंजानाति न तु तर्कानभिज्ञः ॥ १०६ ॥ **नैःश्रेयस**मिति । तदपवर्गायथर्थंकर्मनिःशेषेण यथावदुक्तमतऊर्ध्वमस्य मानवस्य शास्त्रैकदेशआत्मज्ञानोपदेशपरत्वेनोपनिषद्रूपोभिधास्यते ॥ १०७ ॥ एवंरहस्याभिधानंप्रतिज्ञाय सकलकर्मानभिधानेन प्रतिज्ञाहान्याशङ्कायामाह **अनाम्नातेष्वि**ति । सग्रन्थकाग्रन्थकत्वेनोभयरूपत्वात् स्मरणस्यानुपदिष्टेषु धर्मेषु उपदिष्टेष्वपि चानुक्तेतिकर्तव्यता तेषु किंते कर्तव्याः उत नेति कथंवा कर्तव्याइति यदि संशयः स्यात्तदा यंवक्ष्यमाणाः शिष्टाः ब्राह्मणाब्रूयुः सनिश्चितोधर्मः स्यात् ॥ १०८ ॥ **धर्मेणाधिगत**इति । ब्रह्मचर्योक्तेतिकर्तव्यतया यैरङ्गमीमां-

साधर्मशास्त्रपुराणाद्युपबृंहकसंहितौवेदोधीतस्ते ब्राह्मणावेदगोचरपदार्थोपदेशकारणभूताः शिष्टाविज्ञेयाः ॥१०९॥ दशावरेति। यद्युत्पन्नयूनास्तदादश वक्ष्यमाणाविद्वांसोयस्यांपरिषदि तदभावे त्रयोवा यस्यांसाध्वाचारायंधर्मनिश्चिनुयात्तद्धर्मत्वेन प्रतिपाद्यम् ॥ ११० ॥ त्रैविद्यइति । वेदत्रयशास्त्रात्रयाध्येतारः श्रुतिस्मृत्यविरुद्धन्यायशास्त्रविदूहापोहार्थबुध्द्युपेतोनिरुक्तज्ञोमानवादिधर्माध्येता ब्रह्मचारिगृहस्थवानप्रस्थाइत्येषा दशावरा परिषत्स्यात् ॥ १११ ॥ ऋग्वेदविदिति । ऋग्यजुःसामवेदानांयेऽर्थज्ञास्तुयस्माद्धर्मसंदेहव्युदासार्थंत्र्यवरापरिषद्बोद्धव्या ॥ ११२ ॥ तदसंभवेपि एकइति । एकोपि वेदार्थज्ञोयंधर्मनिश्चिनुयात् सप्रकृष्टोबोद्धव्योन वेदानभिज्ञानां अयुतैरप्युक्तः। अयुतंदशसहस्राणि ॥११३॥ अव्रतानामिति । सवित्रादिब्रह्मचारिव्रतरहितानांवेदाध्ययनशून्यानांब्राह्मणजातिमात्रोपजीविनांसहस्राणामेकोभूतानांपरिषत्त्वंनास्ति धर्मनिर्णयासामर्थ्यात् ॥ ११४ ॥ यमिति । ये मूढाविवेकाभावात् तमोरूपाधर्मानभिज्ञाः सन्तः पापकारिणोयत्प्रायश्चित्तमुपदिशन्तितत्प्रायश्चित्तनिमित्तभूतंपापंशतगुणंभूत्वा तेषांप्रायश्चित्तदातॄणांभवति ॥ ११५ ॥ एतदिति । एतत्प्रकृष्टंश्रेयसोधर्मसर्वंयुष्माकमुक्तम् । एतदनुतिष्ठन् ब्राह्मणादिःस्वर्गापवर्गादि प्राप्नोतीति कृत्स्नंधर्मोपसंहारमेतत् ॥ ११६ ॥ एवमिति । सम्यग्ज्ञानणिमादिगुणयोगाद्देवोमनुरनेनैवोक्तेन प्रकारेणेदं सर्वधर्मस्य परमार्थंलोकहितेच्छया ममोक्तवानिति भृगुर्महर्षीणामाह ॥ ११७ ॥ इदानींयत्तदुक्तंमानवस्य शास्त्रस्य रहस्यमुपदेक्ष्यतइति तत्कथयन्नाह सर्वमिति । यत् मूर्तंपृथिव्यादि यच्चामूर्तमाकाशादि तत् सर्वमात्मन्येकीभूतमित्येवमेकाग्रोभूत्वा पश्येद्यस्मादहमेवेदंसर्वमित्येवं भावयन् रागद्वेषाभावादधर्मेमनोन कुरुते ॥ ११८ ॥ आत्मेति । इन्द्राद्याः सर्वदेवताः परमात्मैव नात्मव्यतिरेकेण नान्यादेवताः सन्ति । तथाचेन्द्रंमित्रंवरुणमग्निमाहुरथोदिव्यःससुपर्णोगरुत्मान् । एकंसद्विप्राबहुधावदंत्यग्निंयमंमातरिश्वानमाहुः इत्येव श्रूयते । सर्वंच जगत् परमात्मन्याश्रितंयस्मादेषक्षेत्रज्ञानांजगत्कारणभूतेन शास्त्रेणाशास्त्रितेनचकर्मणामात्मैव संबन्धंजनयति । तथा च भगवान् व्यासः । अज्ञोजन्तुरनीशोयमात्मनः सुखदुःखयोः । ईश्वरः प्रेरितोगच्छेत्स्वर्गंवाश्वभ्रमेवचइत्याह ॥ ११९ ॥ अधुना सर्वमात्मनि संपश्येदितियदुक्तंतत्र विशेषमाह खमिति । मनसीति । बाह्यमाकाशंशरीरगताकाशेनैव सहैकत्वेन भावयेदेवंचेष्टास्पर्शकारणभूतेन दैहिकेन वायुना सह बाह्यस्य वायोरैक्यंकोष्ठ्यंचाक्षुषतेजसा सह प्रकृष्टस्य तेजसोऽस्यादित्यारब्धस्यैक्यंशारीराभिरद्भिः सहापामैक्यंशारीरैश्च कठिनैर्भागैः पार्थिवैः सह बाह्यायाः पृथिव्यामप्यैक्येन मनसा सह चन्द्रंश्रोत्रेण सह विष्णोर्वीर्य्येण सह भगवदीश्वरस्य वागिन्द्रियेण अग्नेरपानेन्द्रियेण सह हिरण्यगर्भस्यैक्यंभावयेत् । एवमध्यात्मिकभूतादिभिः सहाभौतिकाधिदैविकानामैक्यंभावयेत् ॥ १२० ॥ १२१ ॥ प्रशासितारमिति । ब्रह्मादिस्तंबपर्यन्तानांव्यवस्थाकारिणंतथा चैतस्यैवाक्षरस्य विप्रशासने गार्गीगार्ग्यादिब्राह्मणंपरमाणोरपि सकाशात्सूक्ष्मतरमस्यामूर्तत्वात्सुवर्णवच्छुद्धरूपम् विसृतोभित्वाप्योऽशनायापिपासेस्तोकमोहजरामृत्युमप्येत्यादिब्राह्मणम् सुषुप्तावस्थायांविज्ञानोपमेयस्वरूपंपरमात्मानंविजानीयाद्दिदक्षुःसुषुप्तावस्थायांप्रत्यस्तमितसुखदुःखविशेषंक्षेत्रज्ञस्य रूपमेवंविधंसर्वदा परमात्मनइति स्वप्नसंदर्शनरहितावस्थासुषुप्तम् ॥ १२२ ॥ एनमिति । एनंच परमात्मानं अग्नित्वेन याज्ञिकाउपासते । तथा च तमेतमग्निरित्यध्वर्यवउपासतइति ब्राह्मणश्च यः पुनः सवतएव आत्मनोप्युच्चरन्तीतिश्रेष्ठत्वंश्रुतेर्मन्वाख्यामप्रजापतिरूपतयोपासतेत्यादिश्रुतेः प्राणमात्मानमेतमुपासतेऽन्ये पुनरविनश्वरपरमात्मरूपतयोपासते एवसर्वात्मकत्वात् परमात्मनः केचित्केनचिद्रूपेणैनमुपासते । तथा च तद्यादेनमेवंविद्यः यैरेवतैरुपासन्तइतिब्राह्मणम् ॥ १२३ ॥ एषइति । एषपरमात्मासर्वान् प्राणिनः पञ्चभिः पृथिव्यादिभूतैः

शरीरारंभकैः परिगृह्य प्राग्जन्मार्जितकर्मापेक्षयोत्पत्तिस्थितिनाशेन सकृदावर्तमानैः रथादिचक्रवदामोक्षान्नित्यंयोजयति ॥ १२४ ॥ **एवमिति** । एवंसर्वभूतेषु चात्मानमित्यादिनोक्तेन प्रकारेण यः सर्वभूतेष्ववस्थितमात्मानमात्मनाम-न्यते सरागद्वेषहानिंप्राप्यपरंस्थानंब्रह्मप्राप्नोति मुच्यतइत्यर्थः ॥ १२५ ॥ **इतीति** । इति समाप्तमार्यमेतन्मनुक्त-तंशास्त्रंभृगुणा प्रकर्षेणोक्तंद्विजातिः पठन् शास्त्रंविद्वान् विहितानुष्ठायी प्रतिषिद्धंवर्जयंश्च भवत्यतएवामुत्रभगवन्महेश्वरा-दिसायोज्यादिकामभिमतांप्राप्नुयादिति ॥ १२६ ॥ इतिश्रीभट्टमाधवात्मजश्रीगोविन्दराजविरचितायांमनुटीकायांश्रीम-न्वाशयानुसारिण्यांगुणत्रयविकर्मजातिनरकवेदप्रशंसात्स्वरूपनिर्णयोद्वादशोऽध्यायः समाप्तः ॥

---





# गोविन्दराजकृतटीकाशुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | **अध्यायः १** | |
| ४ | ७ | किन्नरा | किन्नराः |
| ८ | ८ | तन्मानामास्त्राभूत् | तन्माभूत् |
| ८ | १५ | सतत | सततम् |
| ८ | २७ | व्रंतचरणम् | व्रतचरणम् |
| ९ | ८ | समाश्रण | समाश्रयण |
| | | **अध्यायः २** | |
| १३ | १० | क्रमार्थ | क्रमार्थं |
| १४ | १० | दण्ड | दण्डं |
| १४ | १४ | देहि | देहीति |
| १६ | १६ | परमेष्टी | परमेष्ठी |
| ,, | २३ | सावित्री | सावित्रीं |
| २० | ८ | आनुरूपेण | आनुरूप्येण |
| ,, | २१ | पूज्यत्वै | पूज्यत्वे |
| ,, | ,, | स्तथैषां | स्तथैषां |
| २१ | ७ | स्वसुरादि | श्वशुरादि |
| २२ | २६ | व्यपदश | व्यपदेश |
| २३ | ६ | ध्ययं | ध्यायं |
| २३ | २३ | नियमान्नु | नियमाननु |
| २५ | ४ | नियुक्तोअ | नियुक्तोऽ |
| २८ | १२ | प्रामाविंदं | प्रामाविदं |
| ,, | १३ | तिमिच्छन् | गतिमिच्छन् |
| | | **अध्यायः ३** | |
| २९ | ३ | गार्हस्त्य | गार्हस्थ्य |
| ३० | ६ | दोषर्शनेन | दोषदर्शनेन |
| ,, | १३ | गार्हस्थपति | गार्हस्थ्यप्रति |
| ३१ | ८ | पेशाचासुरौ | पैशाचासुरौ |
| ३७ | २१ | समनतर | समनन्तर |
| ४२ | २० | फलेभ्योअपा | फलेभ्योऽपा |
| ४३ | २३ | दग्धाकव्य | दग्धाःकव्य |
| ४८ | १७ | स्येनृमाना | तृप्ताना |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | **अध्यायः ४** | |
| ५१ | २ | धर्नाजनंसचंय | धनार्जनंसंचयं |
| ,, | १५ | नष्ठान | नुष्ठान |
| ,, | २२ | नीन्द्रिया | न्निन्द्रिया |
| ५२ | ११ | पूजयेदिति | नपूयेदिति |
| ५३ | २५ | प्राणा | प्राण |
| ५५ | २६ | परिहणीयः | परिहरणीयः |
| ५६ | १० | उथायेति | उत्थायेति |
| ६४ | १७ | अप्रकरणे | अत्रप्रकरणे |
| ,, | १८ | णाकत्तव्यं | णांकर्तव्यं |
| ६५ | ८ | त्येंवं | त्येवं |
| ६६ | १० | भ्योज्यान्नाः | भोज्यान्नाः |
| | | **अध्यायः ५** | |
| ६९ | २६ | नेष्पि | नेष्वपि |
| ७० | १५ | दाढ्यार्थो | दार्ढ्यार्थो |
| ,, | १९ | विधिमांसं | विधंमासं |
| ,, | २० | नुप्यपाकृत | प्यनुपाकृत |
| ,, | २८ | नार्थ | नार्थे |
| ७१ | २० | वजयेत | वर्जयेत् |
| ,, | २४ | नाहंता | नहंता |
| ,, | २४ | नुमादेते | नुमोद्ते |
| ,, | २६ | त्वास्य | त्वस्य |
| ७२ | ४ | निभित्तां | निमित्तां |
| ,, | १४ | आश्रयणीयान | आश्रयणीयाः । न |
| ,, | २५ | स्पृश्यत्व | स्पृश्यत्वं |
| ,, | २७<br>२८ | यअध्यनाद्यर्थात्व | अध्ययनाद्यर्थत्व |
| ७३ | १० | स्नाते | स्नानेन |
| ७४ | ३ | सहस्येविकल्पः | सहविकल्पः |
| ,, | ४ | स्थेति | स्थेसति |
| ७५ | १२ | श्रूद्रं | शूद्रं |
| ,, | १७ | यवदस्थानं | यद्वस्थानं |

| पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७६ | १४ | शुद्धः | शुद्धः |
| ७८ | ५ | नन्तरिक्षा | नान्तरिक्षा |
| ,, | १५ | नाशुचीनभवन्ति | नाशुचीनिनभवन्ति |
| ८० | २१ | थंमुक्तं | थंमुक्तं |

## अध्यायः ६

| पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८१ | १७ | यताने | यतान |
| ८२ | १० | कालाशिनो | कालाशनो |
| ,, | ११ | धनेरीति | धनैरिति |
| ,, | १६ | प्रागतथे | प्रगेतथा |
| ,, | २७ | दिताः | देताः |
| ८३ | १३ | रिष्ट्वा | इष्ट्वा |
| ,, | २३ | युक्त | युक्तः |
| ,, | २९ | नानुमान्येतति | नानुमन्येतेति |
| ८४ | ५ | मपेक्षते | मपेक्षेत |
| ,, | १० | कामार्थं | कामार्थं |
| ,, | ११ | रूपस्यादनृतार्था | रूपस्यानृतार्था |
| ,, | १९ | मात्रर्थ | मात्रार्थं |
| ८५ | १८ | भवती | भवति |
| ,, | ,, | येत | यते |
| ,, | २० | निरोधकुंभको | निरोधःकुंभकउ |
| ८६ | २७ | नेकं | नेकं |

## अध्यायः ७

| पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८८ | २० | भृत्यु | मृत्यु |
| ,, | २३ | व्यवस्था | व्यवस्थाया |
| ,, | २४ | श्रेतां | श्रैतां |
| ८९ | २ | हेतुतत्र | हेतुस्तत्र |
| ९२ | ३० | द्ययुध | द्यायुध |
| ९३ | ५ | येज | यजे |
| ९५ | १७ | येन् | तानि |
| ९६ | ५ | दृष्टानामह | दृष्टान्तमाह |
| ,, | १५ | रक्ष्यमामाणो | रक्ष्यमाणो |
| ९७ | ४ | र्कम | कर्म |
| ९८ | १६ | मान् | तान् |
| ९९ | १३ | पुनर्ह | पुनर्हे |
| ,, | २३ | स्वल्पा | स्वल्पाना |
| ,, | २४ | त्येचं | त्येवं |
| १०१ | २ | नः | न |
| १०२ | २३ | नि | ति |

## अध्यायः ८

| पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०३ | १९ | हिरण्यर्भ | हिरण्यगर्भ |
| १०५ | ५ | निधाय | निधेय |
| ,, | २६ | कर्मन | कर्म |
| १०६ | ६ | राजा | राज्ञा |
| १०६ | २८ | व्यमि | व्यामि |
| १०८ | १३ | मते | मैत |
| ,, | १६ | यौरी | यौरि |
| ,, | २० | यम | यं |
| ११० | १ | सर्वक्र | सर्वमृ |
| ,, | ६ | सुदासे | सुदासि |
| ,, | १६ | मुच्छा | मूर्च्छा |
| ,, | २३ | विशेषात् | विशेषान् |
| १११ | २२ | देय | देयं |
| ,, | ३१ | बन्धन | बन्धं |
| ११३ | १२ | हणे | हण |
| ,, | १६ | व्याति | व्यति |
| ११४ | २६ | तर्द्धेनाह | तद्धनार्हे |
| ११५ | ९ | रमम | र्मि |
| ११६ | २१ | चस्म | चतस्म |
| ,, | ३१ | यादक | यादृक् |
| ,, | ,, | तादक | तादृक् |
| ११७ | १३ | गुढो | गूढो |
| ,, | २६ | अजाश्वि | अजावि |
| ११८ | ६ | पुनभ | पुनर्भ |
| ,, | २१ | विनिष्ट | निविष्ट |
| ११९ | १९ | वाक्यारुष्य | वाक्पारुष्य |
| ,, | २३ | पेक्षा | पेक्ष्य |
| ,, | ३१ | मर्षि | मर्षा |
| १२२ | ३ | सरक्षणं | संरक्षणं |
| ,, | २४ | राजा | राज |
| ,, | २८ | भ्रण | भ्रूण |
| १२३ | २२ | वणु | वेणु |
| १२४ | ६ | प्रस | सप्र |
| ,, | १५ | चत्र | चात्र |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२५ | २ | किमुत | किमुता |
| १२६ | १७ | शम | शस्त |
| १२७ | १५ | कोपात | कोपात् |
| **अध्यायः ९** | | | |
| १३० | ८ | पतौ | पत्यौ |
| १३३ | १० | न्यमं | न्युमं |
| ,, | १२ | स्वामन | स्वामिन |
| **अध्यायः १०** | | | |
| १३५ | ३ | ध्यय | ध्ययन |
| १३६ | १७ | क्षित्र | क्षत्रि |
| १३७ | १५ | पुण्य | पुण्प |
| १३७ | २१ | व्रात्या | व्रात्यायां |
| १३८ | २ | सांभवात् | संवात् |
| ,, | ११ | क्षता | क्षत्रा |
| १४० | ३ | शुला | शूला |
| ,, | १३ | नुमृत | नमू |
| १४१ | २९ | वाणिज्यावा | वाणिज्यायाः |
| १४२ | ९ | सर्व | सर्वं |
| ,, | २८ | अशकु | अशकुव |
| ,, | ३० | ब्राह्मण | ब्राह्मणों |
| १४३ | ३ | नापि | नामापदि |
| १४४ | २९ | चरन्तो | चरन्त |
| **अध्यायः ११** | | | |
| १४६ | ३ | शाव्य | शाठ्य |
| ,, | ५ | निमिमि | निर्मि |
| ,, | २९ | पराद्धा | पराद्धान् |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४७ | १६ | प्रसङ्कं | प्रसङ्गइ |
| १४८ | ७ | परि | पर |
| ,, | ९ | चौरश्वित्र | चौरःश्वित्रि |
| ,, | १० | तमा | तपा |
| १४९ | ९ | ध्यनं | ध्ययनं |
| ,, | २१ | रूपी | रूप |
| ,, | ३० | शूद्र | क्षुद्र |
| १५० | १७ | गुणो | गुणा |
| १५१ | २३ | जातिग | जातिर्ग |
| ,, | ३१ | या | याः |
| १५२ | १३ | स्तनं | स्तेनं |
| १५३ | २४ | द्राय | चान्द्राय |
| ,, | २६ | भाग | भागः |
| १५४ | १४ | स्यैच्छा | स्येच्छा |
| ,, | २८ | अभि | अर्भि |
| ,, | ३० | प्राणी | प्राणि |
| १५५ | ६ | ना | ने |
| ,, | २० | स | सं |
| ,, | २१ | श्रू | शू |
| १५६ | १९ | क | का |
| १५७ | १३ | द्विज | द्विजा |
| १५९ | २० | यावत | याव |
| १६० | ३१ | सु | स्तु |
| १६२ | ९ | कल्प | कल्म |
| **अध्यायः १२** | | | |
| १६३ | ७ | शरी | शरीर |
| १६९ | १९ | निरस्ताः | निरताः |